२५. २-३-४
आषाढ-आश्विन-पौष, २०४५
जून–सितम्बर–दिसम्बर, १९८८



## डा. चारुदेव-शास्त्रि-स्मृति-विशेषाङ्कः



# विश्व-संस्कृतम्

विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्
साधु-आश्रमः, होश्यारपुरम्–१४६ ०२१ (पंजाब)

# अनुक्रमणी

○

नवं वर्षं, नवो मासः,
नवं दिनं, नवं वयः !
नवा आशा, नवा स्फूर्तिः,
सर्वं स्यात् ते नवं नवम् !!

वर्षे नवे प्रतीक्षन्ते
त्वां हि नवोलब्धयः !
प्रेष्ठं श्रेष्ठं लभस्व त्वं
नितरां शरदः शतम् !!

—'वाचस्पतिः'

लवपुरीय-
श्रीदयानन्दकालेजतः
कार्तिकेऽसितचतुर्थ्याम्।

विपश्चिदपश्चिमे सुगृहीतनामधेये! नमस्ते। यद्गुण्या-
ऽत्रभवती सत्याग्रहगीताख्यपुस्तिकानिर्मितौ स्वं व्यापारित-
वती तन्नाम नितरां प्रसादयति नश्चेतः। अद्यत्वे विरला
एव जनाः श्रेयस्कामा ईदृशेषु पुण्येषु यशस्येषु च कर्मसु
प्रवर्तन्ते। नहि महात्मनां चरितस्तवनादृते ऽपरमाभ्युदयिकं
किञ्चित्। प्रायेणार्थमुद्दिश्यैव प्रवर्तते लोकः, सुधीरिति च
व्यपदिश्यते। परमल्पा एव सुकृतिनो मानवाः परेषां
शर्मणे यतन्ते, स्वकमर्थञ्च विनियुञ्जते, कष्टानि च
सहन्ते। अतः प्रकृतया कृत्या सर्वथा मान्यासि नः।
अवन्ध्यं ते जन्म। कृतिरपीयं बहुगुणा। एष हि प्रसत्ति-
मानुदात्तार्थगुम्फः पद्यरचनायामसामान्यां नैपुणीं भावत्कीं
विद्योतयति। निश्वसितप्रायश्च वाक्प्रसरः सुतरां हारी।
इमं प्रबन्धं प्रत्यहमालोचयामि। क्वचित् क्वचित् पदानि
परिवृत्तिसहानि प्रत्यवभासन्ते तानि तथा निर्देक्ष्यामि।
इतरदपि यच्छोधनार्हं तदपि साधूकृत्याचिरेण पुस्तिकां
प्रत्यावर्तयिष्यामि। आशासे पुण्यकर्मनिरता सर्वथा कुशलिनी
श्रीमतीति।

अनुग्रहमभिलाषुकः
चारुदेवशास्त्री॥

पं० चारुदेवशास्त्रिणः स्वहस्त-लिखितं
श्रीमतीं क्षमा-राव-पण्डितां प्रति प्रहितं पत्रम्

# विश्व-संस्कृतम्

## डॉ० चारुदेव-शास्त्रि-स्मृति-विशेषाङ्कः

वर्षम् २५ | आषाढ-पौष २०४५ वि० जून-दिसम्बर १९८८ ई० | अङ्कः २-४

## डॉ० चारुदेवः शास्त्री

### तस्य व्यक्तित्वं कृतित्वञ्च

डॉ० चारुदेवशास्त्री, संस्कृतव्याकरणं च, इत्येतौ पर्याय - प्रायौ। विशेषेण पाणिनीय-व्याकरणं साभिनिवेशम् अभ्यस्यन्नसौ 'अभिनव-पाणिनिः' इति पदेन सम्बोध्यते स्म संस्कृत-जगति।

व्याकरणं, अनुवादरचनां, प्रस्तावनिबन्धनं, जीवनचरित्रचित्रणं, साहित्यसमीक्षाम्— इत्यादीन् विविधान् विषयान् अधिकृत्य प्रवृत्तानां, परःसहस्रेषु पृष्ठेषु निबद्धानां, संस्कृत-ग्रन्थानां रचयितुः डॉ० चारुदेवशास्त्रिणो नाम संस्कृताऽध्येतॄणां जिह्वाग्रवर्त्ति।

पञ्चनद-प्रदेशे, होश्यारपुर-जिलाऽन्तर्गते, टाण्डा - उड़मुड़ - ग्रामयोः पार्श्ववर्त्तिनि, अहियापुर-ग्रामे, १८९६-तमे ईसाब्दे मई-मासस्य अष्टमे दिने श्री-चारुदेवः पितृवरस्य श्रीमतो रामकृष्णस्य गेहे श्रीमत्यां भागवन्तीदेव्यां मातरि अजायत।

आदौ टाण्डा - ग्रामस्थे ऐंग्लो-वर्नैकुलर-मिडल-स्कूले मिडल-परीक्षां, ततो जालन्धर - नगरस्थे साईंदास-ऐंग्लो-संस्कृत-हाई-स्कूले मैट्रिक - परीक्षां

समुत्तीर्य, असौ उच्च – शिक्षायै लाहौरस्थे डी० ए० वी० कालेजे प्रवेशम् अधिगतवान् । तत्राऽधीयानः श्री-चारुदेवः पंजाब-विश्वविद्यालयस्य एम० ए० (संस्कृत)-परीक्षां प्रथम-कक्षया प्रथम-स्थानेन च उदतरत् ।

१९२१-तमे ईसाब्दे श्री-शास्त्री जालन्धरस्थे डी० ए० वी० कालेजे अध्यापन-कार्यं स्वीकृत्य, कतिपय-मासानन्तरं लाहौरस्थे डी० ए० वी० कालेजे संस्कृत-प्राध्यापक-पदे नियुक्तोऽभूत् । १९४७-तमे वर्षे देश-विभाजनानन्तरम् अम्बाला-नगरे डी० ए० वी० कालेजे स्थापिते सति, श्री-चारुदेवः तत्र अध्यापयत् । तत्र कार्यं कुर्वन् १९५१ - तमे वर्षे ५५ - वर्षं - देशीयः श्रीचारुदेवः ततः सेवा-निवृत्तोऽभूत् । तदनन्तरम् अम्बाला-छावनीस्थे गान्धी-मैमोरियल-नैशनल-कालेजे वर्षद्वयम्, ततश्च नवदिल्लीस्थे पञ्जाब-यूनिवर्सिटी-कैम्प-कालेजे वर्षम् एकम् अध्यापयत् । आचार्य-विश्वबन्धु-वरस्य वयस्योऽयं सदैव विश्वेश्वरानन्द-वैदिक-शोध-संस्थानस्य शुभ-चिन्तकः आसीत् । कंचित् कालम् अत्राऽपि शिक्षण - विभागे एम०ए० (संस्कृत)-श्रेणीम् आदर-वृत्त्या अध्यापयत् ।

संस्कृताद् अन्यत्र हिन्दी-पञ्जाबी-मराठीषु भारतीय-भाषासु प्रावीण्यं लब्धवता डॉ० चारुदेवेन विदेशीयासु आंग्ल-जर्मन-फ्रैञ्च-रशियन-भाषास्वपि ज्ञानम् अर्जितम् आसीत् ।

सहृदयः श्री-चारुदेवो ललित-कलासु अनुरागं दधानः संगीतम् अपि साभिरुचि अभ्यस्यति स्म । वाग्मी प्रो० शास्त्री छात्र-कक्षासु पाठ-शिक्षणे, धार्मिक-वेदिकासु शास्त्र-प्रवचने वा, सामाजिकोत्सवेषु सार्वजनिक-व्याख्याने वा समम् एव वाणी-कौशलं प्रदर्शयामास । डॉ० चारुदेवशशास्त्री लेखनी-प्रयोगेऽपि पारङ्गतः कारयित्रीं भावयित्रीं चाऽपि प्रतिभाम् आत्मनि संयुञ्जानो नैकान् मौलिक-ग्रन्थान् शोध-निबन्धांश्च न्यबध्नात् । **श्रीगान्धि-चरितम्** अस्य प्रथमा मौलिक-गद्य-रचना संस्कृत-जगति सुविदिता । २३३२-पृष्ठेषु विस्तृतः पञ्च-खण्डात्मको **व्याकरणचन्द्रोदयः**, तथैव १२००-पृष्ठेषु विरचिता पञ्चसु खण्डेषु विभक्ता **उपसर्गार्थचन्द्रिका**—इत्येतौ अस्य महाग्रन्थौ प्रति-ख्यातिम् आप्तवन्तौ । अथ च **शब्दापशब्दविवेकः**, **वाक्यमुक्तावली**, **वाग्व्यवहारादर्शः**, **अनुवादकला**, **प्रस्तावतरङ्गिणी** इत्यादयोऽन्येऽपि ग्रन्थाः तस्य मनीषिणो गभीर - वैदुष्यं, व्याख्यान-वैशद्यं, लेखनी - कौशलं च प्रख्यापयन्ति ।

संस्कृतस्य अध्ययने, अध्यापने, अनुसन्धाने च विहिताम् अतिविशिष्टां सेवाम् अभिलक्ष्य तत्रभवान् डॉ० चारुदेवशशास्त्री भूयो भूयः सम्मानितोऽभूत्। १९६५-तमे ईसाब्दे अखिल-भारतीय-संस्कृत-साहित्य-सम्मेलनस्य स्वर्णजयन्ती-समारोहे राष्ट्रपतिना डॉ० राधाकृष्णेन डॉ० चारुदेवो 'विद्यावाचस्पति'-उपाधिना विभूषितः। १९७१-तमे वर्षे भारत-राष्ट्रपतिना विशिष्ट-प्रशस्तिपत्र-प्रदानेन सम्मानितः। १९७३-तमे ईसाब्दे अस्य विद्वद्वरस्य हीरकजयन्तीम् उपलक्ष्य पृष्ठसहस्रयुतं खण्डद्वयात्मकम् अभिनन्दन-ग्रन्थं समर्पयता लोकसभाऽध्यक्षेण श्री-गुरदियालसिंहढिल्लों-महोदयेन वर्धापितोऽयम्। १९८१-तमे वर्षे बनारस-हिन्दु-विश्वविद्यालयेन मानदेन 'डाक्टर-आफ़-लैटर्स्' (डी० लिट्०)-उपाधिना समादृतः। उत्तरप्रदेशीय-'संस्कृत-अकादमी'-संस्थया पञ्चदश-सहस्र-मुद्राभिः १९८२-तमे वर्षे पुरस्कृतः। तस्मिन्नेव वर्षे दिल्ल्यां डी० ए० वी० कालेज-प्रबन्धकर्तृ-सभया डॉ० शास्त्री अभिनन्दितः। १९८३-तमे वर्षे पंजाब-प्रशासनस्य भाषाविभागेन 'शिरोमणि-संस्कृत-साहित्यकार' इत्युपाधिना ५१००-मुद्राभिश्च सम्मानितः।

सरस्वतीं सेवमानेन डॉ० चारुदेव-शास्त्रिणा समाजसेवाऽपि श्रद्धया व्यधीयत। तेन महाभागेन निजे अभिजने एकं डी० ए० वी० माडल-स्कूलं, द्वे हाई-स्कूले चाऽपि बालकानां बालिकानां च कृते पृथक्-पृथक् स्थापितानि। दिल्ली-विश्वविद्यालयस्य पंजाब-विश्वविद्यालयस्य च, प्रत्येकम्, एम० ए० (संस्कृत)-श्रेण्यां सर्वोत्कृष्ट-छात्रायै छात्रवृत्तिरपि नियोजिताऽनेन।

डॉ० चारुदेवशास्त्रिणः प्रजातन्तुं तन्वाने द्वे एव सन्तती—डॉ० सत्यव्रतशास्त्री, अथ च श्रीमती उषा। अस्य स्नुषाऽपि श्रीमती डॉ० उषा संस्कृत-विदुषी। डॉ० सत्यव्रतः, तस्य च पत्नी डॉ० उषा, उभौ, संस्कृतस्य अध्ययने, अध्यापने, अनुसन्धाने, लेखने च अनन्यमनसा व्यापृतौ स्तः।

आसीद् यस्मिन् विद्या-विनययोः विरलः सङ्गमः, अवर्तत यत्र आचार-विचारयोर् एकवाक्यता, अविद्यत यस्य वाणी-लेखन्योः समं कौशलम्, अभूच्च यस्मिन् व्याकरण-साहित्य-सङ्गीत-प्रभृतीनां विविधानां शास्त्राणां कलानां चाऽद्भुतः समागमः, सोऽसौ महामना डॉ० चारुदेवशशास्त्री वयसा एकनवतिवर्षदेशीयो गते वर्षे (१९८७-तमे ईसाब्दे) मई-मासस्य अष्टमे दिने अपराह्णे ३.३५-वादने हृद्गत्यवरोधेन शाश्वतिकीं शान्तिम् अवाप।

—डॉ० वेदप्रकाशः 'वाचस्पतिः'

# अस्तं गतो व्याकरणांशुमाली

प्रा० हरिश्चन्द्ररेणापुरकरः
साहू बिल्डिङ्ग, ऐवानशाही रोड, गुलबर्गा (कर्णाटक)

दौर्भाग्यमेतत्खलु देववाण्या
यच्छब्दशास्त्रोज्ज्वल - भानुरेव ।
अपूर्व - पाण्डित्य - विलास - शोभी
श्रीचारुदेवोऽपि दिवं गतो हा ! ॥

श्रीपाणिनीयं पद - वाक्य - शास्त्रं
स्वाऽपूर्व - मेधाऽर्क - मयूख - जालैः ।
उद्भासयन्नव्य - मुनि - प्रकाण्डः
श्रीचारुदेवो नहि कस्य वन्द्यः ? ॥

आजीवनं पाणिनि - शब्दशास्त्र -
मालोडयन् पाणिनिरेव नव्यः ।
प्रणीय नैकान् सरसान् प्रबन्धान्
दुर्बोध - शास्त्रं सुगमं चकार ॥

चन्द्रोदयो व्याकरणस्य नाम
विशाल - पञ्चाऽश - विभवत-बन्धः ।
अलोक - सामान्य - सुतीक्ष्ण - बुद्धेः
प्रकाण्ड - पाण्डित्य - निदर्शनं वै ॥

दुरूह - दुर्बोध - विशुष्क - शास्त्र -
मसंख्य - वेदोपनिषत् - स्मृतीनाम् ।
पुराण - रामायण - नाटकाना -
मुद्धार - वाक्यैः सरसं चकार ॥

शब्दापशब्दाऽऽदि - विवेक - पूर्वं
प्रगाढ-साहित्य - निधि वगाह्य ।
प्रयोग - मुख्यं पद-वाक्य - शास्त्रं
संसाधयन् धन्यतमः स धीमान् ॥

अपाणिनीयानपि चार्ष - संज्ञान्
शिष्टानुशिष्टान् शतशः प्रयोगान् ।
प्रदर्शयन् व्याकरणाऽनुकूलान्
सुधन्यधन्यः खलु चारुदेवः ॥

स कारयित्र्या ह्यपि भावयित्र्या
समन्वितः सन् प्रतिभा-विधाभ्याम् ।
चकार गान्धीचरिताऽभिधानं
नितान्त - चेतोहर - गद्य - वन्धम् ॥

प्राचीन - नव्योद्धरणैरसंख्यै -
स्तस्योपसर्गार्थं - विवेचयित्री ।
ग्रन्थेषु नैकेषु विभक्तमाला-
प्रमाणमस्त्यस्य विदग्धतायाः ॥

भाषादृशा भागवतस्य तेन
कृता समीक्षाऽपि विशिष्य तस्य ।
सूक्ष्मेक्षिका - प्रौढ - विवेचकत्व -
गभीर - पाण्डित्य - निर्दशिकाऽस्ति ॥

तदीय - सद् - वाग्व्यवहार - दर्शी
स्वल्पो निवन्धोऽपि महत्त्वशाली ।
व्याख्या महाभाष्य - नवाह्निकानां
सर्वोपकारी ननु ह्येष ग्रन्थः ॥

अनेक - विद्या - स्थल - बोध - पीठैः
प्रशासनैर्मानपदैः प्रशस्तः ।
साहित्य - संगीत - कला - नदीष्णो
विद्या-विनम्रो खलु चारुदेवः ॥

अनेक - विद्यालय - बोधपीठे -
ष्वनेक - संवत्सर - बोध - सत्रम् ।
प्रचालयन् ज्ञान - महर्षिरेव
बभूव धन्यः खलु चारुदेवः ॥

ज्ञानाध्वरो नूनमखण्ड - रूपः
प्रवर्तितो ज्ञानमयेन पित्रा ।
पुत्रेण सत्यव्रतशास्त्रिणाऽपि
विद्या - विदग्धेन सुचाल्यतेऽग्रे ॥

सुधन्यधन्यः खलु चारुदेवो
यश्चारु - सन्तानमवाप धन्यम् ।
स्वकीय - पित्राऽऽतत - कार्यजातं
दक्षोऽस्ति यः सन्तनितुं पुरोऽपि ॥

पञ्चाम्बु - होश्यारपुर - प्रदेशे
ग्रामे लघीयस्यहियापुरेऽसौ ।
श्रीरामकृष्णात् किल भागवन्त्या-
मजायताऽष्टोन - शताब्द - पूर्वम् ॥

जालन्धरे माध्यमिकीं स्वशिक्षां
समाप्य लाहौरपुरं जगाम ।
डी०ए०वि० विद्यालयतः स लेभे
एम्०ए० उपाधिं प्रथमे क्रमाङ्के ॥

सर्वाधिकाऽङ्काऽधिगमात् स तत्र
सौवर्ण-मुद्राऽर्पण - सत्कृतोऽभूत् ।
प्राध्यापकः संस्कृत-देववाण्या-
स्तत्रैव लाहौरपुरे बभूव ॥

अध्युष्य तत्रैव शताब्द - पादं
पाकोद्भवे भारतमाजगाम ।
आचार्यकं चात्र बहुत्र कृत्वा
सम्मानपूर्वं समभून्निवृत्तः ॥

अखण्ड - सारस्वत - साधना सा
ह्याम्नाय-निष्ठाऽपि निरन्तरा सा ।
श्रद्धा परा ब्रह्मणि शब्दरूपे
श्रीचारुदेवस्य सुदुर्लभाऽद्य ॥

निरालम्बं शास्त्रं जगति पदवाक्याख्यकथितं
निराधारं विद्या - विनय - भरितं चारुचरितम् ।
निरानन्दा नूनं मुखर - वचनाऽम्भोज - मधुपाः
दिवं याते तस्मिन्नभिनव - महापाणिनि - मुनौ ॥

# डॉ० चारुदेवशास्त्रिणः कृतीनां परिचयः


**डॉ० रामप्रकाशः**

विश्वेश्वरानन्द वैदिक शोध संस्थानम्, साधु-आश्रमः, होश्यारपुरम्


संस्कृतभाषायाः प्रयोगविधौ अतीव शिष्टः, वाग्व्यवहारविशिष्टः, तेषां यथास्थानं यथाविधि प्रयोगकुशलश्श्रीचारुदेवः शास्त्री आसीन्महान् आधुनिको वैयाकरणः । तेन कृता महती सेवा संस्कृतभाषायास्तस्याः साहित्यस्य व्याकरणस्य च । तस्य जीवनस्य पंचाशद्वर्षेषु तेन व्याख्यातानां, विरचितानां, समालोचितानां च कृतीनां परिचयोऽत्र प्रस्तूयते—

## पुस्तकानि

१. **विक्रमोर्वशीयम्**, कालिदास-कृतम्, काटयवेम-टीका-सहितम्, रङ्गनाथ-टीकातः उद्धरण-सहितम्, मल्लिनाथादि-कृत-व्याकरण-टिप्पणी-सनाथम्, सम्पादितम्; लाहौर; १९२९-तमे ईसाब्दे ।

२. **गान्धि-चरितम्**, महात्मनो गान्धिनो जीवन-चरितम्, गद्यकाव्यम्; लाहौर; १९३०.

३. **मालविकाग्निमित्रम्**, कालिदास-कृतम्, काटयवेम-नीलकण्ठ-टीकोद्धरण-सहितम्, सम्पादितम्; लाहौर; १९३३.

४. **वाक्यपदीयम् (ब्रह्मकाण्डम्)**, भर्तृहरि - स्वोपज्ञवृत्त्या, वृषभदेव - वृत्त्या च सहितम्, सम्पादितम्; लाहौर; १९३४.

५. **कुन्दमाला**, दिङ्नाग - कृतं नाटकम्, सम्पादितम्; लाहौर; १९३७.

६ *A Manual of Sanskrit Translation*, संस्कृतानुवाद - पुस्तकम्; लाहौर; १९३९.

७. **अनुवादकला**, उपर्युक्तस्य हिन्दी-रूपान्तरम्; वाराणसी; १९५०

८. **प्रस्ताव-तरङ्गिणी**, संस्कृत-निबन्ध-संग्रहः; वाराणसी; १९५१.

९. **शब्दापशब्दविवेकः**, जालन्धर; १९५४.

१०. **वाक्यमुक्तावली**, जालन्धर; १९५६.

११. **महाभाष्यम्**, पतञ्जलि-कृतम्, प्रथमाह्निकत्रयम्, हिन्दी - टीका - सहितम्; दिल्ली; १९६२.

१२. **महाभाष्यम्**, पतञ्जलि-कृतम्, नवाह्निकम्, हिन्दी-टीका-सहितम्; दिल्ली; १९६८.

१३. व्याकरणचन्द्रोदयः, पञ्चखण्डात्मकः, दिल्ली ; क्रमशः, १९६९, १९७०, १९७१, १९७२, १९७३.

१४. श्रीमद्-भागवत-भाषा-परिच्छेदः, विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम् , होश्यारपुरम् ; १९८४.

## शोध-पत्राणि

१. भर्तृहरिः, समीक्षात्मकम् अध्ययनम् , वाक्यपदीयस्य, तस्य टीकानां च सन्दर्भे (आंग्लभाषया) ; अखिल-भारतीयप्राच्य - विद्यासम्मेलनम् , लाहौर, १९२८.

२. आर्य-संस्कृतिः, संस्कृतभाषादृशा, (आंग्लभाषया) डी०ए०वी० कालेज-रजत जयन्ती स्मारिका ; जालन्धर, १९४४.

३. किमुपकारा उपसर्गाः किमर्थकाश्च, 'सारस्वती सुषमा', वाराणसी ; १९५२ ; दिल्लीविश्वविद्यालयस्य संस्कृतविभागीया शोध - पत्रिका, १९६२.

४. वाग्व्यवहारः, 'सारस्वती सुषमा', वाराणसी, १९५० ; राजेश्वरशास्त्रि-द्रविड-अभिनन्दन-ग्रन्थः, वाराणसी, १९७०.

५. किन्निबन्धना पुण्य-पापयोर् व्यवस्था, 'सारस्वती सुषमा', वाराणसी, १९५१.

६. विश्वविद्यालयेऽध्यापनविधिः, 'सारस्वती सुषमा', वाराणसी, १९५२.

७. पर्यायवचनविवेकः, अखिलभारतीय - प्राच्य-विद्यासम्मेलनम् , लखनऊ १९५१.

८. पाणिनीये धातुपाठेऽर्थ-निर्देशः, जर्नल आफ ओरियण्टल रिसर्च , मद्रास, १९५७.

९. श्रीमद्भागवतभाषापरिच्छेदः, 'विश्वेश्वरानन्द इण्डालोजिकल जर्नल', होश्यारपुर, १९६४.

१०. संस्कृत-वाग्व्यवहारः, 'विश्वसंस्कृतम्', होश्यारपुर, १९६४.

११. दयार्द्रचेताः श्रीलाजपतः, ,, ,, १९६५.

१२. भट्टिकाव्यविमर्शः, ,, ,, १९६६.

१३. कश्चिद् व्यवहारदिशः, ,, ,, १९६७.

१४. कविर् अभिनवः, दिल्लीविश्वविद्यालयस्य संस्कृत - विभागीया शोध-पत्रिका, १९७१.

१५. किंस्विद् वेदाः पौरुषेया उताऽपौरुषेयाः, अखिलभारतीयप्राच्यविद्या - सम्मेलनम्, उज्जैन, १९७२.

१६. विवक्षातः कारकाणि भवन्ति, 'संस्कृत रत्नाकरः', जयपुर, १९७२.

# श्रीचारुदेवाष्टकम्

अभिराजो डॉ० राजेन्द्र मिश्रः
जालान गोरिस, १-बी०, डेनपसार, बाली (इण्डोनेशिया)

विद्याचारुं सदयहृदयं चारुकादम्बचर्यं
चर्याचारुं बुधजनसदश्चारुरत्नं महार्घम्।
चार्वाचारं सुकृतसुयशश्चारुमध्यात्मचारुं
चारुत्वोत्सं प्रथितविबुधं नौमि तं चारुदेवम्॥ १॥

संश्रूयन्ते श्रवणयुगलैर्यस्य सत्कीर्तिगाथाः
प्रेक्षावद्भिस्त्रिमुनिमहितैः शब्दशास्त्रप्रवीणैः।
यावज्जीवं ह्यधिगतशुचिज्ञानविज्ञानलोकं
विप्रं वन्दे कमपि तमहं भास्करं चारुदेवम्॥ २॥

सद्वैदुष्यं भुवि घनशिफाः कीर्तयो यस्य शाखाः
पुष्पं यस्य प्रथितरचनं मञ्जुलं वाक्यपदीयम्।
सन्माधुर्यं फलमपि चिरञ्जीवि सत्यव्रताख्यं
न्यग्रोधं तं प्रणमति न को भारते चारुदेवम्॥ ३॥

साहित्ये वा त्रिमुनिमहिते शब्दशास्त्रेऽथ वेदे
भाषाशास्त्रे विविधसरणौ दर्शनेऽन्यासु दिक्षु।
योऽभूज्झम्पाऽपतितचरणो वादिमध्येऽस्तशङ्कः
आचार्यं तं सुमतिशरणं मन्महे चारुदेवम्॥ ४॥

कीर्तिर्यस्य प्रसरजयिनी मञ्जुपाटीरवाटी-
निर्यल्लीलापवनवलिता गन्धयत्येव लोकम्।
जीवत्यद्याप्यनुमतगुणैर्भारते भा-रतो यस्-
तं नौमीड्यं प्रवरविदुषां शेमुषीसिद्धपीठम्॥ ५॥

जीमूतानां सरसनिनदो यस्य कण्ठान्तराले
नेत्रद्वन्द्वे प्रकृतिकरुणा शाम्भवो यन्निसर्गः।
हृद्गाम्भीर्यं जलनिधिनिभं लोलवेलेव हासः
आर्षप्रज्ञं सुर-तरुवरं नौमि तं चारुदेवम्॥ ६॥

यस्य स्फीता विमलचरिता कृण्वतो विश्वमार्यं
प्रज्ञा प्राज्ञैः शिरसि नितरां धार्यतेऽद्यापि लोके ।
पुण्यश्लोकं तममृतकथं पूर्वभूचारुदेवं
वन्दे प्रीत्या सुकृतनिचयैरद्य तं चारुदेवम् ॥ ७ ॥

विद्वत्कीर्तौ जननमरणप्रत्यवायो न कोऽपि
विच्छेदो वा न किल निखिले प्राज्यकालप्रवाहे ।
अस्माद्धेतोरजरममरं सार्वभौमञ्च च मत्वा
वन्दे वन्द्यं विततधिषणं चारुसारस्वतेयम् ॥ ८ ॥

विश्वविद्यालये ख्याते प्रायागीये प्रवाचकः ।
सम्प्रत्युदयनाख्ये च बालीद्वीपेऽतिथिर्गुरुः ॥ ९ ॥

मिश्रोऽभिराजराजेन्द्रश्चारुदेवं बुधोत्तमम् ।
सादरं स्तौति सश्रद्धं काव्यकातर्थ्यकामनः ॥ १० ॥



# श्रीचारुदेवशास्त्रिणां संस्कृतपत्राणि

**डॉ० सत्यव्रतशास्त्री**

पूर्व-कुलपतिः, श्रीजगन्नाथ-संस्कृत-विश्वविद्यालयः, पुरी (उड़ीसा) ;
आचार्यः, संस्कृत-विभागः, दिल्ली-विश्वविद्यालयः, दिल्ली

पुण्यश्लोकैः श्रीचारुदेवशास्त्रिभिस्तथाऽऽत्मा संस्कृताय समर्पितोऽभूद्यथा ते संस्कृतज्ञान् स्वबन्धून् स्वसुहृदश्च संस्कृतेनैव पत्राणि प्रैरिरन् । परश्शतानि तादृशानि पत्राणि तैः प्रेषितानि । यदि तद्बन्धवः तत्सुहृदश्च तेष्ववहिताः भवेयुस्तर्हि महानयं पत्रसङ्ग्रहः प्रकाशितः सन् बह्वुपकुर्वीतास्य जगतः । संस्कृतवाग्व्यवहारे यथा तेषां नैपुणी न तथाऽन्येषां बहूनां प्राचामपि, किमुतार्वाचाम् । ये हि महावैयाकरणस्य कविमूर्धन्यस्य भट्टेरपि काव्ये स्खलितानि निरदिक्षन्, "भट्ट्याद्यैः सूरिभिश्चापि सम्प्रदायो न रक्षित" इति चोदजूघुषन्, कस्तत्तुलामधिरोहेत् । तेषां सुरगवीगुम्फा न केवलं तद्ग्रन्थेषु तन्निबन्धेष्वेव वा जाग्रत्यपि तु तत्पत्रेष्वपीति संस्कृतवाङ्मये तान्यन्तर्भावमर्हन्ति । तेभ्योऽपि संस्कृतवाग्रचना तस्यास्तात्त्विकं स्वरूपं च ज्ञातुं शक्येतेति निर्मायं ब्रूमः । लोकस्याचार्यकं कुर्वाणाः शब्दप्रमाणका एते विद्वत्प्राग्रहरा यं कमपि विषयं संस्कृतेनोपास्थापयंस्तेनैव साधिष्ठः संस्कृतवाग्व्यवहारः शिक्षितुमशक्यत ।

अहं तेषां प्रियः पुत्र इति काले काले ते मां पत्राणि प्रैरिरन्संस्कृतेनैव । तेषु प्रायशः सर्वाण्येव मयि सन्ति । सोऽयममूल्यो मे सङ्ग्रहः । दिल्ल्यागमनात्पूर्वं तानि तैर्मां प्रति प्रेषितानि । देशविभाजनानन्तरं प्रथमं तेऽहियापुरमितिनामकं स्वजन्मस्थानं प्राप्तास्तदनु च महाविद्यालयसेवार्थमम्बालापुरीम् । अहं तु तदा वाराणस्यामधीयान आसम् । अतः पत्रमाध्यमेनैवावयोः संव्यवहारः प्रावर्तत । वाराणस्यामध्ययनं पर्यवसाय्याहं दिल्ल्यां प्राध्यापकरूपेण नियुक्तः । तदा पितृचरणा विश्वेश्वरानन्दवैदिकशोधसंस्थानेऽवैतनिकरूपेण कर्मरता आसन् । आसन्नवर्षद्वयं दिल्ल्यां व्यतियाप्य कञ्चित्कालमहं कुरुक्षेत्रे व्यत्ययापयम् । तदनु पुनरपि दिल्ल्यां नियुक्तिमापम् । तदाप्रभृति पितृचरणसेवावकाशो मया साक्षाल्लब्ध इति धन्यमात्मानं कलयामि । यावन्तं कालं तेभ्योऽहं दूरेऽभवं तावति काले तैर्नाना पत्राणि प्रेषितानि । तेषु नैके कौटुम्बिका विषयास्तैः स्पृष्टाः प्रबोधितश्चाहमनेकान् अर्थान् ।

पितृचरणा मम स्वास्थ्यविषये बहुचिन्तिता आसत। व्यायामस्तदर्थं सुतरामावश्यक इति ते मां बहुधाऽवोचन्। जनेन न केवलमध्ययनरतेनैव भाव्यं शरीरस्वास्थ्यायापि काश्चित्कालकलास्तेन विनियोज्या इति ते प्रण्यगदन्।

व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः॥

इति तेषामासीत्प्रियं पद्यम्। १३.९.१९५४-दिनाङ्के स्वग्रामादहियापुरात्प्रेषिते पत्रे व्यायामविषये ते मामित्थमवूवुधन्—"स्वे कर्मणि निरन्तरं व्यापृतोऽश्रान्तं च श्राम्यन् मा स्म शरीरे उदासितो भूः। इदं हि सत्तमं साधनं सिद्धीनां भृशं चोपकारकमायतेः।" कस्मिंश्चित्पत्रे मया लिखितं भवेच्छीर्षवेदना मेऽस्ति। ततः परतरं च कञ्चित्कालं नाहं पत्रं प्राहिणवम्। तदेवोद्दिश्याम्बालयतः (अम्बालातः) २३.३.१९५४-दिनाङ्के प्रेषिते पत्रे पितृचरणा मामलिखन्—"अद्य चिरं ते कुशलोदन्तस्य सम्प्राप्तस्य। कच्चित्स्वस्थोऽसि शरीरे? यत्त्वं क्वचित्पत्रेऽलेखीः - शीर्षवेदना मेऽस्तीति शिरोभ्रान्तिर्वा मे जायत इति तत्परामृशतोरावयोर्मनः सव्यथमास्ते। कथय कीदृशीदानीं ते शरीरसमवस्थेति। कर्हि विश्वविद्यालयो नैदाघस्यानध्यायस्य कृते संवरीता (कर्मणि लुट्), कर्हि च वाराणसीतः प्रतिष्ठाससे? संवृते विश्वविद्यालये वाराणस्यां स्थित्या नार्थः, निदाघप्रसरदोषाश्च प्रचुरा भवन्तीति मन्येऽप्रेलमासारम्भ एव तत्र प्रस्थानीयम्। अहं त्वप्रेलमासोपक्रम एव होश्यारपुरं प्रति प्रस्थास्ये। तत्रोपसर्गार्थचन्द्रिकायाः कृते जर्मनकोषान्मे बहु सङ्ग्राह्यमस्ति। यदीच्छसि त्वमपि तत्रैव मया समं पादोनं मासमवतिष्ठेथाः स्वमध्ययनं च प्रवर्तयेथाः। यथा ते रोचते तथा वा करिष्यसीति कामचारस्ते।" ३०.७.१९५९ - दिनाङ्के होश्यारपुरतः प्रेरिते पत्रे व्यायामविषये ममोदासीनतामुपलक्ष्य पितृचरणाः स्वकीयां मानसीं व्यथामित्थमाविरकुर्वन्—

"इदं च भूयोऽनुशास्मि त्वां शरीरे स्वेऽधातव्यमिति। कुतस्त्वां व्यायामभीरुत्वमुपस्थितम्। किं शङ्कसे व्यायामो विकरिष्यति ते कायम्। यद्येवमस्थाने शङ्कितं ते। श्लथाङ्गः पिचण्डिलस्ते कायो दुर्भरतामिवोपैति। मेदस उपचयो रुजां पृथग्विधानामगारमिति महतीं चिन्तां मे जनयति। शारीरीं समवस्थां ते चिन्तयन्नहं न क्षणमपि निर्वृणोमि। यदेतराञ् श्लिष्टावयवान् दृढाङ्गांस्तरुणान् पश्यामि स्पृहयामि तादृशस्त्वमपि स्या इति।

परमसकृत् प्रबोधितोऽपि न त्वमनिष्टामायतिमुत्प्रेक्षसे न च तां वारयितुं मनागपि चेष्टसे । वत्स ! कालस्तेऽयं शरीरं समाधातुम् । अतिक्रामति कालः अपुनरावर्ती चायम् । अद्य वत्सराः केचन प्रेरयतो मम । अप्येषा प्रेरणा फलवती भविष्यति ? बाढमारभे चैव व्यायाममिति वचसा निर्वापय तप्तं मे चेतः ।"

यथा व्यायामविषये पितृचरणाः काले काले मां प्राबूबुधंस्तथैवाध्ययनविषयेऽपि । आचार्यपरीक्षार्थं कथं मया प्रवर्तितव्यमितिविषये २७.११.१९५३ - दिनाङ्के प्रेषिते पत्रे ते मामित्थं निरदिक्षन्—"सर्वं प्रच्छनीयमिति सम्भावितं भाष्यादिस्थलमसकृदावर्तनीयम्, प्रश्नोत्तरमालया च निबन्धनीयं, गुरुचरणैश्च परिष्कारणीयम् । इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणामिति स्मरणीयम् ।"

पी-एच्० डी० इत्युपाध्यर्थं काशीहिन्दूविश्वविद्यालये भर्तृहरिकृतवाक्यपदीयस्य दिक्कालसमुद्देशावधिकृत्यानुसन्धानकर्मण्यहं प्रावृतम् । तद्विषयेऽपि पितृचरणाः काले काल इति कर्त्तव्यताप्रबोधनेन बहु ममोपाकुर्वन् । अम्बालयतः षष्ठे दिशाम्बरस्य वासरे (वर्षनिर्देशस्तत्र नास्ति) प्रेषिते पत्रे त एवमवोचन्—"हरिमतसंवादीनि तन्मतविसंवादीनि वाऽन्यदीयानि वाक्यानि यथास्थानमुपन्यसनीयानि, तत्तदर्थश्च सङ्ग्रहेण देयः । तात्पर्येऽवधातव्यं न तु पदार्थे । उद्धरणानीमानि पत्रपार्श्वमूले देयानि, न तु मध्ये, तत्र तु तदर्थ एव सङ्केत्यः । इति सर्वमालोच्य प्रक्रमः कार्यः ।"

१४. १२. १९५४—दिनाङ्के प्रेषित एकस्मिन्नपरस्मिन्पत्रेऽपि शोधप्रबन्धनिर्माणविषये विस्तरेण ते मां निरदिक्षन्—"त्वन्निबन्धनीयेऽर्थे त्विमां विधामनुविधेयामुत्पश्यामि : प्रथमं तावद् हरिणा कारिकाभिरुपनिबद्धोऽर्थ आङ्गलभाषान्तरेण सहचरितो विशदं संनिधाप्यः । पश्चाद् एके, अपरे इत्यादिकारिकागतं पदमाश्रित्य वैशेषिकाणां मतमिह हरिणा प्रत्यवमृष्टम् । तथा च प्रशस्तपादभाष्यादिषु तन्निबन्धनं दृश्यते किरणावल्यादिषु च विस्तरेण व्याख्यायते । सोऽयं सन्दर्भः प्रकृतार्थवैशद्यं करोतीति निखिलेनेहोद्ध्रियते । इत्यपोद्धृत्य तत्तद्ग्रन्थो देयः । निबन्धमध्ये तत्तदुद्धारार्थो देयः, पत्रपार्श्वे च मूलविन्यासः ससङ्केतः कार्यः । एवं क्रियमाणे निबन्धस्य ते कलेवरमपि पोषं पर्याप्तमाप्स्यति विषयश्च प्रतिपिपादयिषितः साधीयो विवरीष्यते ।"

दिक्कालसमुद्देशसमीक्षणनिर्णयात्पूर्वं कदाचित्स्फोटनिर्णयविषये मया पी-एच्० डी० इत्युपाध्यर्थमात्मा व्यापारणीयो वा न वेत्यर्थं पृष्टास्तातचरणा ७.१२.१९५३—दिनाङ्केऽम्बालयतः प्रेषिते पत्र इत्थं प्रत्यपीपदन्— "स्फोटविषयं चेदनुसन्धेयं पश्यसि तर्हि तत्रैवाध्ययनं सविशेषं प्रवर्त्यताम्। इदं तावद् व्यवसेयं पूर्वैर्यावद् विवेचितं ततोऽभ्यधिकं किञ्चिद्विवेच्यमस्तीत्याहो नेति। यदि नाम सन्त्यपरामृष्टा ग्रन्थाः पूर्वैरनालोकितास्तदा ध्रुवं तत्र नूत्नोऽर्थः शक्य उपज्ञातुम्। नूत्नार्थोपज्ञयैव च चारिताथ्यं स्वस्याभ्युपेयम्।"

पी-एच्० डी० इत्युपाध्यर्थं स्वकीयः प्रबन्धो मया वर्षद्वयावरे काल एव समुपस्थापयितव्य इत्यासीन्मम सङ्कल्पः। अल्पीयानेवासीन्मयि समयस्तं प्रणेतुम्, मासविशेष एव च तं समुपस्थापयितुम् इति चिन्ताचान्तचेता अहं पितृचरणान् स्वकीयां मनस्तान्तिमसुसूचम्। तज्ज्ञात्वा तैरहमित्थमनुशिष्टः—"अविदं ते वृत्तमवैषिं च चिन्ताजराक्रान्तोऽसुखितश्चासीति। सत्यमनल्पं ते कृत्यमल्पीयांश्च त्वदुपयोग्यः कालः। अगृहीततत्तद्ग्रन्थाशयस्त्वं कथं तत्तन्मतं सङ्गृह्णीयाः। कथं वा स्थाने तत्तन्न्यासं कुर्या इति गुरोस्ते ते ग्रन्था अध्येतव्याः सारग्रहायेत्यर्थादापद्यते। तथापि सततमभियुञ्जानस्त्वं तत्र सिद्धिमभीप्सितामाप्स्यसीति मा स्म विषदः। प्रारब्धं परिसमापनीयमिति धीयतां धीः।"

न केवलं मदीया शास्त्रचिन्तैव तन्मनसि, सततमवर्तत, मल्लौकिकसुखसौविध्यसम्पादनसमीहाऽपि या हि ३०. १२. १९५४—दिनाङ्केऽम्बालयतः प्रेषितात्पत्रादुन्नेतुं शक्यते—"पिण्डचस्तु प्रथमे सप्ताहे संस्कृताः स्थास्यन्ति। स सुजनो वाच्यः स्वयमुपेत्य ता आददीतेति। किञ्च, त्वत्सकाशे यान्यतिरिक्तानि कुतुपादीनि करण्डादीनि वा तानि प्रियं धर्मपालं द्वारीकृत्येह प्रहेयाणि यथा तानि त्वदर्थेऽर्थसम्प्रेषणे समुपयोगं नीयेरंस्त्वदीयश्च भारः कयापि कलया लाघवमियात्। घृतमात्राऽपि कियतीचित् सम्प्रेषयिष्यते प्रत्यग्रं समुत्पादिता।"

यद्यपि पितृचरणा निरन्तरं शास्त्रानुशीलनरता एवासंस्तथापि लौकिकज्ञानवैधुर्यं तेषां नाभूत्। महर्षिकण्ववत्तेऽपि यद्यपि नासन्वनौकसस्तथापि लोकेनासम्पृक्ता अपि लौकिकज्ञा अभूवन्। मां द्वितीयाश्रमोपसङ्क्रमयोग्यमुपलक्ष्य तद्विषयेऽपीतिकर्तव्यतार्थं ते मनो दधुः। कन्यापितरो यदा तान्प्राचूचुदंस्तदा ते तैः समगंसत कन्यकाश्चापि साक्षादक्षत। तादृशीं

कदाचित्कन्यकां साक्षात्कृतवता तेषां मनसि ये भावाः प्रस्फुटितास्तांस्त इत्थं प्राचीकटन्— "भिषग्वरस्य गुण्यां तां कन्यकामप्यवशं तया समं कामपि कालकलां समलापिषं च। सर्वथा निभृता गुणाढ्याऽपि सा यत्सत्यं मह्यं नारुचत्। वर्णो नास्ति यः स्पृहाविषयः स्यात्। अङ्गसौष्ठवमपि नास्ति यद् रुचिरं स्यात्। कान्तिस्तु दूरापेता। कुलं सर्वथान्वेषणीयसम्बन्धम्। डाक्टरोऽपि मधुर उदारः प्रश्रितश्च। परं कन्यकाया मुखाकृतिर्मुखवर्णश्च सुतरां शोभाविधुरौ। शरीरे किमपि वैवर्ण्यमपि लक्ष्यते। ईक्षणे च सहायापेक्षे। एवं सति किं क्रियताम् ?"

एकदा मत्पितृव्येण कस्यचनात्युच्चैः पदाधिकारिणः सुताया विवाह-प्रसङ्गो मदर्थं समुपस्थापितो यदुद्दिश्य नाना विकल्पाः पितृचरणानां मनसि प्रादुर्भूता ये वैवाहिके विषयेऽपि तेषां सूक्ष्मेक्षिकां गहनं च चिन्तनमभि-व्यञ्जन्ति — "बहुशश्चिन्तितोऽयमर्थो मया। उच्चैस्तरेण राज्ञार्मचितेनान्व-वायेन नोऽभिसम्बन्धो नः समुत्कर्ष्यतीत्येकः पक्षः। उच्चैरास्पदप्रतिलम्भेऽपि महीयोऽधिकारप्राप्तावप्यङ्गभावं यायाविति नासम्भवि। परमेतादृशे कुले सम्भूता कन्यका किंशीला भविष्यति, नम्रा वोद्धता वा, सेवापरा सेवापराङ्-मुखी वा, वृद्धेषु भक्तिमती वा निरपेक्षा वेति सन्देहास्कन्नोऽर्थः, त्वय्यप्यनुगुणं वर्तेतोत प्रतीपमिति सावलेपा गृहं निरयीकुर्यादित्यपि शङ्क्यते। सर्वथा-ऽन्यादृशोऽस्माकमाचारो विचारश्च तदन्वयाभ्विताद‍ाचाराद् विचाराच्च। तेन सर्वं साध्वालोच्य प्रक्रमः कार्यः। मा स्म वधमस्थाने पदमर्पिपाम।" (होश्यारपुरात् ६.११.१९५६-दिनाङ्के प्रेषितात्पत्राद‍ुद्धृतोंऽशः)।

अहमपि पितृचरणान् पत्राणि संस्कृतेनैव प्रेरिरम्। ते च तेषु यदि किमपि चिन्त्यमपश्यंस्तर्ह्यवश्यमेव तन्मां प्रत्यबोधयन्। तथाहि—१. षूच पैशुन्येऽदन्तः तेनाऽग्लोपित्वादुपधाह्रस्वो नेति असुषूचत् इति रूपम्। 'अह्नोऽह्न एतेभ्य' इति सर्वाह्ण इति भवति। स्फुर सञ्चलने इत्यस्य णिचि लुङि अपुस्फुरदिति रूपमात्वपक्षेऽपीति माधवीय-धातुवृत्तिः। अहियापुरतोऽगस्त्यस्य चतुर्थेऽहनि (वर्षसङ्केतस्त्वत्र नास्ति) प्रेषितात्पत्त्रादुद्धृतोंऽशः)।

२. "यच्चत्वया पूर्णचन्द्रमहं स्मर्तव्य इत्युक्तं तत्साधूकरणीयम्। न हि स्मरतिर्द्विकर्मकः। स्मारयतिरपि द्विकर्मको नेति दीक्षितः। गत्यादि-सूत्रे बुद्ध्यर्थकत्वेन ज्ञानसामान्यवचना जानातिप्रभृतयो गृह्यन्ते। स्मरतिस्तु ज्ञानविशेषवचनः। भवभूतिस्तु नैतदाद्रियते यदाह—य एव

दुस्सहः कालस्तमेव स्मारिता वयमिति । तेनाऽहं पूर्णचन्द्रेण स्मारयितव्य इति दीक्षितमतेन, पूर्णचन्द्रं स्मारयितव्यः, पूर्णचन्द्रतः मां स्मारयितव्य इति मतान्तरेण तत्र प्रयोज्यकर्मणि वा तव्यः । बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छयेति वचनात् ।" (अम्बालयतः २६.११.१९५३–दिनाङ्के प्रेषितात्पत्त्रादुद्धृतोंऽशः) ।

३. मनसिकृत्य मनसिकृत्वेति चोभयं साधु । अनत्याधाने उरसिमनसी इति विभाषा गतिसंज्ञाविधेः । (अम्बालयतः १५.३.१९५५)-दिनाङ्के प्रेषितात्पत्त्रादुद्धृतोंऽशः) ।

४. कर्मणि लुङि बहुवचने अदायिषत अदिषत इति रूपद्वयं भवतीति स्मरणीयम् । तत्र चिण्वद्भावकृतो विशेषः । (अम्बालयतः ९.३.१९५४–दिनाङ्के प्रेषितात्पत्त्रादुद्धृतोंऽशः ) ।

कदाचित्पितृचरणा जिज्ञासामपि व्याकरणविषयिणीं काञ्चन स्वपत्त्रे समुपास्थापयन् । प्राचोदयंश्च मां तत्समाधानाय काशिकान्मे गुरूनुपसत्तुम् । अम्बालयतः १५. ३. १९५५–दिनाङ्के प्रेषिते पत्त्रे ते निरदिक्षन्—

"इदं च ते गुरवो जिज्ञासितव्याः । विसंपूर्वाद् वदेर्विमत्यर्थे आत्मनेपदं भवत्युत नेति । भासनोपसम्भाषेत्यादिसूत्रे भासनादिषु विशेषणेषु सत्स्विति वृत्तौ स्थितम् । उपसर्गनियमस्तु नोक्तो विपूर्वता वा न नियता । विमतेरन्यत्र तु कामं परस्मैपदं भवतु यथा विसंवदन्त्यक्षराणीत्यादौ, विमतावात्मनेपदं कुतो न स्यात् ।"

पितृचरणानां होश्यारपुरीय-साध्वाश्रमस्थं विश्वेश्वरानन्दशोध-संस्थानं प्रति विशिष्टोऽनुरागोऽभूत् । काले काले ते तदुपासदन् । केवलमेकमवसरं विहाय यदा मातृचरणा अपि तैः सहासन्, त एकाकिन एव तदध्यवसन् । तत्र भोजनसंविधा साधीयसी नेति कदाचित्ते मामसूचन्—"इदानीमहं स्वकार्यनिरतोऽनन्यमनाः सुखं कालं नयामि । इदमेवैकं दुःखाकरोति नेह तादृशी भोजनसंविधाऽस्ति यादृशी ममानुगुणा स्यात् । सुलभे नाम दधिपयसी, परं ते याप्ये भवतो न प्रशस्ये । शाकाद्यपि न विविच्य पाकाय परिगृह्यते, किन्तर्हि यत्किमपि स्वल्पमूल्यं भवति तदादीयते । उपशयीत भोक्तुर्मा

वोपशयिष्ट तदिति नाद्रियते। (९.४.१९५४-दिनाङ्के होश्यारपुरात्प्रेषिता-त्पत्रादुद्धृतोंऽशः)।

यदा कुरुक्षेत्रे मे नियुक्तिर्जाता तदा मया सहयोगिषु छात्रेषु वा कथं वर्तितव्यमिति ते मामन्वशिषन्—"इदमेव तु विवक्षे—स्वे कर्मणि सर्वात्मना व्याप्रियस्व, आर्जवेन च गुरुषु वर्तस्व, विनेयेषु च हार्देनातिरिक्तेन प्रवर्तस्व। नान्यच्चिन्तय, न च रुष्य, न वाऽपरागमर्हति जने समीरय।" (देहलीतः १८.३.१९५८—दिनाङ्के प्रेषितात्पत्रादुद्धृतोंऽशः)।

एवं सन्ति बहुविधानि वाक्यानि पितृचरणानां पत्रेषूपदेशपराणि येषां सार्वकालिकं सार्वभौमिकं च महत्त्वम्। मामुद्दिश्य प्रणीतानि तान्यु-पदेशवचांसि मम सुतरामुपाकुर्वन्नन्येषामपि तथैवोपकुर्युरिति तानि विचार्य विचार्यमत्रोपन्यस्तानि। तादृशा विद्वत्तल्लजास्तथा वचांसि विन्यास्थन्यथा तानि सर्वस्य लोकस्योपकारकाणि भवितुमर्हन्ति। प्रातःस्मरणीयास्ते सम्प्रति कथाशेषतां गताः। तेषां वाग्गुम्फा अस्मान् सुपथे नयेयुश्चेत्फलेग्रहि स्यादस्माकं जीवितमिति नापेक्ष्यते बहु वचः। पत्रेषु तेषु तेषु स्थिता-स्तद्वाग्गुम्फा अन्येषामसुलभा अपि सुलभीक्रियेरन्नित्येतदर्थक एव नः प्रकृतो यत्नः। एतदेव वचः समुपन्यस्य निबन्धोऽयमुपसंह्रियत इत्योम्॥

—३/५४, रूप नगर, दिल्ली - ११० ००७.

# श्रीचारुदेव-प्रशस्तिः*

डॉ० बहादुरचन्द छाबड़ा

पी-६, हौज खास एन्क्लेव, नई दिल्ली - ११० ०१६

शब्दब्रह्म - समुद्र - मन्थन-चितै रत्नैरिवाऽत्युज्ज्वलैः,
सारासार-विचार-चारु-वचनैरावर्जयन् सज्जनान् ।
अद्याऽऽनन्दमयीं समाप्य शरदां पञ्चोत्तरां सप्तति
श्रीमन् पण्डित चारुदेव सुमते ! दिष्टचा भवान् वर्धते ॥

भर्तृहरेर्विख्यातो वाक्यपदीयाऽभिधोऽस्ति यो ग्रन्थः ।
चारुः सुचारु कृतवांस्तस्यैवोन्मोचयन् ग्रन्थीन् ॥

साक्षाद् भर्तृहरिं तं मन्ये श्रीचारुदेवमहम् ।
तस्येव यस्य बुद्धिः शास्त्रेष्वव्याहतं क्रमते ॥

सन्नपि वैयाकरणो भर्तृहरिरिवैष कविरस्ति ।
श्रीगान्धिचरितनाम प्रणीतमनेन यत् काव्यम् ॥

श्रीमतां चारुदेवानां देवानामिव जीवताम् ।
संस्कृता देववाणीयं जीवत्येव समञ्जसम ॥

धन्या संस्कृत-वाणी, धन्यास्तस्यामधीतिनः सुतराम् ।
तेषामेव यशस्वान् एकतमश्चारुदेवोऽस्ति ॥



---

* १९७१-तमे ईसाब्दे निबद्धा ।

*संस्मरणाञ्जि—*

# परलोकवासिनः पण्डितचारुदेवाः

डॉ० रामसरूपः 'रसिकेशः'
डी-१४१, राजेन्द्र नगर, दिल्ली

अद्यतः प्रायः षष्टिवर्षपूर्वं यदाहं लवपुरीय-दयानन्दब्राह्ममहाविद्यालयस्य छात्रः आसम् तदा मया प्रथमवारमेतदाकर्णितं यदस्माकं व्याकरणपत्रस्य प्रणेतारः पं० चारुदेवा भविष्यन्ति । ते हि प्रख्याता वैय्याकरणाः, डी०ए०वी० महाविद्यालये संस्कृतप्राध्यापकाश्च । अतः परीक्षार्थिसुलभा भीतिरिव उदभूत् मनसि यन्न जाने कीदृशान् कठिनान् प्रश्नान् प्रक्ष्यन्ति ते । परन्तु यदा परीक्षाभवने प्रश्नपत्रमधिगतं तदानुभूतं यत् प्रश्नास्तु नातिकठिना न चातिसरला, किन्तु सामान्यछात्रयोग्यतानुरूपा एव । परिणामे च घोषिते एतत् स्पष्टमभवत् यत्पण्डितवर्या उत्तरपत्रांकने न परुषाः किन्तु कोमला एव ।

## सुप्रतिवेशिनः

ततः कतिपयाऽब्दानन्तरं मम सौभाग्यात् पण्डितवर्याः कृष्णनगरस्य तस्यामेव वीथ्यामागत्यावासं भाटकेन गृहीतवन्तः यस्यामेवाहमपि भाटकदायि-रूपेण न्यवसम् । एवमावां प्रतिवेशकारणात् सुहृदौ सुपरिचितौ च जातौ ।

## निराडम्बरं जीवनम्

प्रायो हि प्राध्यापकाः आडम्बरप्रिया एवावलोक्यन्ते, किन्तु तत्र निवसता मयाऽनुभूतं यदेते महानुभावा अशनवसनावाससज्जादिविषयेषु उदासीना इव । एतेषां विशिष्टा रुचिस्तु अध्ययनाध्यापनयोरेव विद्यते ।

## वाग्मितोपलब्धिः

तेषां वाग्मितया प्रभावितोऽहमेकदा तस्या उपायमपृच्छम् । तेऽवदन्— **"एकदा लवपुराद् बहिः कस्मिश्चिन्नगरे संस्कृतविदुषां सम्मेलनमभूत् । तत्र मम भाषणं न तथा प्रभावि आसीत्, यथा केषांचिद् अन्येषां विदुषाम् ।**

एतेन मम मनसि क्षोभ इवाजायत । लवपुरमागत्य मया दृढ़संकल्पेन घोरपरिश्रमः कृतः, भाषणप्रावीण्यञ्चाधिगतम् ।"

## सुगेष्णवः

प्रायः साहित्यं सरसं व्याकरणं च रूक्षं मन्यते । कदाचित्तद्रूक्षताऽपाकरणायैव पण्डितवर्या महाविद्यालयाद् गृहमागत्य प्रतिसायं हारमोनियममवादयन् तेन सह च सुमधुरमगायन् । संयोगान्ममाप्यस्ति गानवादनयोरल्पा रुचिः । तेनाहमन्वभवं यदेते महोदयाः शास्त्रीयरागरागिणीभिश्च सुपरिचिताः ।

## दिल्लीवासः

स्वदेशस्य दुर्भाग्यपूर्णविभाजनानन्तरं पण्डितमहोदयाः, डी० ए० वी० महाविद्यालय - अम्बाला इति संस्थायां प्राध्यापका अभवन् । ततः सेवानिवृत्तेः पश्चाद् यदा ते दिल्लीमागताः तदा इन्द्रप्रस्थीयसंस्कृतपरिषदो गोष्ठीषु तेषां दर्शनस्य गहनगम्भीरविचारश्रवणस्य च नैके अवसराः प्राप्ताः ।

## स्वास्थ्य-संरक्षणम्

कायेन कृशा अपि पण्डितवर्या सम्यक् स्वस्था आसन् । स्थौल्यात् कार्श्यं वरम्, इत्यायुर्वेदोक्तिः तेषु अर्थवती अदृश्यत । प्रभाते स्वच्छसमीरे भ्रमणमेव मम स्वास्थ्यकारणमित्येकदा ते मां ज्ञापितवन्तः । तत्सम्बन्धिनी निम्नाङ्किता रुचिकरी घटना च मह्यं श्राविता ।

"एकदा हेमन्ते प्रातः चतुर्वादनसमये दिल्लीविश्वविद्यालयस्य पर्वतकप्रदेशे यदाऽहं भ्रमणाय गतवान् तदा सहसैव एको लुण्ठको द्विचक्रिकायाः अवरुह्य मामवोचत्—'तिष्ठ, देहि च यत्किञ्चित् तव पार्श्वेऽस्ति ।' अनयाऽपूर्वघटनया चकितस्तब्धोऽहमकथयम्—'भ्रातः, अहन्तु चङ्क्रमणायैव अत्रायातः, नास्ति मम पार्श्वे काणी कनीनिकाऽपि ।' 'किमेष भ्रमणकालः' इत्युक्त्वाऽसौ मम वस्त्राणि अन्विष्य न च किमपि प्राप्याब्रवीत्—'ईदृशे काले निर्जने च प्रदेशे न भ्रमणीयम्' इत्युपविश्य विलुप्तः ।"

## आर्यविद्वत्परिषदि

अद्यतः प्रायो विंशतिवर्षपूर्वं मत्प्रेरणया दिल्ल्यामार्यविद्वत्परिषद्-नाम्नी एका सभा स्थापिता । तदधिवेशनानि करोलबागीयाऽऽर्यसमाजमन्दिरेऽभवन् ।

किं वेदा ईश्वरकृता ऋषिकृता वा, अस्ति तेषु इतिहासो न वा, इत्यादि संशयास्पदविषयेषु तत्र वादाः प्रावर्तन्त। पण्डितवर्या मत् - प्रार्थनया, वार्द्धक्येऽपि, तत्रागच्छन् स्वप्रौढविचारांश्च तत्र निर्भीकतया प्राकटयन्।

किं बहुना, ईदृशानां प्रगल्भपण्डितानां, परोपकारिणां सरलजीवन-धारिणां कुशलवक्तृलेखकानां शाश्वतवियोगः कस्य न भवेद् हृदयविदारकः ? तथापि सदुक्तिः—

सर्वे क्षयान्ता निचयाः, पतनान्ताः समुच्छ्रयाः।
संयोगा विप्रयोगान्ताः, मरणान्तं हि जीवितम् ॥

अस्मभ्यं शान्तिमावहति, वयं च दिवङ्गतात्मने प्रगाढश्रद्धया शान्तिं कामयामहे।

# देवेषु चारुदेवः

डॉ० नरदेवशास्त्री

संस्कृत-विभागः, हिमाचलप्रदेश-विश्वविद्यालयः, शिमला

प्रशस्तः पण्डितः श्रीमान्, विज्ञोऽभिनवपाणिनिः ।
राष्ट्रसम्मानितो विद्वान्, चारुदेवो महामतिः ॥ १ ॥

दिवं द्योतयितुं नूनं व्याकृतिपुण्यतेजसा ।
चन्द्रोदयरुचा चारु चारुदेवो दिवङ्गतः ॥ २ ॥

सत्यव्रताश्रयो लोके सत्यव्रतविधायकः ।
महाव्रताय देवोऽयं ज्योतिश्च परमं गतः ॥ ३ ॥

व्याकृतिं क्रममाणोऽसौ अजिह्मां राजपद्धतिम् ।
अवाप्य शब्दब्रह्मादो जगाम परमां गतिम् ॥ ४ ॥

निष्णातः सर्वशास्त्रेषु शब्दशास्त्राब्धिशोधकः ।
देवेषु चारुदेवो वै शब्दब्रह्मसमर्पितः ॥ ५ ॥

वैदुष्यसारसम्पुञ्जः पाणिनीयार्थविन्महान् ।
ब्रह्मवर्चा महात्माऽसौ ऋषिकल्पो महाद्युतिः ॥ ६ ॥

यशसा वचसा लोके श्रेयसा च महीयसा ।
अद्यापि जीवति सत्यम् अमरो मर्त्यधर्मसु ॥ ७ ॥



# पुण्यश्लोकश्चारुदेवशास्त्री

डॉ० धर्मेन्द्रकुमारगुप्तः
पंजाबीविश्वविद्यालयीयः संस्कृत-विभागः, पटियाला

१९४६-तमे खिृष्टाब्दे लवपुरीये दयानन्द-ब्राह्म-महाविद्यालये संस्कृत-विद्योपार्जनायाऽन्तेवासित्वेन लब्धप्रवेशस्त्रयोदशवर्षदेशीयः किशोरवया अहमेकदा ब्राह्ममहाविद्यालयं निकषैव दयानन्द - ऐंग्लो - वैदिक - महाविद्यालय - मार्गे सौम्यमूर्तिं विद्याविभाविभासितवदनमुज्ज्वलावदातवेषमेकं पुरुषं—महानुभावोऽयं संस्कृतभाषाव्याकरणपारदृश्वा लब्धप्रतिष्ठो विद्वानिति सहपाठिनैकेन नातिसमीपाद् निर्दिश्यमानं दृष्ट्वा क्वचित् कदाचिदनेन विदुषा वार्तालाप-स्यावसरः प्रसङ्गो वा लभ्येतेति कौतूहलौत्सुक्यलालसाभावभरितचेता अभूवम्। लवपुरस्य तदानींतनं वातावरणं साम्प्रदायिकविक्षोभपूर्णमशान्तिमयं चासीत्। तत्र वर्षमेकं कथमपि गमयित्वा देशविभाजनान्तरं लवपुरादुत्खाते होश्यारपुर-मण्डले च शामचौरासी-ग्रामे पुनः प्रतिरोपिते ब्राह्ममहाविद्यालये १९४९-तमे खिृष्टाब्दे विद्यावाचस्पति-परीक्षामुत्तीर्णोऽहं समावर्तनावसरे श्रीचारुदेवः शास्त्री दीक्षान्तभाषणाय निमन्त्रित इति सुहृद्भ्यो निशम्य तद्दर्शनोत्सुकस्तदीयं संस्कृतभाषणधारासारामृतवृष्टिस्नानमुदीक्षमाणोऽतिष्ठम्।

दीक्षान्तसमारोहस्य सोऽवसरोऽपूर्व एवासीदित्यद्य कल्पयामि। अश्रुतपूर्वसंस्कृतवाग्धाराप्रवाहरूपम् आचार्यप्रवरस्यार्थगौरवगर्भं पदलालित्य-संवलितं चाभिभाषणं श्रुत्वा तदीयाच्चानेकशास्त्रग्रन्थस्पर्शपवित्रितात् करकमला-दुपाधिं गृहीत्वा वाग्देव्येकसाधकमभिनवपाणिनीत्युपाख्याख्यातमिमं महर्षिं प्रति समेषां तत्रोपस्थितानां जनानामन्तेवासिनामिव च मम मनस्यपि कोऽप्यनिर्वचनीयः श्रद्धाऽऽदरभावोऽजागरीद्, यद्यपि तेन विद्वद्वरेण सह संस्कृत-भाषयाऽऽलपितुं हिन्दीभाषया वाऽपि व्याकरणविषयां चर्चां कामपि प्रवर्तयितुं नाहं न वाऽपि कोऽप्यन्यश्छात्र उदसहत।

कतिपयवर्षानन्तरं जालन्धरनगरस्थितपंजाबविश्वविद्यालयीय-संस्कृत-विभागाद् एम०ए० परीक्षामुत्तीर्य यदाऽहं १९५६-तमे खिृष्टाब्दे होश्यारपुरस्थे विश्वेश्वरानन्दवैदिकशोधसंस्थानेऽनुसन्धानसहायकत्वेन नियुक्तिमलभे, तदाऽबाला-स्थलवपुरीय - डी०ए०वी० - महाविद्यालयात्सेवानिवृत्त आचार्यश्चारुदेवोऽपि

तत्र कंचित्कालावधिं यावत् संस्थानस्य सेवामवैतनिकीमुपाचरितुं समायातः। सायंकालिकभोजनानन्तरं संस्थानभवनस्य परिसराङ्गणे विशालवलभीभागे वा संस्थान-संचालकेनाचार्यविश्वबन्धुमहाभागेन सह विदुषामभ्यागतानाम-स्मादृशानां च तत्र प्राप्ताऽऽवासानां कर्मिष्ठानां नैयमिकत्वेन प्रवर्तमानो दैनिकः पर्यटनप्रसङ्गोऽनौपचारिक्या विद्यागोष्ठ्या अपूर्वमवसरमुपस्थापयति स्म। अवसरेष्वेषु विद्यावदातवपुषोराचार्यप्रवरयोर्विश्वबन्धोश्चारुदेवस्य च मध्ये प्रायेण नित्यं प्रवर्तमानं पदपदार्थशास्त्रार्थमुपनिशम्योभयोरपि तयोरभ्य-स्तसमस्तशब्दशास्त्रयोर्विदुषोरगाधज्ञानपयोधिमज्जनसुखं मासान् कांश्चिद-नवरतमहमन्वभूवम्। शास्त्रार्थप्रसङ्गेषु तेषु आचार्यविश्वबन्धोः, सुस्पष्ट आग्रहः सामान्यभाषाविज्ञाननियमान् प्रति, आचार्यचारुदेवस्य च पाणिनीय-व्याकरणनियमान् प्रति समवर्ततेति तदीयशास्त्रार्थपरमार्थं कात्स्न्येनाबुध्य-मानेनापि मया परिज्ञातम्।

१९५९-तमे खिृष्टाब्देऽम्बालास्थे लवपुरीय-डी०ए०वी०-महाविद्यालये संस्कृतप्राध्यापकत्वेन नियुक्तोऽहं तत्र प्राध्यापककक्षे भित्तिलग्नमाचार्यमहोदयस्य चित्रमवलोक्य, आचार्योऽयं महाविद्यालयमिमं कक्षं चेमं कतिपयेभ्यो वर्षेभ्यः प्रागलंचकारेति, तदधिष्ठितपूर्वमेव चाध्यापकपदमधुनाऽहमधितिष्ठामीति च विचिन्त्य गौरवविशेषं कमप्यनिर्वचनीयमन्वभूवम्। श्रीत्रिलोकीनाथप्रभृतय आचार्यसमकालिकाः सहयोगिनो यदा कदा कथाप्रसङ्गेनाचार्यमहोदयस्य विनयार्जवसाधुत्वसंवलितमगाधवैदुष्यं संस्कृतभाषाव्याकरणे च तदीयामनन्य-गामिनीं प्रगाढां रुचिमुदैरयन्, तच्चर्चावसरेषु च तं प्रत्यादरविशेषभरितां भावुकतां कामपि व्याञ्जन्। तदित्थं वरिष्ठसहयोगिप्रवर्तिता तदीया चर्चा सदैव मामुत्तरोत्तरं साध्यवसायाय विद्याश्रमाय संस्कृत-भाषा-व्याकरणानु-शीलनाय च दृढं प्रेरितवती।

आचार्यमहोदयेन घनिष्ठसंपर्कस्यावसरो मया १९६४-तमे खिृष्टाब्दे नव-दिल्लीस्थ-केन्द्रीय-हिन्दीनिदेशालये विशेषतश्च १९६६-तमेऽब्दे पटियालास्थ-पंजाबीविश्वविद्यालये नियुक्तिमवाप्तवता समुपलब्धः। वर्षेष्वेषु ततश्चानु-प्रवृत्तेषु वत्सरेषु सत्यर्थे प्राप्तावसरोऽहं यदाकदाचिद् दिल्लीये रूपनगरे स्थितस्य सुरभिसदनस्योपरिभूमौ तद्द्वारोपान्तवर्तिनि लघीयसि स्वाध्यायकक्षे काष्ठमञ्चनिहितविविधव्याकरणग्रन्थपरिवारितम् आसन्द्यासनबन्धधीरं शान्ताकारं स्वाध्यायतपोनिरतमाचार्यप्रवरमवलोक्य सुतरां प्रभावितस्तद् वैदुष्याभिभूतस्तदनुरागाभियोगेन च भूयो प्रेरितोऽभूवम्। यदाऽप्यहं तदीये

स्वाध्यायकक्षे प्रवेशमकरवं, तदा नियतमहं तमाचार्यं विविधेषु ग्रन्थेषु कदाचिदेकं कदाचिच्चापरं ग्रन्थं सूक्ष्मं परिशीलयन्तं, कदाचिद् शुभ्रपत्रेषु सुवाच्यैश्च सुन्दरैश्चाक्षरैः किमपि लिखन्तं, कदाचिन्मुद्र्यमाणस्य कस्यापि स्वकीयग्रन्थस्य शोध्यानुमोद्यपत्राणि निपुणमवलोकयन्तं यथास्थानं च तच्छोधयन्तमपश्यम् ।

कालक्रमेणाचार्यवरेण ममायं संबन्ध उत्तरोत्तरं प्रगाढत्वमभजत्, पारिवारिक इव चाजायत । यदाऽहं विविधविश्वविद्यालयीयेन परीक्षणाध्यापकचयनादिकार्यप्रयोजनेन संमेलनसंगोष्ठीसमारोहादिप्रसङ्गेन वा मध्येमार्गं दिल्लीनगरमवाप्नवं, यदा वा दिल्लीनगरमेव मह्यं गन्तव्यस्थानमभवत्, तदा रूपनगरस्य यात्रा तीर्थयात्रेव मम कार्यक्रमस्याङ्गमभूत् । सुरभिसदनकेन्द्रं तीर्थमिदं पण्डितत्रयीसंगमाद् हेतोर्विशेषेण मदाकर्षणकेन्द्रबिन्दुरासीत् । तत्रभवान् आचार्यमहाभागस्तत्सूनुर्डाक्टरसत्यव्रतशास्त्री तत्स्नुषा च श्रीमत्युषा—इति बुधत्रयी वैदुष्यसौजन्यमूर्तिरवर्तत । सरस्वतीसमाराधनानवरतपरायणा त्रिमूर्तिरियं संस्कृतवाङ्मयश्रीवृद्धिकर्मणि सुतरां विहितप्रभूतयोगदानेति सर्वस्यापि संस्कृतानुरागिणो जनस्य सुविदितमेव । तत्रापि पाणिनीयव्याकरणवाङ्मयव्याख्यानसमुपबृंहणक्षेत्रे पण्डितप्रवरस्याचार्यचारुदेवस्य योगदानमद्वितीयमतश्च विशेषेण महनीयं वर्तते । तेन विरचितस्य संपादितस्य च वाङ्मयस्य विशालतायास्तत्र च पदे पदे प्रतिबिम्बितस्यागाधवैदुष्यस्य गरिम्णोऽनुमानं तत्परिशीलनकृतश्रम एव जनः साकल्येन कर्तुं पारयेत् । सौभाग्यवशादनेन जनेन १९७२-तमे खिष्टाब्दे तदीयविशालवाङ्मयपरिशीलनस्यावसरोऽवापि, यदा खलु आचार्यचारुदेवशास्त्र्यभिनन्दनग्रन्थ – प्रकाशनोपक्रमप्रसङ्गेनाभिनन्दन - ग्रन्थसमित्याः सचिवो डाक्टरसत्यव्रतशास्त्री आचार्यप्रवरेण प्रणीतस्य तदवधि यावत् प्राकाश्यं प्राप्तस्य सकलस्यापि साहित्यस्याभिनन्दनग्रन्थकृते समीक्षात्मकाध्ययनरूपं लेखमेकं निबद्धुं जनमिममादिष्टवान् । १९७४-तमे खिष्टाब्दे प्रकाशितस्याभिनन्दनग्रन्थस्याङ्गलभाषामये भागे धृतः पञ्चत्रिंशत्पृष्ठात्मकोऽयं मदीयो लेखः (पृ० २५-५९) आचार्यमहोदयस्य समस्तमपि सर्जनात्मकं च वाङ्मयं सविस्तरं परिशीलयति । उक्तलेखनिबन्धनावसरेऽमुष्मिन् तदीयान् लेखान् संपादितान् साहित्यग्रन्थान् पाणिनीय-व्याकरणानुशीलनपरांश्च शोधात्मकान् ग्रन्थान् भृशं पर्यालोचयता मया 'अभिनवपाणिनिरिति विदुषोऽस्योपाधिः सर्वथाऽवितथ' इति सुतरामन्वभावि । लेखमिमं मदीयमवलोक्य यथायथं च निपुणं निरीक्ष्याचार्यप्रवरो नितरां प्रासीदत्, आशीराशिभिश्च मां

भूयो भूयोऽन्वगृह्णात् । तदीयाऽसौ शुभाशीर्वचनगर्भा प्रसादस्नेहव्यक्तिः सुमधुरस्मृतिनिधिरूपेण मम हृदयपटले सुरक्षिता वर्तते । उपर्युक्ते मदीये लेखे विशेषेण समीक्षितास्तत्कृतयोऽधोनिर्दिश्यमानाः सन्ति— (१) विक्रमोर्वशीयम्, काटयमेवकृतटीकया रङ्गनाथ-मल्लिनाथप्रभृतिकृतटीकोद्धरणैश्च संवलितम् (सं०, लाहौरात्, १९२९-तमे खि०), (२) गान्धिचरितम् (लाहौरात्, १९३०-तमे खि०), (३) मालविकाग्निमित्रम्, काटयवेमनीलकण्ठ-कृतटीकोद्धरणैः संवलितम् (सं०, लाहौरात्, १९३३-तमे खि०), (४) वाक्यपदीयस्य ब्रह्मकाण्डम्, भर्तृहरि-कृतस्वोपज्ञवृत्त्या वृषभदेवकृतटिप्पणैश्च युतम् (सं०, लाहौरात्, १९३४-तमे खि०), (५) दिङ्नागरचिता कुन्दमाला (सं०, लाहौरात्, १९३७-तमे खि०), (६) ए मैन्युअल् आफ़् संस्कृत ट्रान्स्लेशन् (लाहौरात्, १९३९-तमे खि०), (७) अनुवादकला, उपर्युक्तग्रन्थस्य हिन्दीरूपान्तरम् ( वाराणसीतः, १९५० - तमे खि० ), (८) प्रस्तावतरङ्गिणी (वाराणसीतः, १९६३-तमे खि०), (९) शब्दापशब्दविवेकः (जालन्धरनगरात्, १९५४-तमे खि०, परिवर्धितं संस्करणम्, दिल्लीतः, १९८२-तमे खि०), (१०) वाक्यमुक्तावली (जालन्धरनगरात्, १९५६-तमे खि०), (११) महाभाष्यम्, प्रथमाह्निकत्रयम्, हिन्दीव्याख्यायुतम् (सं०, दिल्लीतः, १९७२-तमे खि०), (१२) महाभाष्यम्, प्रथमं नवाह्निकम्, हिन्दीव्याख्यायुतम् (सं०, दिल्लीतः, १९६८-तमे खि०), (१३) व्याकरणचन्द्रोदयः, पञ्चखण्डात्मकः (दिल्लीतः, १९६९-७३-तमेषु खि०) ।

उपर्युक्ताभिनन्दनग्रन्थस्य प्रकाशनात् परं तदुत्तरवर्तिषु वर्षेष्वपि आचार्यप्रवरस्य शास्त्रचिन्तोत्तरं साहित्यनिर्माणकर्म नितरामनवरतं प्रावर्तत । वर्षेष्वेषु शास्त्रसाधनायाः कठिनं व्रतं यथापूर्वमनुचरन्नाचार्यः शास्त्रानुसन्धानक्षेत्रे नूतनायामान् व्यतनोत् । पञ्चखण्डात्मिका ११६० पृष्ठव्यापिनी कृतिरुपसर्गार्थचन्द्रिका (दिल्लीतः, १९७६-८२-तमेषु खि०), श्रीमद्भागवतभाषापरिच्छेदः (होश्यारपुरात्, १९८४-तमे खि०), शब्दापशब्दविवेकस्य द्वितीयं परिबृंहितं संस्करणम् (दिल्लीतः, १९८२–तमे खि०) कतिपयपुराणग्रन्थप्रस्तावनाप्रणयनम्, श्रीरामचरितामृतम् (दिल्लीतः, १९८४-तमे खि०), महाभारतवचनामृतं (दिल्लीतः, १९८३–तमे खि०) चेति कृतयः पश्चिमे वयसि वर्तमानस्य तस्यानवरतसाहित्यसाधनाया विपाकत्वेन शोभन्ते । तत्रोपसर्गार्थचन्द्रिका, श्रीमद्भागवतभाषापरिच्छेदः, नारदीयमहापुराण-प्रस्तावना चेति कृतित्रयं मया

क्रमशः पुरीस्थ-श्रीजगन्नाथसंस्कृतविश्वविद्यालयीयायाः श्रीजगन्ननाथज्योतिराख्यायाः शोधपत्रिकायाः प्रथमेऽङ्के (पुरी, १९८४, पृ० १२६-२९), विश्वसंस्कृतस्य २२.२ तमेऽङ्के (होश्यारपुर, १९८५, पृ० ६२-६४), पटियालास्थपंजाबी विश्वविद्यालयीयायाश्च जर्नल् आफ़् रिलिज्यस् स्टडीज इति ख्यातायाः शोधपत्रिकायाः १२.२ तमेऽङ्के (पटियाला, १९८४, पृ० १२८-३०) समीक्षितं प्रकाशितं च।

विगतेषु वर्षेषु यदाऽप्यहं व्याकरणविषयां कामपि समस्यामादायाचार्यमहोदयमुपन्यसदं, स सर्वामपि तां सुचारु समाधात्। तत्प्रस्तुतं समाधानं निशम्य विषयस्यास्याणोरप्यणीयानर्थस्तस्य स्मृतिपटले करतलामलकवदतिष्ठदित्यन्वभूवम्। कदा कथमनेनैतावान् ज्ञानराशिः संचितः कथं च स निधिः स्मृतमात्रोऽप्यमहमहमिकया तज्जिह्वाग्रमुपतिष्ठतीति काऽपि चित्रीया मम मनसि समुदतिष्ठत्। प्रतिपाद्यविषयस्य प्रस्तुतीकरणेऽसाधारणं वैशद्यं भाषायाः काऽप्यनिर्वचनीया प्राञ्जलता स्वरस्य च श्रुतिसुभगं माधुर्यमप्यतितरां हृदयावर्जकमासीदाचार्यवरस्य। मन्ये सर्वमिदं तस्य पूर्ववासनागुणानुबन्धिन्या नित्यनूत्नोन्मेषशालिन्याः प्रतिभायाः पुष्पप्रसूतिः तद्यौगपद्येन प्रवर्तमानश्च फलविपाक एवेति।

यः कोऽपि महामुनेरस्य साहचर्यमवाप्नोति स्म, सोऽस्य स्वभावस्योदारतया सारल्येनार्जवेन च सुतरां प्रभावितः समजायत। अध्ययनरुचिर्विद्याविनयसम्पन्नश्च जनो विशेषेणास्य स्नेह प्रसादमाशिषश्चोपार्जयत्। मत्सरग्रस्तः पाण्डित्यावलेपलिप्तो ज्ञानलवदुर्विदग्धो वा जनो न तस्मै कथमप्यरोचत। साधारणवार्तालापप्रसङ्गे स भर्तृहरिपद्यमिदं प्रायेणोदाहरत्—

> बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः।
> अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम्॥

विद्वत्प्रियोऽयमाचार्यवरः शिष्याणां शिष्यकल्पानां च जनानामभ्युदयेन पदोन्नत्या च नितरां प्रासीदत्तांश्च यथायथमाशीर्वचोभिर्भूयिष्ठमभ्यनन्दत्। अवसरविशेषेषु तदीयैराशीराशिभिरनेकदाऽहमप्यनुगृहीतोऽभूवम्। १९७९-तमे खिृष्टाब्दे पंजाबीविश्वविद्यालयसंस्कृतविभागे आचार्यरूपेण पदोन्नतोऽहं तदीयानां स्नेहसिक्ताशीर्वचसां भाजनं जात इति सगौरवं तमवसरं विशदं स्मरामि। अन्येष्वप्येतादृशेष्ववसरेषु स स्वकीयान् प्रियशिष्यानन्तेवासिनश्च सदा साक्षाद्वचोभिः पत्रमाध्यमेन वाऽभिव्यक्ताभिराशीर्भिरवश्यमेवानुगृहीतवान्।

परुत् (१९८७-तमे खिष्टाब्दे) अप्रेलमासस्य नवमे दिनाङ्के तस्य दुःखदनिधनस्योदन्तमाकाशवाणीतः प्रसारितं समाकर्ण्य वज्रपातेनानेन स्तब्धमिव कीलितमिव च मच्चेतः समजनि। एकनवतिवर्षदेशीयोऽयं बुधवरो जराजीर्णोऽपि सततस्वाध्यायतपोनिष्ठामेव दिनचर्यामपालयदिति तथ्यमिदं समेषामस्माकं चित्रीयाविष्टचेतसां प्रेरणाहेतुरासीत्। परित्यक्तभौतिक-शरीरोऽयमद्य महात्माऽनपायिना यशःशरीरेण जीवति, गम्भीरं च दुस्तरं व्याकरणशास्त्रार्णवं तितीर्षूणां कृते प्रकाशस्तम्भायमानानां स्वकीयग्रन्थानां माध्यमेन च युगानि यावज्जीविष्यति, प्रेरयिष्यति चायतिकालिकं ज्ञानपिपासुं मनुजान्वयम्।

संस्कृतज्ञानां संस्कृतानुरागिणां च, वर्तमानोऽयमन्वयो महर्षेरस्य विशेषेणाधमर्णोऽस्ति। संस्कृतविद्यायास्तत्र च प्रगाढपाण्डित्यस्य परम्परायाः संरक्षणेनैव वयमस्मादृणादानृण्यमवाप्तुं कल्पामहे। भारतीयसंस्कृतिरिक्थ-भूताया संस्कृतभाषायाः समाराधनयैव वयमस्मै महामुनये श्रद्धाञ्जलिपुष्पोपहारं कल्पयितुं प्रभवामः। संस्कृतसरस्वतीसमुपासनाध्वनि महामुनेरस्य पदचिह्ना-न्यनुचरितुं दृढमद्य संकल्पेमहि। अनेनैव विधिना पुण्यस्मृतेराचार्यप्रवरस्य पुण्या स्मृतिरर्थवती स्यात्।

जयत्यसौ चारुदेवोऽभिनवः पाणिनिर्मुनिः।
नास्ति यस्य यशःकाये जरामरणजं भयम्॥



# श्रीमद्विद्वद्वर्यश्रीचारुदेवं प्रति श्रद्धाञ्जलिः

आचार्यः विद्यानिधिः शास्त्री
पटियालातः

दिवङ्गते शास्त्रिणि चारुदेवे
निराश्रयाभूत् सुरभारतीयम् ।
नाद्यास्ति तादृक् परभागयुक्तां
तां वक्तुमीष्टे कुशलोऽपि विद्वान् ॥ १ ॥

यां देववाणीं बहवो मनुष्याः
वक्तुं प्रवक्तुं च तथा यतन्ते ।
श्रीचारुदेवेन समं प्रयोक्तुं
कृतप्रयत्ना अपि न क्षमन्ते ॥ २ ॥

आचारपूतः सरलस्वभावः
पूर्णं प्रपेदे पुरुषायुषं यः ।
अगर्हणीयं तमिहार्हणीयं
श्रीचारुदेवं सुहृदं प्रणौमि ॥ ३ ॥

उदात्तादनुदात्तस्य स्वरितं प्राह पाणिनिः ।
किन्तूदात्तोऽपि सन्नेष स्वरितोऽभूत् स्वयं कुतः ॥ ४ ॥

ऋषीणामिव पूर्वेषां यस्य सिद्धा सरस्वती ।
गद्ये पद्ये च सर्वत्राऽप्यनिरुद्धा व्यराजत ॥ ५ ॥

चारुदेवं रुचा चारुं वन्दे देवं दिवंगतम् ।
स्वराद्यन्तविपर्यासेऽप्यसौ महान् महीयते ॥ ६ ॥

आङ्ग्लभाषाविदां श्रेष्ठः भारती-भा-रतोऽपि सन् ।
राज्यापालादिभिर्मान्यः सर्वेषां प्रियदर्शनः ॥ ७ ॥

दिव्यां वाचमुपासते हि बहवः सारं तु सारस्वतम् ।
जानीते सुतरामसौ कृतमतिः श्रीचारुदेवः कृती ॥ ८ ॥

प्रशस्तं पाण्डित्यं विविधविषयेष्वप्रतिहतम् ,
क्रमाद् धीश्रीस्त्रीणां समधिगमनाच्चारुचरितम् ।
शरच्चन्द्रं सत्यव्रततनयमुद्वीक्ष्य ललितम् ,
कृतार्थं तज्जन्म स्वरितमिति शोच्यं न भवति ॥ ९ ॥

वपुः प्रादुर्भावादनुमितमिदं जन्मनि पुरा,
न हि प्रेयन् विद्वन् क्वचिदपि भवन्तं प्रणतवान् ।
नमन्मुक्तः सम्प्रत्यहमतनुरग्रेऽप्यनतिभाक् ,
कृपातः क्षन्तव्यं तदिदमपराधद्वयमपि ॥ १० ॥

# श्रीचारुदेवशास्त्रिणामभिनवपाणिनित्वम्

**डॉ० रामकिशोर मिश्रः**

**संस्कृतविभागाध्यक्षः, म० म० डिग्री कॉलेज, खेकड़ा - २०११०१**

**मेरठ ( उ० प्र० )**

सर्वभाषाविदो जगन्नियन्तुः परमपितुः परमात्मनो भवसागरतारकस्य जगदीश्वरस्याऽनुकम्पया संस्कृते पाणिनेरवतारभूतस्य महावैयाकरणस्य श्रीचारुदेवशास्त्रिणो जन्म षण्णवत्युत्तराऽष्टादशशततमे (१८९६) क्रैस्ताब्दे मयमासेऽष्टमे दिने पञ्चाम्बुप्रदेशे होश्यारपुरजनपदेऽहियापुरनामके ग्रामे श्रीरामकृष्णगृहे श्रीमत्या भागवतीदेव्या उदरात्समभवत् ।

अस्य जनकः श्रीरामकृष्णो जननी च भागवतीदेवी पालनपोषणादि-कार्यं प्रेम्णा चक्रतुः । अस्य प्रारम्भिकी शिक्षा निकटस्थिते टाण्डानामके ग्रामे माध्यमिकविद्यालये बभूव । ततो जालन्धरं गत्वाऽयं पूर्वमाध्यमिकशिक्षां गृहीतवान् । पञ्चाबुविश्वविद्यालयादुत्तरमाध्यमिकशिक्षायां स्नातकशिक्षायां च विशेषयोग्यतां प्राप्य छात्रवृत्तिरनेन लब्धा ।

ईशनेत्रग्रहचन्द्राङ्किते १९२१-तमे क्रैस्ताब्दे श्रीचारुदेवशास्त्री जालन्धरे श्रीदयानन्दाऽऽङ्ग्लवैदिकमहाविद्यालयेऽध्यापनं प्रारभ्य स्नातकोत्तरपरीक्षापरि-णामानन्तरं लवपुरे नियुक्तिं प्राप्य प्रसिद्धे दयानन्दाऽऽङ्ग्लवैदिकमहाविद्यालये-ऽध्यापनसेवावृत्तिं स्वीचकार । अत्राऽयं लोकाऽब्धिनिधिवसुधाऽङ्किते १९४७-तमे-शवीयवर्षे भारतविभाजनपर्यन्तमध्यापितवान् । विभाजनानन्तरमम्बालानगरे १९४८-तः १९५१-पर्यन्तमनेन स्वजीवनस्य पञ्चपञ्चाशत्तमे वर्षे तस्मादेव दयानन्दाङ्ग्लवैदिकमहाविद्यालयादध्यापन-सेवावकाशो गृहीतः ।

अयं संस्कृतभाषाया अद्वितीयो विद्वान्, लब्धप्रतिष्ठो लेखकः संस्कृत-व्याकरणे प्रभावी वक्ता चाऽऽसीत् । अस्मिन्महाबुधे कारयित्री-भावयित्री-प्रतिभयोरपूर्वः समन्वयोऽभूत् । अस्य संस्कृतव्याकरणे ज्ञानस्य व्यापकत्वाद् गम्भीरत्वाच्च प्रसिद्धिः सर्वत्र प्रसृता । व्याकरणचन्द्रोदयमुपसर्गार्थचन्द्रिकां शब्दापशब्दविवेकं प्रणीयाऽनेन संस्कृतव्याकरणे स्वस्याऽभिनवपाणिनित्वं प्रमाणितम् । व्याकरणग्रन्थिसमाधानैः प्रभाविता जनाः श्रीमन्तं चारुदेव-शास्त्रिणमभिनवपाणिनिमेव कथयन्ति स्म । पञ्चभागेषु विभक्तः २३३२

पृष्ठेषु पूर्णो व्याकरणचन्द्रोदयः, त्रिषु भागेषु च विभक्ता १२०० पृष्ठेषु पूर्णा कृतिरुपसर्गार्थचन्द्रिका, ३८१ पृष्ठेषु लिखितः शब्दापशब्दविवेकोऽस्य व्याकरणशोधकृतिषु विशेषरचनाः सन्ति ।

शब्दापशब्दविवेके कः शब्दः कश्चाऽपशब्द इति विषये तेन सम्यग्विमर्शः कृतः । सूत्रानुसारी प्रयोगः शब्दः, उत्सूत्रश्चाऽपशब्दः । मतान्तरे संस्कार-हीनशब्दोऽपशब्दः । अत्र शास्त्रिणा कवीनामकवीनां च क्रियासु नैकविधासु वर्तमानाः पाणिनीयशासनव्यतिक्रमलक्षणास्तास्ताः स्खलितयो निखिलेन विभाविता। सुनिपुणं च परीक्षिताः । यथा—

(१) अहोऽस्मि परमप्रीतो यस्य मे तादृशः सुतः । अत्र—'अहोऽस्मि' इति संस्कारहीनोऽपशब्दः । 'ओत्' इति सूत्रेण प्रगृह्यसंज्ञायां प्रकृतिभावे कृते 'अहो अस्मि' इति सिद्धयते । सिद्धः प्रयोग एव शब्दो भवति ।

(२) स्वयम्वर इत्यपशब्दः । अत्र स्वयंवर इति साधुप्रयोगः । अत्र मोऽनुस्वार इत्यनुस्वारो दुर्निवारः ।

(३) 'अहरहोऽधीते' इत्यसाधुप्रयोगः । अत्र रोऽसुपीति रेफत्वाद् 'अहरहर-धीते' इति साधुप्रयोगः ।

(४) भयङ्करीयमित्यपशब्दः । अत्र 'मेधर्तिभयेषु कृञः' इति खचि प्रत्यये टापि स्त्रियां भयङ्करेति साधुशब्दः ।

(५) मुक्तिङ्करी । अपशब्द एवाऽयम् । अत्र खचोऽभावे नुमोऽभावत्वाद् टप्रत्यये मुक्तिकरीति साधु ।

(६) कस्मादिमे लोका अत्रैकत्रीभूताः ? अत्रैकत्र भूता इति साधु । सम्पद्य-कर्तरीत्युक्तम् । कारकान्तरसम्पत्तौ मा भूत् । तेन च्विरत्र दुर्लभः ।

(७) मर्कटस्य सुरापानं तस्य वृश्चिकदंशनम् । अत्र कर्मणि चेत्युभयप्राप्तौ या कर्मणि षष्ठी सा न समस्यते । अतः सुरायाः पानमित्येव साधु । तस्य वृश्चिकेन दंशनमित्यसमास एव वरम् ।

(८) अहो रमणीया अस्य बर्हिणस्य बर्हाः । अत्र 'पिच्छबर्हे नपुंसके' इत्यमराद् बर्हस्य नपुंसकत्वमुचितम् ।

(९) क्षीरस्रुतिविरतये प्रसूतायाः कुचाग्रयोरौषधविशेषं लिम्पेत्। अत्र कुचाग्रे औषधविशेषेण लेपयेदिति णिचा वक्तव्यमुचितम्।

(१०) जीवानां व्यामोहयितरि 'शैताने' परमेश्वरे च को विशेषः? अत्र सप्तमीस्थाने षष्ठीविभक्तिरुचिता। भेदे षष्ठी प्रतिष्ठिता।

(११) सांयात्रिको वाञ्छति तर्तुमेव (पञ्चतन्त्रे १/३४५) अत्र तर्तुमिति दुष्टम्। तरतिरुदात्तः। तेन बलादेरार्धधातुकस्येड् दुर्वारः। तरितुं तरीतुं चेति साधु।

(१२) तत्र मन्त्रयतामेवं देवतानां मया श्रुतः (हरिवंशे— २/१/१५)। अत्र मन्त्रयतामित्यसाधु। तलन्तं स्त्रियामिति देवताशब्दः स्त्रीलिङ्गः, तेन शानचि टापि च मन्त्रयमाणानामिति साधुप्रयोगः।

(१३) न गर्दभा वाजिधुरं वहन्ति। अत्र 'ऋक्पूरब्धूःपथामानक्षे' इत्या समासान्तो विहितः। तस्मिन्सति स्त्रियां टापि च वाजिधुरामिति साधु।

(१४) नाथसे किमु पतिं न भूभृताम् (किराते—१३/५९) अत्र 'आशिषि नाथ इति नियमाद् याच्ञायां परस्मैपदमेव साधु।

(१५) सर्वरत्नाकरा भूमिः (गरुडपुराणे—२१७/८६)। अत्र सर्वरत्नाकर इति साधु। आकरशब्दो घप्रत्ययान्तः पुंसि नियतः।

अत्र शब्दापशब्दविवेके महावैयाकरणेन श्रीशास्त्रिणा २८८३ प्रयोगेषु विमर्शः कृतः। अनेन श्रीगान्धिचरितम्, वाग्व्यवहारादर्शः, महाभारतवचनामृतम्, श्रीमद्भागवतभाषापरिच्छेद इत्यादिग्रन्थाः प्रणीताः। संस्कृतसाहित्यसेवासंलग्नस्यास्य १९६५ तमाब्देऽखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य स्वर्णजयन्त्यवसरे राष्ट्रपतिना डॉ० राधाकृष्णेन विद्यावाचस्पतिपदवीप्रदानेन सम्मानः कृतः। ततः १९७१-तमे वर्षे राष्ट्रपतिनाऽस्मै विदुषे सम्मानपत्रमपि प्रदत्तम्।

अस्य विद्वत्तया संस्कृतसाहित्यसेवया च प्रभावितेन संस्कृतजगता १९७३ तमाब्देऽस्य हीरकजयन्तीमुपलक्ष्य खण्डद्वयाश्रितः सहस्रपृष्ठात्मकोऽभिनन्दनग्रन्थः प्रकाशितः, यः १९७४ तमाब्दे जनवरीमासे एकादशे दिवसे लोकसभाध्यक्षेणैकस्मिन् विशेषसमारोहेऽस्मै समर्पितः। १९८२-तमे वर्षे

पञ्चर्विशेऽर्ब्दतोवरे काशीहिन्दुविश्वविद्यालयेन शास्त्रिणः डी०-लिट् पदव्या सम्मानिताः । अस्मिन्नेव वर्षे उत्तरप्रदेशसंस्कृताकादम्या पञ्चदशसहस्र-मुद्रामितेन पुरस्कारेण सत्कृतास्ते । ततः १९८३ तमाब्दे सप्तविंशे मार्चे पञ्चाम्बुसर्वंकारेण शिरोमणिसाहित्यकारोपाधिना सम्मानिताः शास्त्रिवर्याः ५१००/- रूप्यकसहितं स्वर्णपदकमपि दत्तम् ।

अस्य महाबुधस्यैक एव पुत्रः संस्कृतमहाकविः डॉ० श्रीसत्यव्रतः शास्त्री वर्तते । अन्तेऽनेन विदुषा १९८७ तमे वर्षे नवमे दिनाङ्केऽप्रियलमासे स्वप्राणांस्त्यक्त्वा जीवनस्य ९१ वसन्तानन्तरमस्य जगतो नश्वरत्वं प्रतिपादितम् । तस्मिन्दिनेऽभिनवपाणिनौ दिवं गते संस्कृतजगच्छून्यमभवत् ।



# हा ! चारुदेवोऽपि दिवं जगाम

श्री सुखराम शर्मा
३१०/१० आदर्श नगर, बाई पास रोड, बुलन्द शहर (उ० प्र०)

येनार्जिता लोकललामभूता
कीर्तिश्च विद्वज्जनवन्दनीया ।
स्वयोग्यतारश्मिविभावदाता
हा ! चारुदेवोऽपि दिवं जगाम ॥ १ ॥

साहित्यसूर्यो विदुषां वरेण्यः
ज्ञाने पदस्यापि च लब्धकीर्तिः ।
यो नैककाव्यान्यलिखच्च विद्वान्
स चारुदेवोऽपि दिवं जगाम ॥ २ ॥

विभिन्न - विद्यालय - मानयुक्ताः
उपाधयो येन सदा गृहीताः ।
शोधात्मका वै लिखिताः सुलेखाः
स चारुदेवोऽपि दिवं जगाम ॥ ३ ॥

यः संस्कृताब्धेमंकरश्च, सूर्यः
सद्देवभाषागगनस्य चासीत् ।
विभीषिकारण्यमहामृगेन्द्रः
स चारुदेवोऽपि दिवं जगाम ॥ ४ ॥

विभिन्नकाव्यानि विलिख्य येन
वृद्धिः कृता संस्कृतवाङ्मयस्य ।
कृतः प्रचारोऽपि महान् सु-रुच्या
स चारुदेवोऽपि दिवं जगाम ॥ ५ ॥

यथा शशी खे उडुपेषु नित्यम्
विशोभते चन्द्रिकया निशायाम् ।
विद्वत्तया यो शुशुभे तथैव
स चारुदेवोऽपि दिवं जगाम ॥ ६ ॥

× × ×

त्वं देववाणीमिह सेवमानः
कदापि नाभूर्विमनायमानः ।
श्रद्धाञ्जलिं ते च समर्पयामः
लभस्व मुक्तिं हि विचिन्तयामः ॥ ७ ॥

नमोऽस्तु तस्मै ननु देववाण्याः
विद्वद्वरायैव कवीश्वराय ।
विशेष - काव्यामृतसौख्यदाय
सु - चारुदेवाय दिवङ्गताय ॥ ८ ॥

यन्नाम्नि चाभाति चकारचन्द्रः
रेफाद् रविस्तेजयुतोविभाति ।
देवोऽपि चान्ते हितमादधानः
त्रिदेवरूपाय नमोऽस्तु तस्मै ॥ ९ ॥

येनात्मजीवनविशेषसुखानि हित्वा
वाणी सदैव मनसा वचसा वरेण्या ।
संसेविता सकलबोधमयी मनोज्ञा
तं लोकदर्शितपथं हि वयं नमामः ॥ १० ॥



श्रीचारुदेवशास्त्रिणां प्रशस्तिपरा-स्वमत-निदर्शना—

# महामनीषी श्रीचारुदेवः शास्त्री

**डॉ० रामेश्वरदत्त शर्मा**

मन्त्री, हरियाणा संस्कृत सम्मेलन, ३, विकास नगर, भिवानी

**ख्यातिं यातोऽप्रतिमचरितश्‘चारुदेवो’ महीयान्,**
**नव्यो ‘दाक्ष्याः’ सुत इति जनैः कथ्यते यो विदग्धैः।**
**नाना सन्ति प्रथितरचनास्तस्य विद्वद्वरस्य,**
**शून्यं मे हा विबुधसदनं तं विना भाति बन्धो! ॥ १ ॥**

*मान्याः संस्कृतेन जीवनं संस्कृतं जातमित्युपकृतज्ञतया मयाऽनेक-संस्कृतसंमेलनानि स्वयं समायोजितानि परैः समायोजितेषु च भागो गृहीतः। एतेन देशस्य मूर्धन्य-संस्कृतविदुषां चरणेषु-उपवेशनस्यावसरोऽलम्भि। यावन्तो विद्वांसः साक्षात्कृताः, सत्यं ब्रवीमि श्रीचारुदेवः शास्त्री सर्वेषु श्रेष्ठतम आसीत्। न केवलं विशिष्टवैदुष्येणापि तु मानवीय-गुणैरपि स महत्तम आसीत्। अहं त्रिवारं दिल्ल्या रूपनगरे तमद्राक्षम्। यादृक्शरीर-लावण्यमासीत् ततोऽप्यधिकं रमणीयतमं तस्य हृदयमासीत्।*

*यदाहं ‘हरियाणा संस्कृतवृत्तस्य’ मुद्रण-प्रतिं सज्जीकृत्य तेषां श्रीचरणेषु समुपाशिवम्, तदा ते किमपि लिखन्त आसन्। विनयपुरस्सरं यदा मया निवेदितं यद् ‘मान्याः! मया हरियाणासंस्कृतसम्बन्धी कश्चन विनम्रः प्रयासो विहितस्’तदा ते परां प्रीतिमवापुः। तैराज्ञप्तोऽहं “श्रावय कांश्चन अंशान्”। मया केचन अंशाः श्राविताः। श्रुत्वा च तैरुक्तम् “अहं स्वसम्मतिं प्रहेष्यामि।” किञ्चित्-कालानन्तरमेव तेषां सम्मतिर्मयाऽलम्भि। सम्मतिस्तु प्राप्ता, परं तस्या आशयमवबोद्धुं नाहमशक्नवम्। पं० मुंशीराम शर्मणा साहाय्येनाशयः सुस्पष्टीकृतः। मम ग्रन्थस्य न किमपि गौरवम्, तत् तु विदुषां सूचीपत्रं वर्तते। मया पाठकैश्च सहस्रशः सम्मतयः पठिताः। परमेषाऽपि सम्मतिः पठनीया वर्तते। तदैव तेषां विद्वन्मूल्याङ्कनं भविष्यति—*

*“श्रीरामेश्वरदत्त-शास्त्रिणा प्रणीतं ‘हरियाणा संस्कृत वृत्तम्’ इति समाख्यं ग्रन्थरत्नं मया प्रणेतृ-मुखादेव केषुचित् प्रदेशेषु कञ्चित् कालमेकसर्गेण मानसेन*

समाकर्णि प्रहर्षश्च ज्यायान् प्रापि। हरियाणा - संस्कृत - वृत्तस्य निबन्धनेऽनिदम्प्रथमोऽप्ययं प्रयासः सुदूरमतिक्रामति प्रयासान्तराणीतः प्राक्-कृतानि। अनुज्झितार्थं - सम्बन्धोऽयं प्रबन्धो युक्तिप्रमाणाभ्यां प्रत्यर्थमुपोद्बलितः प्रत्यायकैरव्यामोहकैः पदवाक्यैः सन्दृब्धः प्रतिपद्यपरिपाटी - विशेषावच्छिन्नः स्वकेन परभागेण हृदि पदं करोति समेषां पुरातत्त्वकर्म्माणां विदुराणाम्। मन्दाक्रान्तावृत्तेनास्योपक्रमस्य तावत् कापि प्ररोचना समजनि या विविदिषून्स्यावलोकने सरभसमुन्मनीकरोति। अनुच्छिष्टाहारिणी खल्वत्र शैली, प्रसन्नमधुरो वाचां गुम्फः, वस्त्ववस्तुनो प्रविवेकः, सारवत् संक्षिप्तमनतिरिक्तमाख्यानमिति समुदयो गुणानां वाग्मितामस्य प्रणेतुः प्रमितां करोति। सततमुन्मेषोन्मुखायाः संस्कृतेः सभ्यतायाश्चोद्गमस्थानं 'हरियाणादेशो नामेति पूर्वैरनुदितमर्थं सडिण्डिमं समुद्घोषयति कुशलोऽस्य कर्ता। अर्हद्भिरध्यासितानां तीर्थानामृषिवसतीनामाश्रमाणाञ्च क्षेत्रं वेदवेदाङ्गादि – विद्यानां स्रोतोऽयं भूभाग इति निपुणं प्रसाधयति प्रकृष्टप्रज्ञानः प्रणायकः। तेनास्य गरिमाणं काममपि सीमानमारोपयतीति साध्वम्य साह्यमाचर्यमुच्चकैः पदस्थैरधिकृतैः सभाजना च बह्वी विधेयेति सम्मनुते :— विदां विधेयश्चारुदेवः शास्त्री

४.३.१९८१ देहलीस्थः।

शीततौ चाहमन्तिमदर्शनं तेषामकार्षम्। तैस्तदानीमुक्तोऽहम् भ्रातृवर्य! आविंशतिवर्षम् अहम् ब्राह्ममुहूर्ते समुत्थाय भ्रमणार्थं एकं पर्वतखण्डम् अध्यासिषम्, परन्तु अद्य स्थिति रेतादृशी जाता यत् खट्वातोऽपि समुत्थातुं कष्टमनुभवामि। किञ्चित् – कालानन्तरमेवाहमश्रौषं यत् पं० चारुदेवशास्त्रिणो दिवं गताः। दुर्भाग्यवशात् तेषामन्त्येष्टि-समारोहे नाहं गन्तुमशक्नवम्। अतोऽद्यैताभिः पंक्तिभिस्तेभ्यः श्रद्धाञ्जलिं ददामि। ओं शान्तिः, शान्तिः शान्तिः।



# प्राप स्वर्गमभौमचारुचरितः 'श्रीचारुदेवः' सुधीः

पं० टी०वि० परमेश्वर अय्यरः
१४६६, लक्ष्मीबाई नगर, नई दिल्ली - ११० ०२३

प्राचीनेयममर्त्यानां भारती भाति भारते।
भव्या भद्ररसास्वादमहितोत्सवदायिनी ॥ १ ॥

पद्मनाभगिरिशादयः पुरा श्रूयते किल गिराऽनयैव हि।
तात्त्विकैरथ चोदात्तचिन्तनैराचरन् व्यवहृतिं नु लग्नतः ॥ २ ॥

स्वरानुदात्तप्रभृतीस् तथैव
हलादिकानक्षरसञ्चयांश्च ।
अधीत्य सम्यक् तदनुक्रमेण
वैदुष्यमाप्यं ननु शब्दशास्त्रे ॥ ३ ॥

गङ्गा सा सरिदनघा "प्रहर्षिणी" नः
पूतांभा विबुधनता सुसंस्कृता च ।
ये सेवामुभयपरां वितन्वते ते
स्तुत्यर्हा ननु भुवि पूतनामधेयाः ॥ ४ ॥

अन्ये महात्मभिरुदात्तमहाप्रयत्नै-
रुत्तंभिता धरणिरस्तसमस्तखेदा ।
ते पुण्यकर्म सततं यदि नाचरिष्यन्
गर्तेऽपतिष्यदखिलं भुवनं विनष्टम् ॥ ५ ॥

भौम्यारंभा यद्यपि कठिनाः सिद्धिं नीता
विद्वद्वृन्दैरीडितचरितैस्तेजस्वित्वात् ।
अस्मिँल्लोके गर्हितचरितेऽप्येकं श्लाघ्यं
सन्ति द्विता मंगलरतयस्त्यक्तस्वार्थाः ॥ ६ ॥

स्वातिरुचित - विचारा वैदुषी गर्वहीना
स्वहितमनुपरुध्याप्यादृता देवसेवा ।
परधनविमुखत्वं सत्यधर्मप्रसक्तिः
विविधसुगुणवत्ता चेति सर्वं प्रशस्यम् ॥ ७ ॥

चारुदेव वर्ण्यते सरस्वतीपदार्पितं
पुण्यकर्म तावकं बुधैः स्तुतं सदा मुदा ।
शब्दशास्त्रसंगतं दिवौकसां गिरोऽपि यत्
सेवनं च पावनं दरेतरद्यशस्करम् ॥ ८ ॥

रुचिक्षयः सुकर्मसु स्वतो हि हन्तदुर्बले
कदाचिदेषु सक्रियोऽप्यजस्रमेव निष्क्रियः ।
ध्रुवं घुणाक्षरोपमा जयाप्तिरस्य चेद्भवेत्
नितान्तमाफलोदयान्महान् पुनः स्थिरश्रमः ॥ ९ ॥

चचार सुमहत्तपः सुकृतमाप "पृथ्वी"तले
जनुष्षु निखिलेषु वै स खलु चारुदेवः पुरा ।
यदीयमिह सत्फलं वयमवाप्नुमस्तत्कृती-
रधीत्य हि निरन्तरं जितसुधारसा मञ्जुलाः ॥ १० ॥

रिपुर्मित्रं वाऽन्यो भवतु समदर्शीह मनुते
विभेदं नैतेषां; कलयति हि मैत्रीं च करुणाम् ।
उपेक्षां वा तद्वत् परममुदितां तत्तदुचितां
स नः शास्त्री तत्र व्रजति खलु दृष्टान्तपदवीम् ॥ ११ ॥

तस्यामूल्या विविधरचना नामनिर्देशमात्र-
ग्राह्या न स्युर्गहनमननाधीति-संप्राप्यतथ्याः ।
आचार्यस्य प्रकटविवृतिच्छिन्नसन्देहसंघा।
शब्दस्फोटाधिगमनिरस्ताः स्फुटत्वादिबाधाः ॥ १२ ॥

श्रीमान् व्याकरणज्ञ एव नितरां शास्त्रान्तरज्ञः स
नेत्याहुः केचन हन्त पण्डितवरा विस्मृत्य तथ्यं महत् ।
द्वारोद्घाटनकुञ्चिकेयमनघा शब्दागमाभिज्ञता
ज्ञानागारलसच्छताधिकमहाकोष्ठाग्रच - संबन्धिनी ॥ १३ ॥

चाटूक्तिप्रवणाः सुखाप्तविभवा लोकेऽस्थिरस्वोद्यमा
नैवं स्युर्न च खेदिनस्त्वनुभवन्तोऽल्पाप्तितृप्तिं सदा ।
एवं सत्पथ - सुस्थिरप्रयतनः संप्राप्तभूयःफलः
किं नार्हत्यधिकां प्रशस्तिमुचितां पुण्योद्यमश्लाघिनाम् ॥ १४ ॥

रुद्धे कर्मविलुप्तिदुर्विधि विहत्याद्यैः फले मानवः
सामान्यः प्रतिपत्तिमौढ्य-सुजडः सन्न्यस्तकर्मा भवेत् ।
किन्तु प्राज्यगुणो महानभिभवन् सर्वान् विरुद्धान् ध्रुवं
शुद्धां जीवति जीविकां पुरुयशा जिह्मेतरां सर्वदा ॥ १५ ॥

देशे पञ्चनदेऽहियापुर इति ग्रामे जनिं लब्ध्वा
आंग्लाब्देऽनघ - रामकृष्णवसतावृत्वङ्कदिग्भूमिते ।
भव्ये मासि च पञ्चमेऽष्टमदिने श्रीभागवन्त्यात्मजः
पाश्चाद्भाष्यमहाब्धिकुंभतनयो योऽभूदनायासतः ॥ १६ ॥

वास्तव्यं क्रियया निबद्धममलं रम्यं प्रसूते फलं
शास्त्रिण्यास समञ्जसत्वमनयोर्मेधाविनि श्रीमति ।
विद्याऽऽधानकृते स चाप तनयं सत्यव्रतं शोभनं
कन्यारत्नमुषाभिधं च रुचिरं पात्रे प्रदानाय च ॥ १७ ॥

सुष्ठ्वासादित-गीतशिक्षण-वराभ्यासश्च शास्त्री महान्
वाग्देवी-स्तनयुग्मपानमुदितो धन्योऽतिधन्यः सुधीः ।
तादृग्वन्द्य-सुतैर्हि भारतमही ख्याता जगत्यादृता
तादृग्वर्णनभागधेयकृतिनो लेखन्यसौ मादृशाम् ॥ १८ ॥

धीरम्याऽनघ-सत्कृति-प्रणयन-श्रेयस्ततिः पण्डित-
श्लाघाभूति - विभूषितामलतनुः शब्दागमज्ञाग्रणीः ।
तुर्ये मासि तथाहनि ग्रहमिते छन्दाधिके वत्सरे
**प्राप स्वर्गमभौमचारुचरितः श्रीचारुदेवः सुधीः** ॥ १९ ॥

## कमल - बन्धः




○ उद्धार :—चारुदेवः कृती महान् ।

\+ १. रुद्रस्तुतिकरः कृती,
२. देवतास्मृतिमिच्छेम ।
३. कृष्णस्तुतिकृता वाचा,
४. हानीनां क्षतिरस्तु वः ॥

# श्रीचारुदेवशास्त्रिणां गद्य-गौरवम्

**डॉ० सत्यव्रतः**

संस्कृत-विभागाध्यक्षः, राजकीयो महाविद्यालयः, श्रीगङ्गानगरम् (राज०)

अभिनवः पाणिनिः इत्यद्वितीयगतेन शब्देन सविशेषं विश्रुताः, निगमागमादिनिखिलार्थावगाहिन्या प्रखरप्रखरया धिषणयाधरीकृतधिषणाः पण्डिततल्लजाः श्रीचारुदेवशास्त्रिणः शतकल्पमायुरनुभूय विद्वदर्हमनतिसामान्यमदभ्रं किमपि कृत्यजातं च निष्पाद्य परमं धाम प्रयाता इति रुग्विदीर्णानि सुरवाग्घेवाकिनां मानसानि । ऋतम्भरया प्रज्ञया, गभीरेण वैदुष्येण प्रविरलगुणसम्भारेणानवद्याचारेण आत्मानुशासनेन च निर्मलप्रतिभाजुषां प्राचामृषिपुङ्गवानां तुलामारोहन् शस्त्रिवर्य्याः । तेषां निधनेन निरालम्बा जाता सरस्वती, दैन्यमापन्नं शब्दशास्त्रम्, अवसिता ऋषिपरम्परा, विलीनं सौजन्यम्, उच्छिन्नमौदार्यं नामशेषं गता वाग्मिता, शोषमिता काव्यरसिकता, किं बहुना जगज्जीर्णारण्यं समजनि । न जातुचिन् म्रियन्ते मनस्विनः । ब्रह्मविद् ब्रह्मैव भवति इति शब्दब्रह्मविदो मे गुरुचरणाः परब्रह्मणा शब्दब्रह्मणा च सायुज्यं प्रपन्नाः, नात्रारेकः । अव्यभिचारि तद्वचो यत्ते **पार्थिवं काय**मुत्सृज्य यशःकायं समाश्रिताः हम्मीरनरेश्वरमनुशोचता नयचन्द्रसूरिणा यदभाणि तत्कलया विपर्यस्य पार्यंत उदीरितुं निजैः सुकृतैः पुण्यैश्च चारित्रैस्ते प्रतिपदं भुवि राजमानाः प्रत्यक्षं विलोकयन्त इति ।

१८९६ खिष्टाब्दे पञ्चापप्रदेशे होशियारपुरमण्डलान्तर्गते धन्येऽहियापुराभिधे ग्रामे गृहीतजनुषः श्रीरामकृष्णतनुजनुषः पण्डितवर्य्या आशैशवात् शब्दशास्त्रेऽविरलां रुचिं दधुः, अनारतेनाध्यवसायेन च कालान्तरे तत्र तथा पारीणा बभूवुर्यथा पाणिनीये शास्त्रेऽधीतिषु तेऽनन्यलङ्घ्यं पदमवापुः । गहनगहनमपि तच्छास्त्रं तेषां हस्तामलकवद् अप्रच्छन्नं बभासे तस्य तलस्पृङ्मर्मज्ञत्वेन च ते दिग्देशेषु ख्यातिं लेभिरे । न तत्रासीत्काचित्कुलपरम्परा न च तैरसेविषत पाण्डित्यावासभूतानि गुरुकुलानि । जन्मान्तरोत्थितास्तपोराशिभिश्च प्रगुणीकृताः पुण्याः संस्कारास्तत्र कारणतामीयुः ।

अस्ति हि शास्त्रिवर्य्याणां हृद्यं किमपि व्याकरणदर्शनम् । पदान्वाख्यानमेव, शब्दानुशासनस्य सर्वस्वममन्यन्त प्राञ्चः । प्रकृतिप्रत्यया-

गमादेशादिभिः पदानि सम्यग्व्याकृत्य तदनुशिष्टिपरम्परा व्याकरणस्य प्राणत्वेन तैः प्रतिपादिता । पदनिष्पत्तिर्वाऽनुशिष्टिर्वा गरीयसी, अर्थोऽन्त्यजवल्लघीयान्निति बभूव तेषामभिमतम् । पदव्याकृतौ नार्थ इष्यते न च स शिष्यते । पदमात्रानुरोधादेव केषाञ्चित्पदानामर्था प्राचामपि परोक्षा बभूवुरिति न्यासाद् वा पदमञ्जरीतो वा स्वच्छं विभाव्यते । प्राक्षु श्राद्धा अपि पण्डितवर्य्या नेमामनुशासनसरणिम् अविकलाम् अदुष्टां वा मेनिरे । प्रत्यक्षसिद्धं ह्यस्या मोघत्वम् । अनयाधीयमानमध्याप्यमानं च व्याकरणं न बुद्धिविलासाद् व्यतिरिच्यते । शब्दसाधुत्वे शिष्टजुष्टव्यवहारसाधुत्वे च लोकस्योपचिकीर्षं शब्दशास्त्रोद्देश्यत्वेनाभ्युपेयुः शास्त्रिप्रवराः । इदं हि तेषां व्यवसितमभिमतं-वाक्यं व्याकरणे पदात् कथमपि न हीयत इति । शब्दशास्त्रं वाग्व्यवहारेण संयोज्य नूत्ना कापि व्याख्यानपद्धतिः शास्त्रिवर्य्यैः प्रावर्ति । नितान्तं काम्यमपि शास्त्रसाधुत्वं व्यवहारानुरोधाच्छिष्टानभिधानाच्च नाभिनन्दनीयम् । शास्त्रपुष्टमपि तदेव ग्राह्यं यच्छिष्टजुष्टं, नेतरत् । तदनुशिष्टिरेव व्याकरणस्य महिष्ठं गरिष्ठं च प्रयोजनम् । अत्र हि पण्डितप्रवरा न तन्वपि विसंवदन्ति महाभाष्यकृतो येन भूयांसः प्रयोगाः शिष्टानभ्युपगमान् न्यक्कृताः । एतामश्रुतपूर्वां रीतिं लोके प्रथयितुं बद्धमूलां च तां विधातुं स्वीयान् ग्रन्थान् ते प्रणीतवन्तः । शब्दापशब्दविवेकादयः प्रबन्धाः शब्दव्यवहारसाधुत्वे विनेयान् विनेतुमेव निरमीयन्त । तत्साहित्यमुकुटायमानो व्याकरणचन्द्रोदयः शास्त्रिवर्य्याणां व्याकरणदर्शनस्य आदर्शव्याख्यानारम्भत्वेन सविशेषमभिनन्दनीयः । अत्र हि पूर्वाचार्यैः प्रक्रान्तं प्रत्नं सम्प्रदायं सर्वात्मना परिपाल्य पदान्वाख्यानं शिष्टव्यवहारानुगेन वाक्येन तथा समायोजितं यथा पदमत्र वाक्यायते, वाक्यं च काव्यायते, काव्यं च रसायते, रसश्च मृद्वीकायते । शास्त्रसिद्धानि पदानि चन्द्रोदये निखिलवाङ्मयगृहीतेन प्रसन्नमधुरेण वाक्यनिचयेन सप्रयत्नं पर्यपोषि शास्त्रिवर्य्यैर्येन कर्कशं शास्त्रमधीयानोऽपि काव्यरसस्यापूर्वस्य गमनीयो भवति पाठकः । इत्थं वाग्व्यवहारेण सनिर्बन्धं सम्बद्धं स्वाभिधानं चान्वर्थं कुर्वाणो व्याकरणचन्द्रोदयोऽज्ञानमन्यथाज्ञानं चैकपदे व्याहृत्य ज्ञानज्योत्स्नां दिक्षु प्रसारयति ।

अन्तरात्मना शास्त्रप्रज्ञोपेता अपि शास्त्रिवर्य्याः काव्यरसलोलुपा सहृदया आसन् । ललामभूतं प्राचीनं काव्यनिकरमविकलं तैरध्यगायि स्वकृतिभिश्च तदुपकर्तुं प्रशस्यं प्रयत्नं व्यधायि । यत्सत्यं संस्कृतगद्यदारिद्र्यमपाकर्तुं कृताभिनिवेशेषु साम्प्रतिकेषु प्रबन्धकृत्सु ते तुङ्गं किमपि पदमारोहन्ति ।

लवपुरतः (लाहौरतः) १९३० खिष्टाब्दे प्रकाशितं श्रीगान्धिचरितं शास्त्रिवर्य्याणां परिपचेलिमापन्नाश्चर्यंकरी गद्यकृतिरस्ति। अत्र लोकवन्द्यस्य परोपकरणीकृतकायस्य सविग्रहस्येव धर्मस्य महामहिम्नो गान्धिनो जन्मनः प्रभृति लवणशासनातिक्रमेण कारडीग्रामे तदासेधपर्यन्तमलोकसामान्यं चरितम्प्रथमतया विबुधवाचोपनिबद्धम् । षट्परिच्छेदात्मकोऽयं प्रबन्धोऽभिनवां चरितकाव्यशैलीं साहित्य आसूत्रयति, प्रथितयशसां गद्यसम्राड्भूनानां सुबन्धु-बाणादीनां कृतिभ्यश्च सुदूरं विप्रतिपद्यते । प्रतिपाद्यं सपरिणाहवर्णना-कदम्बकैः परिक्षिप्तं व्यावर्ण्यत न च कालजीर्णालंकारततीनां साग्रहमनपेक्षं वा समावेशोऽकार्यत। कथ्यधारात्र वर्णनसेतुभिरव्याहतम् अबाधं प्रवहति। गान्धिचरितम् आधुनिकीभिरांग्लादि । भाषाभिर्निबद्धैश्चरितकाव्यैः साम्यं बिभर्त्ति शैल्या प्रणयनपद्धत्या । तद्वदत्रापि विषयाभिव्यक्तिः प्राधान्यं प्रपद्यते। अन्यत्सर्वं च तदङ्गतामापद्यते । उच्चावचावस्थितिनिभृतो व्यतिकरभूयिष्ठोऽयमर्थस्तथौजस्विन्या संस्कारवत्या हृद्ययानवद्यया वाचा शास्त्रिवर्य्येर्न्यबन्धि यथाप्राक्तनमापीयं गीः साम्प्रतिकेन विषयेण मनागपि नाभिभूता। अविकलेयं सकलं भावभरं भव्यं भावयति । इदं हि पण्डितवर्य्याणां वाच्यधिकारं शब्दशास्त्राधीतिं वाग्व्यवहारावगतिं च प्रकामं ख्यापयति। सकलं प्रसङ्गं ते तदनुरोधिन्या परिमृष्टया बलिष्ठया च वाचा निबद्धुं प्रभवन्ति। पञ्चापवैशसव्यतिकरो वा स्याद्, उपोषणवर्णना वा सत्याग्रहनिरूपणा वा भवेत्कार्यनिवृत्तिर्वा कवेस्तूलिका सर्वस्मै समं वैभवं प्रदातुमलम् निभालयतां सत्याग्रहस्वरूपपुरस्सरं गान्धिन इदमुद्बोधनं सभायाम् —

**सत्याग्रह आत्मबले प्रतितिष्ठति। ··· ··· आत्मबलमजय्यं नित्यं च। शरीरस्य तु बलं महीयसा शक्त्यन्तरेण शस्त्रैः सैन्यैश्च विजेतुं ध्वंसयितुं वा पार्यते। सत्याग्रह एवं रूपस्यात्मबलस्य विज्म्भणप्रकारः। सत्याग्रही यद्यपि शत्रुं न कदर्थयति नेतरं शातयति तथापि हेलया शारीरं बलं पराभवति। ··· ··· अतः क्रूराः इमे राज्याधिकृताः स्पष्टमिदमावेदनीया.— यावदच्छिन्नं नः शिरस्तावद् वयं नेमामवधीरणां सहिष्यामहे । अतो यद्येतद्विधानानुविधायित्वमस्माकमिष्यते तदेतत् प्रथमं कर्तनीयम्।"**

पञ्चनदसंहारस्य लोमहर्षकं रौद्रत्वमधिकृतां क्रूरत्वञ्चात्र वर्णने साकल्येन सपदि प्रत्यक्षीभवति—

**संनिपतिताः जनाः, निरुपप्लवा निरायुधाश्चासन्। ······ सेनापतिस्तु यन्त्रगुलिका - प्रक्षेपणीरादाय जहलोद्यानमागात्। प्रबोधनमन्तरेणैव च**

निरायुधेषु तेष्वाग्नेय-चूर्णप्रक्षेपणं प्रारभत। अयञ्चाग्निविसर्ग आचूर्ण-परिसमाप्तेर्दशकला यावत् प्रावर्तत। ...... पञ्चशतं षट्शतं वा तत्र प्राणैर्वियुक्ताः। एतदतिरिक्तसंख्याश्च क्षताः। ...... अभ्यर्हिता नागरा अधिकरणान्यकृष्यन्त, कशयाऽभ्यहन्यन्त, जानुभ्यां विसर्पणं च बलाबकार्यन्त।

गान्धिचरिते विद्यते गान्धिमहाभागस्य केषाञ्चिदभिभाषणानां पत्राणां चानुवादः। अयं भाषापरिवर्तस्तथा नैपुण्या व्यधायि सहजया गिरा च प्राणायि यथा सोऽनुवादपदवीं विहाय मूलपदं गृह्णाति। अस्ति अत्र चित्रकरी परिचेलिमा, अनन्यत्रलभ्या मनोरमा च वाक्।

गान्धिचरिते पण्डितवर्य्याणां पाण्डित्यं पदे पदे दृष्टिपथमायाति। तेषां गद्यकारत्वमत्र वैयाकरणेनाक्रान्तं नेदं विप्लुतार्थं वचः। शास्त्रिवर्य्येष्वपारा प्रतिभा विद्यते परं सा सर्वत्र पाण्डित्यघटयैवावृताऽऽविर्भवति। तेऽप्रतिमं स्वीयं शब्दशास्त्रवैदुष्यमत्रैकपदे समाहितवन्तो येनेदं गद्यकाव्यं तेषां पाण्डियवैजयन्तीं दधानं प्रतिभाति। असंस्तुतचराणां क्लिष्टक्लिष्टानां लुङां लिटां चानायोऽत्र साग्रहं ग्रथितो येन संदानितपदा अध्येतारः सायासमेव प्रसर्तुं प्रभवन्ति। अवादीधरन्, न्यभान्त्सीत्, उपालप्सत संप्राहृषत, उपाक्रंसि इत्यादयः कष्टाः प्रयोगाः प्रतिपदं तेषां गतिं रुधन्ति। **अस्मिन्नचिरेण पिप्रिये भूमिपः** (पृ० ५) इत्यत्र प्रीङोऽकर्मकत्वम्, **व्यवहाराधीतये मोहनेनाङ्ग्लदेशस्य गमनमवश्यसंविधेयं मयेति** (पृ० ११) इत्यत्र मोहनस्य करणत्वम्, **तत्र सानन्दं सस्मितं भ्रूविकारमन्तरेण च ता रक्षिवर्गैरग्राहयन्** (पृ० ४५) इत्यत्र रक्षिवर्गस्य करणत्वम्, **प्रोषितान्भरतवर्षीयानदयमन्याय्यमाचरन्ति** (पृ० ५४) इत्यत्र भरतवर्षीयान् इति कर्मत्वं कथं समाधेयमिति न गोचरं पण्डितम्मन्यानाम्। अनेन गान्धिचरिते विपश्चितां परीक्षा प्रकामं भवति. परमयं पाण्डित्यातिरेको वाचो लालित्यं प्रसादं च व्याहन्तीति न संशीतिः। तद्धि दुर्लभप्रायमत्र। काव्यमिदं महात्मनः प्रकृष्टेनर्षिकल्पेन पुण्येन चरितेन राजनीतिवैशारद्येन राद्धन्तानुविधायित्वेन भारतस्वातन्त्र्यसमरवृत्तेन चाद्यन्तं प्राणितीति किमपि गौरवमावहति।

शास्त्रिवर्य्या उद्गीतमहिमानो निबन्धकृतोऽपि सन्ति। वैदेशिकीं चिन्तननिभृतां निबन्धशैलीमनुरुध्य य आधुनिका निष्णाता देववाण्या निबन्धनिचयान् काले काले निबबन्धुस्तेषां गुरुचरणा मुखराः। १९५० खिष्टाब्दे काशीतः प्राकाश्यमिता प्रस्तावतरङ्गिणी विविधविषयावगाहिनां वैदुष्यनिर्भराण-

प्रबन्धरत्नानां चेतोहरा मञ्जूषास्ति । एकषष्टिप्रस्तावात्मिकेयं तरङ्गिणी पञ्च तरङ्गान् व्याप्य विराजतेतराम् । पण्डितप्रवेकानां व्यक्तित्वमिव प्रस्तावतरङ्गिणी पुराणत्वनवत्वयोः सारं समाहृत्य समुदेति !

प्रस्तावतरङ्गिण्याः प्रबन्धेषु निबन्धकर्तुरदभ्रं वैदुष्यं प्रकामं प्रतिफलति । प्रायेण सर्वे निबन्धा गम्भीरं सुष्ठु च परिचिन्तिताः साधुचोपवर्णिताः । केषुचिच्च विलोक्यतेऽपूर्वं विचारप्रात्यग्र्यं तदृद्धिश्च । पानीपतसमरः, छात्राश्वरूप्यकाणामात्मकथाः, दारुणा हि महाहवा भवन्ति इत्यादयः आधुनिकाः प्रबन्धाः प्रस्तावतरङ्गिण्यामेव प्रथमतया दृक्पथमवतरन्ति । विचारात्मकानां शास्त्रीयाणां च विषयाणां विवचने शास्त्रिवर्य्यैरेकतः पारम्परीणा पद्धतिरालम्बिता परतश्चाभिनवा विचारसरणिः परिगृहीता । अनेन तरङ्गिण्याः प्रबन्धाः प्रत्यग्रामभिख्यां पुष्णन्ति रोचकतां चानवद्यामावहन्ति । केचित्प्रबन्धाः प्रबन्धकर्तुः प्रौढिं प्रकटयन्ति । विवक्षातः कारकाणि भवन्ति, पदार्थविकासः, करोतिना सर्वधात्वर्थानुवादः क्रियते इत्यादयः केचिदपरे च तस्य ज्ञानस्य गाम्भीर्यं निर्दुष्टां च व्युत्पत्तिं प्रख्यापयन्ति । परिपचेलिमा हि या तदमीषां बंहिष्ठं वैशिष्ट्यम् । हासव्यङ्ग्ययोः समावेशश्चेदं प्रगुणीकरोति ।

गान्धिचरितस्य कार्कश्यं विहाय पण्डितप्रवराणां शैली प्रस्तावतरङ्गिण्यां प्रसादं गृह्णातीति तोषाय । तरङ्गिण्या निबन्धेष्वनेकत्र शब्दसौष्ठवसहचरितं पदलालित्यसध्रीचीनं चेतोहरं माधुर्यमस्ति । शास्त्रिवर्य्याणां शास्त्रपारदृश्वता, प्राच्यप्रतीच्यशोधावगतिः, इतिहासप्रावीण्यं, भाषापाण्डित्यं, शब्दशास्त्रसिद्धत्वं च गरिष्ठां श्लाघामर्हन्ति, निबन्धकर्तुर्वैदग्धीं च सविशेषं प्रख्यापयन्ति । प्रबन्धकृतो वर्णनाशक्तिस्तलस्पर्शिनी मर्मोद्घाटिनी चास्ति । हीरोशीमाध्वंसनस्येदं वर्णनं कल्पनाजन्यमपि याथार्थ्यपदवीमारोहति । ··· ··· तथा न्यक्षेणोज्जासि तदभूद्यथा नात्र पुरा कदाचिदधिष्ठानं किमप्यासीदिति जायते प्रतीतिः । समतलापि भूरुत्खातिनी समजनि, निरुदका च सोदका पुलिनवती च स्रोतस्वती । निर्दग्धानि राजसदनानि । संहृतानि हर्म्याणि । कषितानि च कुटीराणि । भस्मावशेषतां च गतानि तरुलतानिकुरम्बाणि । सहस्रशो वपुष्मन्तः प्रतिभानवन्तः कलावन्तस्तत्पत्तनस्थाः निमेषेण यमधानीं प्रविष्टाः, का कथा मृगशकुनिसृपादीनाम् ? गगने स्वैरविहाराणि पत्त्ररथकुलानि वासाय प्रतिष्ठमानान्यन्तराऽध्वानमग्निच्छटातापेन सन्तप्तानि विचेष्टमानानि सद्यः कालधाम गतानि । किं बहुना ! भूकम्पेनाप्लावेन वा न तथा

ज्यानिर्जीवलोकस्य कदाचिदजनि यथाऽनेनास्त्रेण नूत्नेन संस्कारातिशय-विस्मितैरमेरीकास्थैः प्रयुक्तेन। निवेदनायां ग्रन्थकृता यन्न्यवेदि न ह्येतद-विलोकने व्यापृतास्ते (विपश्चितः) कालक्षेपस्य कृतेऽनुतप्स्यन्ते मान्द्यं वा समुत्साहस्य लप्स्यन्ते, अविप्लुतार्थं तद्वचोऽविकलम्। यत्सत्यमद्यत्व ईदृशानां प्रबन्धानां कर्त्तारो बोद्धारोऽपि विरलाः। अमीषां केचित्तु संस्कृत-गद्यस्य किरीटायमाणा विराजन्ते।

अवदातमिदं कर्कशे शास्त्रे मृदुनि च काव्यवस्तुनि लीलायते पण्डित-वराणां भारती। एतादृशं पाण्डित्यं प्रविरलविषयं साम्प्रतम्। स्वर्या तेषु तेषु तद्भूय आहृतमिति शोकाय। पल्लवग्राहिणो भूयिष्ठाः शास्त्रिसदृक्षाः मर्मग्राहिणोऽल्पिष्ठाः।

वेश्यानामिव विद्यानां मुखं कैः कैर्न चुम्बितम्।<br>
हृदयग्राहिणस्तासां द्वित्राः सन्ति न सन्ति वा॥

द्वित्राणां मध्येऽवर्तन्त श्रीचारुदेवशास्त्रिणः।



# श्रीचारुदेवाष्टकम्

डॉ० रामकिशोर मिश्रः
संस्कृत-विभागाध्यक्षः, महामना मालवीय डिग्री कॉलेज,
खेकड़ा (मेरठ) - २०११०१ (उ० प्र०)

सारस्वतं जगति सारमवाप्य सर्वं
प्राप्ता हि येन हृदयेऽत्र सरस्वती सा ।
यो गद्यपद्यरचनादिकलाप्रवीणस्-
तं नौम्यहं कविवरं बुधचारुदेवम् ॥ १ ॥

हा दैव ! संस्कृतगिराऽभवदद्य शून्या
शून्या च संस्कृतसभा बुधमण्डली च ।
आकाशयन्त्रवचसाऽद्य वयं विषण्णाः
स्वर्गं गतः स नवपाणिनिचारुदेवः ॥ २ ॥

(१८९६)
शान्तग्रहाऽष्टवसुधाऽङ्कितवत्सरे यः
पञ्जाबधरां स्वजनुषा सदलञ्चकार ।
येनाऽत्र गान्धिचरितं रचितं बुधेन
तं गद्यकारमिह नौमि सुचारुदेवम् ॥ ३ ॥

येनेत्थमापिशलि - पाणिनि - काशकृत्स्न-
श्रीशाकटायनकृता रचना अधीताः ।
प्राप्ता प्रसिद्धिरिह येन च शब्दशास्त्रे
स्वर्गं गतः स नवपाणिनिचारुदेवः ॥ ४ ॥

श्रीबोधिसत्त्वचरितं रचितं च येन
येनेन्दिराचरितकाव्यमहो ! कृतं च ।
सत्यव्रतः कविवरः स सुतोऽस्ति यस्य
तं नौम्यहं कविवरं बुधचारुदेवम् ॥ ५ ॥

तेजस्विता जयति संस्कृतबोधसत्ता
वैदुष्यमत्र परितो विबुधांश्च यस्य ।
(१९८७)
वर्षेऽश्वनागनिधिचन्द्रमिते गते हा !
स्वर्गं गतः स नवपाणिनिचारुदेवः ॥ ६ ॥

सत्यव्रत ! भोरुषः ! शरत् !
पितृमृत्योरिह धैर्यं धारय ।
देवान् स सरस्वतीसुतस्-
तानध्यापयितुं दिवं गतः ॥ ७ ॥

ब्रह्मन् ! विष्णो ! प्रभो शिव !
भो देवाः ! मातर्वसुन्धरे !
पितुरात्मने गताय दिवं
चिरशान्ति दत्तेति कामये ॥ ८ ॥

# यावज्जीवमसामान्यं तपोऽतप्यत तेजसा

डॉ० सुद्युम्नाचार्यः
संस्कृत-विभाग, मु० म० टाउन पोस्ट ग्रेजुएट कालेज, बलिया (उ० प्र०)

संस्कृतजगति प्रथितयशसां श्रीमतां चारुदेवशास्त्रिणां गानं गायन्ती वाणी, चरितमुपवर्णयन्ती लेखनी कृतार्थतामुपयाति । ते ह्यवितथं पाणिनेर-परपर्यायरूपेण भुवि परिवृढाः । वाचं प्राचीं व्याकुर्वाणास्ते महाभागा यावज्जीवम् ऋषितुल्यं जीवनं व्यत्यायन् । सत्यमेतादृशं विद्वांसमुपलक्ष्यैव उच्छ्वासान्तेऽप्यखिन्ना येषां वक्त्रे सरस्वती, कथमाख्यायिकाकारा न ते वन्द्याः कवीश्वराः इति बाणभट्टेन प्रोक्तम् । एवं सन्निबन्धविधायिनां दिवम् उपेयुषामपि कान्तं काव्यमयं वपुर्लोके समास्ते एव इत्यत्र नास्ति सन्देहलेशोऽपि ।

संस्कृतभाषायां बहवः प्रयोगाः कालक्रमानुसारम् अवालुप्यन्त, व्यस्मर्यन्त वा । आधुनिके युगे बहूनां प्रयोगयोग्याणां शब्दानाम् आवश्यकता समनुभूयते । श्रीमतां पंडितप्रवराणाम् अस्मिन् विषये सहयोगोऽनुपम एव । ते हि न केवलं संख्यातिगानां शब्दानां समुद्धारका, अपितु आधुनिकप्रयोगानु-सारम् आविष्कारका अपि । अनुवादकला-शब्दापशब्दविवेक-प्रस्तावतरंगिणी-नामधेयान् बहून् ग्रन्थान् विरचयता मनीषिणा परस्सहस्राः शब्दास्तेषां वाक्येषु प्रयोगाश्च व्यवस्थापिताः, असाधुशब्दप्रयोगाश्च निपुणं निरीक्षिताः । शास्त्रेषु लब्धवर्णोऽसौ शब्दान् व्याचक्षाणः न कमप्यन्यम् अनुकरोति — वस्तुतस्तस्य विवरणपद्धतिरनितरसाधारण्येव । मन्ये, भट्टिकाव्यग्रन्थे यद्धि व्याकरणप्रोक्त-शब्दानां साहित्यप्रयोगेषूपकल्पनम् उपपादितम् ततः पश्चात् तत्सतरीयं कार्यं श्रीमतामेव संवर्तते ।

श्रीमन्तः पण्डितप्रवराः त्रिंशद्-वर्षेभ्योऽप्यूर्ध्वम् आचार्यकं कुर्वाणा अपरिमितान् छात्रान् वाग्व्यवहारादर्शम् अध्यापिपन् । अद्यत्वे सुबहवो लेखकास्तेषां निर्देशान् ध्यायं ध्यामनुपालयन्ति, स्वप्रबन्धं च रुचिरं ग्रथ्नन्ति । संस्कृतगोष्ठीषु तेषां लेखः गभीरेषु गभीरतमः, प्रशस्येषु च प्रशस्यतमः संवर्तते स्म । एकदा प्रयागविश्वविद्यालये शब्दशक्तिविषये भाषमाणानां पण्डित-प्रवराणां तलस्पर्शि पाण्डित्यं लेखकोऽयं निपुणमद्राक्षीत् । सत्यं, शब्दप्रख्याने अव्याहतं क्रमते स्म तेषां बुद्धिः । तेन मनीषिणा प्राचीनग्रन्थान् उद्धरता

लक्षणाजन्याः, समासादियुता ये प्रयोगा उपपादितास्ते तस्य शास्त्रव्यापिनीं बुद्धि प्रमाणयन्ति, संस्कृतसाहित्ये च विशदं मानोज्ञकम् उपपादयन्ति ।

उपसर्गार्थचन्द्रिका नाम्नी तेषां कृतिः सर्वाधिका प्रौढा संवर्तते । चतुरशीतिवर्षे ग्रन्थममुं विरचयता पण्डितप्रवरेण संस्कृत-साहित्ये प्रतिमाना-न्युपास्थायिषत । तस्मिन्नपि काले तस्य प्रवयसः प्रज्ञामेधे वर्धमाने आस्ताम् । परस्सहस्रैरुदाहरणैर्विलसिता तस्य कृतिः संस्कृत साहित्ये विराजते । तत्र नास्ति कोऽपि प्रयोगः य उदाहरणैर्विलसितः न स्यात् । आवैदिक-साहित्यम् उदाहरणा-न्युद्धरन् पंडितप्रवरः रौथवोथलिंगप्रोक्तं शब्दकोशमपि अत्यक्रमत । विषयेऽस्मिन् भूमिकायां लेखकस्याभिमानः नाकिंचित्करः । उपसर्गैः प्रतियुगं परिवर्तमानान् असख्यान् अर्थान् पण्डितप्रवर एव अनूद्धरणं विवरीतुं क्षमते । अहो विस्तारः पण्डितप्रवरोक्तानां शब्दानाम् । क्व लघुता द्वाविंशतिसंख्यकानाम् उपसर्गाणाम्, क्व च विशालता तन्निर्मितानां शब्दानाम् ।

पण्डितप्रवराणां ग्रन्था इदानीं संस्कृतसाहित्यस्य प्रतिमानभूताः समपद्यन्त । महाभाष्यवाक्यपदीयटीकादयः व्याकरणस्य दर्शनम् अथ चान्ये ग्रन्थाः संस्कृतसाहित्यं समर्धयन्त । साम्प्रतम् अस्माकं संस्कृतसाहित्यं तैर्ग्रन्थैर्विना न कदापि पूर्णताम् इयर्ति । पाणिनिना प्रवर्तमाने शब्दस्रोतसि तत्पूजानुविधायिषु च तेषांनाम धेयं ससम्मानं समंकितं विद्यते । विश्वं संस्कृतं सबहुमानं सशिरोणामं संस्कृतसमर्धनविधौ तेषामृणित्वं स्वीकरोति ।



# पाणिनीयवाक्यस्वरूपसमीक्षा

**डॉ० नरदेव शास्त्री**

व्याकरणाचार्यः, एम० ए०, विद्यावारिधिः (पी-एच० डी०)

साहित्यरत्नम्, प्राध्यापकः, संस्कृतविभागः, हिमाचलप्रदेशविश्वविद्यालयः, शिमला

पाणिनीयस्य व्याकरणस्य साक्षात्प्रयोजनं पतञ्जलिः शब्दानुशासनं समाचष्ट[1]। साधुभिरसाधुभिश्च शब्दैः समानायामर्थावगतौ सत्यामपि शब्दैरेव भाषितव्यं नासाधुभिरिति पाणिनीयः शब्दप्रयोगसिद्धान्तः स्वीक्रियते। स्वरवर्णादिभिरदुष्टानां शब्दानां प्रयोगो व्याकरणाध्ययनं विना नैव सम्भवतीति कोऽसावनुशासनीयः शब्दः? यदर्थमिदं व्याकरणाध्ययनमावश्यकमिति आशङ्क्य मनसि अष्टाङ्गं पाणिनीयमिदं व्याकरणमिति स्वीकुर्वाणो भर्तृहरिः[2] अनुशासनीयशब्दद्वैविध्यं स्वीकुरुते—

(क) अन्वाख्येयाः, (ख) प्रतिपादकाश्च।

अन्वाख्यायन्त इति व्युत्पत्तिनिमित्तात् पदानि वाक्यानि च अन्वाख्येयाः शब्दा उच्यन्ते[3]। लघुनोपायेन प्रकृतिप्रत्ययकल्पनया सामान्यविशेषवल्लक्षणेन च पदानि वाक्यानि च व्याकरणेन अन्वाख्यायन्ते। यद्यप्यत्र पाणिनीये सिद्धान्ते वाक्यस्फोट एव वास्तवो विद्यते, लोके च 'वृक्षः पतति' इत्यादिवाक्येनैवार्थावगतिः दृश्यते। वृक्षमात्रोच्चारणेन तदर्थावगतिर्न दृश्यते, वाक्ये पदानि वर्णाश्च कल्पिता एव तथापि लघ्वर्थमिदं व्याकरणमिति सिद्धान्ते लघुनोपायेन प्रतिपाद्यं शक्तिग्रहस्य साधुत्वबोधस्य च अशक्यत्वाद् वाक्येभ्यः पदानि पदेभ्यश्च प्रकृतिप्रत्ययान् अपोद्धृत्य प्रकृतेः प्रकृत्यर्थे, प्रत्ययस्य च प्रत्ययार्थे शक्तिः साधुत्वञ्च व्याकरणेन व्यवस्थाप्यते। एतद्द्वारा च पदार्थे पदस्य, वाक्यार्थे च वाक्यस्य शक्तिः साधुत्वञ्च सुग्रहमस्तीति अनुशासनलाघवार्थमेषा प्रकृतिप्रत्ययकल्पना विद्यते; न तु तयोरन्वाख्येयत्वम्। प्रकृतिप्रत्ययप्रकल्पनद्वारा पदवाक्यान्वाख्यानमेव शास्त्रकृतामाशयः। एवञ्च आचार्यभर्तृहरि-

---

१. अथ शब्दानुशासनम्। अष्टा०, महाभा० पस्प०।

२. वाक्यपदीयम् १. २४-२६.

३. पाणिनीयशब्दार्थसम्बन्धसिद्धान्तः, शब्दका० अनु० शब्दसमुद्देशे।

प्रतिपादितान्वाख्येयपदेन पदवाक्ययोरेव ग्रहणं युक्तम् । तत्त्वदृष्ट्या अखण्डेऽपि शब्दे व्यवहारसम्पादनार्थम् अनुशासनसौकर्यार्थञ्च पदभेदः स्वीक्रियते शब्दतत्त्वविद्भिः। अनुशासनीयशब्दयोः प्रतिपादकशब्देनेह भर्तृहरेः प्रतिपाद्यत्वासमानाधिकरणस्य प्रतिपादकत्वस्य विवक्षितत्वात् प्रकृतिप्रत्ययौ अभिप्रेतौ स्तः। पदानां वाक्यप्रतिपादकत्वेऽपि प्रकृतिप्रत्ययापेक्षया तेषां प्रतिपाद्यत्वसत्त्वान्न तत्र प्रतिपादकत्वातिव्याप्तिः।

यद्यपि भगवान् पतञ्जलिः क्वचिदपि अन्वाख्येयप्रतिपादकभेदेन अनुशासनीय-शब्दं नैव सङ्गृह्णाति तथापि अथ शब्दानुशासनमिति[५] प्रतिज्ञाय अथ गोरित्यत्र कः शब्दः ? इत्याशङ्कां समादधानः येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः इत्यभिधानेन पदवाक्ययोरन्वाख्येयत्वम् अनुमनुते एव। यथापतञ्जलि[६] शब्दस्वरूपनिर्ग्रहं विना कश्चनापि शाब्दः सम्प्रत्ययः नैवावलोक्यते लोके। लौकिकप्रयोगं विना च शब्दस्वरूपनिर्ग्रहो नैव सम्भवतीति शब्दस्वरूपनिर्ग्रहस्याधारः पदं वाक्यञ्चाभ्युपगम्यते। समर्थानां प्रथमाद्वा[७] इति सूत्रं भाषमाणः पतञ्जलिः कृण्तो वाक्यस्यान्वाख्येयत्वं प्रास्तावीत्। सूत्रे वावचनं किमर्थमिति शङ्कां निराकुर्वाणः भाष्यकार एवमाह—नित्येषु शब्देषु वाक्यस्यानेन (वावचनेन) साधुत्वमन्वाख्यायते[८]। अयमस्ति भाष्यकृतामत्राशयः—यद्यपि वृत्तिवाक्ययोरवान्तरार्थभेदोऽस्ति, तथापि प्रधानेऽर्थेऽभेदाद्वृत्तिवाक्ययोः समानार्थकत्वमभ्युपगम्यते। यथा राजपुरुषं प्रेषय इत्युक्ते योऽर्थः प्रतिपन्नः प्रेष्यते, राज्ञः पुरुषं प्रेषय इति वाक्ये प्रयुक्तेऽपि स एवाऽर्थः प्रेष्यते, न त्वन्यः कश्चित्, परमत्र वृत्तिवाक्ययोः प्रवृत्तिनिमित्तैक्येऽपि वावचनं विना समासवृत्त्या वाक्यस्य बाधः स्यात्। वाक्यस्य प्रयोगश्च प्रामादिकोऽसाधुर्वा कल्प्येत। यथा गोशब्देन गावीशब्दो निवर्त्यते। गावीशब्देनाऽधिकस्य स्त्रीत्वस्याऽवगतौ सत्यामपि जातिलक्षणस्याऽभिन्नत्वाद् गोशब्देन गावीशब्दप्रयोगो बाध्यते,

---

४. शब्दस्य न विभागोऽस्ति कुतोऽर्थस्य भविष्यति विभागैः प्रक्रियाभेदमविद्वान् प्रतिपद्यते ॥ (वाक्यप० २. १३)

५. अष्टा० महाभा० प्रस्प०।

६. रूपनिर्ग्रहश्च शब्दस्य मान्तरेण लौकिकप्रयोगम्।

—अष्टा० महा०, १. २. ६४

७. अष्टा०, ४. १. ८२.

८. अष्टा०, ४. १. ८२ (महाभा०)।

तथैवाऽत्र वाक्यस्याऽपि समासेन बाधः स्यात्। अतो वाक्यस्य साधुत्वप्रतिपादनार्थं सूत्रे वावचनं कर्त्तव्यमिति भाष्यकृतो हृदयम्। यदत्राधिक्यं स वाच्यार्थः[९] इति वाच्यार्थं परिचाययतः पतञ्जलेः वाक्यस्यान्वाख्येयत्वमेवाऽभिप्रेतम्।

न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णाऽनुस्वारदीर्घजश्चरविधिषु[१०] इति पाणिनीयसूत्रस्थां काशिकावृत्तिं विवृण्वानो जैनेन्द्रबुद्धिपादाचार्यः पाणिनीयमिदं व्याकरणं पदसंस्काराय वाक्यसंस्काराय चेति स्वीकुरुते[११]। एतच्च स्वयं पाणिनिनाचार्येण युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः[१२] इत्यादि सूत्रयता युष्मदाद्युपपदे मध्यमादि-पुरुषविधानाद् वाक्यसंस्कार-प्रयुक्तमपि एतच्छास्त्रमिति सूचितम्।

प्रकृतिप्रत्यययोश्चापि अनुशासनीयत्वं भाष्यकृतामभिप्रेतम्। प्रकृति-प्रत्ययविषये पतञ्जलिना एष सिद्धान्तः स्वीकृतो यन् न हि केवला प्रकृतिः प्रयोक्तव्या, न वा प्रत्ययमात्रमेव। सप्रत्यया प्रकृतिः प्रयोक्तव्या, सप्रकृतिश्च प्रत्ययः[१३]। एवञ्चाऽत्र पाणिनीये तन्त्रे चत्वारि लक्ष्याणि सन्ति—

(१) वाक्यम्, (२) पदम्, (३) प्रकृतिः, (४) प्रत्ययश्च। एवञ्च अथ शब्दानुशासनमिति वाक्ये—अनुशासनीयशब्दत्वेन वाक्य-पद-प्रकृति-प्रत्यय-चतुष्टयमभिप्रेतम्। तेषु पाणिनीयं वाक्यस्वरूपमत्र विचार्यते।

अर्थाभिधानं हि वाचामुद्देश्यं स्वीक्रियते। अर्थं सम्प्रत्याययिष्यामीति विचार्य प्रयोक्ता शब्दे प्रवर्तते। अस्मादेव पतञ्जलिराचार्यः अर्थनिमित्तकं शब्दं व्याचष्ट[१४]। अर्थाऽभिव्यक्तिश्च वाक्येनैव सम्भवति न पदादिभिरिति आचार्याणां निष्कर्षो दृश्यते। वृक्ष इत्यादिपदप्रयोगमात्रेण न हि कश्चिद् अभिधेयः प्रस्फुटो भवति, वाक्येन तु अर्थाऽवगतिर्भवतीति पूर्वमस्माभिः प्रतिपादितम्। सङ्ग्रहकारो व्याडिराचार्यः पदानामर्थो रूपञ्च वाक्यादेव सञ्जायत इति समाचष्ट[१५], अतो वाचामन्त्यावधिर्वाक्यमेवेति वक्तुं शक्यते।

---

९. महाभा०, अष्टा०, २. ३. ४६.
१०. अष्टा०, १. १. ५८.
११. अष्टा०, १. १. ५८/का० वृ०/न्यासे।
१२. अष्टा०, १. ४ १०५.
१३. महाभा०, अष्टा०, १. २. ६४.
१४. महाभा०, अष्टा०, ७. १. ३३.
१५. व्याडिनाम्नोद्धृतः स्वोप०, वा० प०, १. २४.

एतस्य वाक्यस्य स्वरूपविषये विदुषां परस्परं महान् विवादो दृश्यते। भर्तृहरिः वाक्यस्वरूपविषयेऽष्टौ मतानि प्रास्तावीत्—

आख्यातशब्दः; सङ्घातः, जातिः सङ्घातवर्तिनी
एकोऽनवयवः शब्दः, क्रमः, बुद्ध्यनुसंहृतिः[१६] ।
पदमाद्यं, पृथक् सर्वं पदं साकाङ्क्षमित्यपि
वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायवादिनाम्[१७] ॥

तान्यत्र क्रमश उपस्थाप्यन्ते—

## (क) आख्यातशब्दो वाक्यम्—

वाक्ये आख्यातस्य क्रियाया वा भवति प्राधान्यम् । अन्ये कारकशब्दाः क्रियाया एवाङ्गभावं प्रतिपद्यन्ते । शाब्दबोधे च क्रियाया एव भवति प्राधान्यम्[१८] । क्रिया एकाकिनी सत्यपि वाक्यार्थं वोढुं क्षमा भवति । 'मेघो वर्षती'ति प्रयोक्तव्ये वर्षतीति मात्रमपि प्रयुज्यते, वाक्यार्थश्च भासितो भवति । शब्दशास्त्रिभिराख्यातपदेन प्रायः क्रियाप्रधानत्वमर्थो लक्ष्यते । तेन 'देवदत्तेन शयितव्यमि'त्यादावतिङन्तेऽपि आख्यातशब्दत्वेन वाक्यत्वं स्वीक्रियते[१९] । वाक्यस्वरूपं व्याचक्षाणः पतञ्जलिः 'सविशेषणमाख्यातं वाक्यं भवती'ति कस्यचनाचार्यस्य मतम् अन्ववदत्[२०] । अव्ययकारकादीनि पदानि आख्यातस्यैव विशेषणभावं भजन्त इति तेषामाशयः । एकतिङ्वाक्यं ब्रुवाणः कात्यायनश्चापि आख्यातस्य वाक्यत्वं स्वीकुरुते ।[२१] वस्तुतः क्रियां विना वाक्यार्थपूर्तेरभावात् कारकादीनाञ्च क्रियाङ्गत्वात् तस्याः वाक्यत्वस्वीकारोऽन्यथा न प्रतीयते । आख्यातशब्दस्य वाक्यत्वं भर्तृहरिरित्थं वर्णितवान्—

आख्यातशब्दे नियतं साधनं यत्र गम्यते
तदप्येकं समानार्थं वाक्यमित्यभिधीयते[२२] ।

---

१६. वा० प०, २. १.
१७. वा० प०, २. २.
१८. वै० भू०, का० १.
१९. अष्टा०, २. १. १. महाभा०, प्र० ।
२०. अष्टा०, २. १. १., महाभा० ।
२१. एकतिङ् (अष्टा०, २. १. १. वा०, १०.)
२२. वा० प०, २. ३२६.

अक्रियावाचकं पदं यदा क्रिया इवाचरति, स्वञ्चार्थं प्रतिपादयति तदा तत्पदमपि वाक्यजनकं जायते—

वाक्यं तदपि मन्यन्ते यत्पदं चरितक्रियम्
अन्तरेण क्रियाशब्दं वाक्यादेव हि दर्शनात्[२३]।

## (ख) सङ्घातो वाक्यम्—

अभिधानदृष्ट्या यद्यपि वाक्यमखण्डं भवति तथापि अनुशासनसम्पादनार्थं वाक्ये पदानि प्रकल्प्यन्ते। तेषां प्रकल्पितानां पदानां सङ्घातो वाक्यं भवति। वाक्यार्थे च पदार्थानामभिसम्बन्धो भासते[२४]। यद्यपि पाणिनिना वाक्यस्वरूपं क्वचिन्न परिभाषितं तथापि सुबन्तस्य तिङन्तस्य[२५] च पदत्वं व्याचक्षाणेन तेन पदचयस्य वाक्यत्वमनुमोदितम्। पदान्वाख्यानस्य पदसङ्घातस्य वाक्यत्वे एव तात्पर्यसम्भवात्। वाक्यं परिभाषमाणः कात्यायनः साव्ययं सकारकं सकारकविशेषणं सक्रियाविशेषणञ्च आख्यातं वाक्यं भवतीति समाचष्ट[२६]। तेनापि पदसङ्घातस्य वाक्यत्वं प्रतीयते। केवलस्य पदस्य योऽर्थोऽभिप्रेतः, वाक्येऽपि तत्पदस्य स एवार्थो भवति[२७]। पदानां परस्परं सम्बद्धानां यदाधिक्यमुपजायते संसर्गादि, शब्दतत्त्वविदः तद् वाक्यार्थं व्याचक्षते[२८]। अनेकपदसंश्रयस्य वाक्यत्वं पतञ्जलिनाऽपि प्रतिपादितम्। पतञ्जलिमते केवलस्यैकस्य पदस्य प्रयोगे सति प्रयोक्तुः कृत्स्नस्य भावस्य सुस्पष्टाऽभिव्यक्तिर्न भवति। वाक्ये पुनरुक्ते सर्वं निर्दिश्यते सर्वं चाऽभिव्यज्यते। वाक्यविषयकं स्वाऽभिप्रायं पतञ्जलिरित्थं वचनपथमानीतवान्—

'इहेदानीम्, 'देवदत्त गामभ्याज शुक्लाम्,' इत्युक्ते सर्वं निर्दिष्टम्, देवदत्त एव कर्त्ता नान्यः, गौरेव कर्म नान्यत्, अभ्याजैव क्रिया नान्या, शुक्लामेव न कृष्णाम्, इति।[२९]

---

२३. वा० प० २, ३२७.
२४. अष्टा०, १. २. ४५. (महाभा०)।
२५. अष्टा०, १. ४. १४.
२६. अष्टा०, २. २. १. वा०, ९.
२७. वा० प० २. ४७.
२८. वा० प०, २. ४८.
२९. महाभा०, अष्टा०, १. २. ४५.

पतञ्जलेरयमभिप्रायः—प्रवृत्तिनिमित्तस्य प्रवृत्तिनिमित्ताश्रयस्य वा सुस्पष्टाऽभिव्यक्तये पदसंघातरूपं वाक्यं प्रयुज्यते, अन्यथा प्रयोक्तुरभिप्रायस्याऽभिव्यक्तिर्न स्यादाहोस्वित् परस्परं साङ्कर्यं सम्भवेत्। सङ्घातरूपे वाक्ये प्रयुक्ते प्रयोक्तुः कृत्स्नोऽप्यभिप्रायः सुव्यक्तो भवति।

देवदत्तः इत्येतावन्मात्रोक्ते कर्ता निर्दिष्टो भवति, कर्म-क्रिया-गुणौ च न निर्दिष्टौ। गाममित्येतावन्मात्रोक्ते कर्म पुनर्निर्दिष्टम्, परं कर्ताऽनिर्दिष्टः कर्मगुणावपि अनिर्दिष्टौ। अभ्याजेत्येतावन्मात्रोक्ते च क्रिया निर्दिष्टा कर्मादिकञ्चाऽनिर्दिष्टम्। देवदत्त गामभ्याज शुक्लामिति वाक्ये प्रयुक्ते तु न काचिद् अव्यवस्थितिः[30]। सामान्येऽर्थे वर्तमानानां पदानामर्थविशेषेऽवस्थानं वाक्यार्थो भवति[31]। पदवाक्ययोरयमेव परस्परं भेदोऽस्ति। एतन्मताऽनुसारेण पदान्येव स्वं स्वमर्थं प्रतिपादयन्ति। पदार्था एव हि आकाङ्क्षादिवशात् परस्परसंसृष्टाः वाक्यार्थं जनयन्ति। वाक्यं वाक्यार्थो वा पदातिरिक्तमन्यन्नास्ति किञ्चिदिति स्वीकृत्य कैश्चिदाचार्यैः पदसङ्घातो वाक्यमित्यभ्युपगम्यते। यावद्भिः पदैरर्थाऽभिधानं सम्भवति तावतां पदानां प्रयोगं न्याय्यं मनुते पतञ्जलिः। वर्णेषु यथा पदं सन्तिष्ठते तथा सहवृत्तिषु पदेषु वाक्यार्थोऽपि सन्निविशत इति भर्तृहरिः समाचष्ट[32]। पदसमूहस्य वाक्यत्वं न्यायसूत्रं भाषमाणेन वात्स्यायनेन[33] प्रतिपादितम्।

## (ग) जातिः सङ्घातवर्तिनी वाक्यम्—

अर्थाऽभिधानदृष्ट्या स्फोटो द्विविधो भवति १—आभ्यन्तरः २—बाह्यश्च। तत्र बाह्योऽपि स्फोटो द्विविधः स्मर्यते—१—जातिस्फोटः, २—व्यक्तिस्फोटश्च। तत्र जातिलक्षणं बाह्यं स्फोटं संलक्ष्य वाक्यविषयकं 'जातिः सङ्घातवर्तिनी'ति मतं प्रवृत्तम्। सर्वस्यापि वस्तुजातस्याद्यप्रत्यक्षे जनस्य निर्विकल्पात्मकं ज्ञानं जायते। तत्र पूर्वं वस्तुमात्रात्मकं ज्ञानं भवति। तत्तद्वस्तुविषयको बोधस्तु पश्चाद्भवति यदा वस्तुज्ञानेन सह प्रतिपत्तुः पूर्वज्ञातस्य ज्ञानस्य साङ्कर्यं भवति तदा सविकल्पात्मकं ज्ञानं जायते। पूर्वं केनचिद् गोवस्तु दृश्यते। पश्चात् सास्नादिमानर्थो गौरुच्यत इति पूर्वज्ञातं

३०. महाभा०, १. २. ४५।

३१. महाभा०, अष्टा०, १. २. ६४.

३२. वा० प०, २. ६१.

३३. वा० भा०, न्या० द०, २. १. २५.

स्मर्यते। ततो गोपदार्थोऽयमिति ज्ञायते। एवमेव पदेषु श्रुतेष्वपि पूर्वं श्रुति-संवेदनामात्रं जायते। तदेव वाक्यम्। तच्च पदसङ्घातवर्तिनोऽर्थैकस्य वाचकम्। पदेषु तत्र एकत्वबोधिका पदसङ्घातवर्तिनी आकृतिः सन्तिष्ठते। तस्या एव वाक्यत्वं केचन स्वीकुर्वते। पदभेदाऽवगतिस्तु तत्र पश्चाद् भवति। यथाऽऽचित्रदर्शने व्यक्तिनिरपेक्षा आकृतिमात्रात्मिका एका दृष्टिसंवेदना भवति, व्यक्तिविशेषबोधस्तत्र पश्चाज्जायते। एवं शब्देष्वपि श्रुतेषु पदसङ्घातवर्तिनी एकात्मिकाऽवगतिर्भवति[३४]। चक्रादीनां भ्रमणे विशिष्ट-प्रयत्नजेन आक्षेपविशेषेण आवृत्तिभिः कर्मजातिः गृह्यते। न तत्र प्रतिभ्रमणं भेदः प्रतीयते। तथा वर्णवाक्यपदेष्वपि स्थानकरणाभिघातलक्षणाऽपि वाक् पदसङ्घातवर्तिन्या जात्याः प्रत्यायिका भवति[३५]।

एतदेवमप्यवगन्तुं पार्यते। यथाऽसौ कच्छपोऽङ्गप्रत्यङ्गसंङ्कोचनपूर्वकं स्वस्मिन्नेकात्मकः सन्तिष्ठते, यथा वा मयूरादयः पूर्वमङ्गप्रत्यङ्गादीनामुपसंहारेण लीनाः सूक्ष्मरीत्या तदुत्पादनशक्त्या सह रसभावमापन्नाः स्वस्मिन्नण्डेषु समवतिष्ठन्ते एवं पदसङ्घातवर्तिन्यां जातावपि पदानि विलीयन्ते। तस्या एव च वाचकत्वं स्वीक्रियते। सङ्घातवर्तिनीं जातिमाश्रित्यैव भर्तृहरिः शब्दमविभक्तं समाचष्ट[३६]। वाक्यात्मके शब्दे पदविभागः केवलं प्रक्रिया-निर्वाहाय एवाऽभ्युपगतः। समासस्थले यथा पदैकदेशस्य नैरर्थक्यं स्वीक्रियते तथा पदसङ्घातरूपे वाक्येऽपि वाक्यैकदेशस्य पदस्य नैरर्थक्यमेव, पदैः समुदितैरेकस्याऽर्थस्य प्रतिपादनात्।[३७]

## (घ) एकोऽनवयवः शब्दो वाक्यम्—

व्यक्तिलक्षणं वाह्यं स्फोटं संलक्ष्य वाक्यविषयकम् एकोऽनवयव-शब्दो वाक्यमित्येतन्मतं प्रवृत्तम्। अनुशासनसौविध्यार्थम् एव वाक्ये पदविभागः स्वीकृत इत्यस्माभिरनेकत्र प्रतिपादितम्। वस्तुतः सम्प्रत्ययनिमित्ता वागेकैव भवति। स च वाक्यात्मिका विद्यते। तत्राऽवयवकल्पनं नास्ति तात्त्विकमित्येतस्य मतस्याऽभिप्रायः।

---

३४. वा० प०, २. ७, वा० प०, २. ७.

३५. वा० प०, २. २०, वा० प०, २. २१.

३६. वा० प०, २. २३.

३७. वा० प०, २. १४.

अक्रमस्य बौद्धस्य वाक्यस्याऽभिव्यक्तये एव ध्वन्यात्मक औपचारिकः क्रमवान् शब्दः प्रयुज्यते[३८]। एतन्मताऽनुसारेण वाक्ये पदस्य पदार्थस्य चोपस्थितिरतात्त्विकी स्वीक्रियते। ध्वन्यात्मकाः शब्दा अनवयवाः सन्तः एकवृन्तावलम्बिफलद्वयन्यायेन वाक्यार्थं प्रतिपादयन्ति वाक्यञ्च जनयन्ति। यद्यप्यत्र मते ध्वन्यात्मकाः शब्दाः परस्परमनवयवास्तथापि एकस्मिन् विशिष्टे वाक्यार्थे ते संहता एव भवन्ति। यथाऽतदर्थेन गुणेन गुणिनोऽर्थभावः स्वीक्रियते लोके तथाऽत्राऽपि अनवयवेन पदेनाऽवयविनो वाक्यस्याङ्गभावोऽभ्युपगम्यते। तद्यथा त्वक्त्राणेऽसमर्थ एकस्तन्तुः, परं तत्समुदायः कम्बलः समर्थो भवति। उदरपूर्वतविकस्तण्डुलोऽसमर्थो भवति तण्डुलसमुदायश्च भवति क्षुत्प्रतिघाते समर्थः तथैवाऽत्र अनवयवेषु पदेष्वपि बोध्यम्।

## (ङ) शब्दक्रमो वाक्यम्—

वाग्विषयकं खण्डपक्षमभिप्रेत्य शब्दक्रमस्य वाक्यत्वमतं स्वीकृतम्। अत्र मते शब्दत्वम् अर्थवाचकता च क्रमेष्वेवाऽनुगम्येते। पदानामर्थद्वयं दृश्यते, १ स्वार्थः, २. विशिष्टार्थश्च। पदानां स्वार्थस्तु कदाचिदप्यवगन्तुं शक्यते, परं क्रमाऽनुसारपद-संस्थापनं विना पदानां विशिष्टोऽर्थो नाऽभिव्यज्यते[३९]। 'यवागूर्भवता भोक्तव्या न वा' इत्यत्र यदा यवागूशब्दो—भुजिना सम्बध्यते, भुजिश्च न वा शब्देन तदा प्रतिषेधवाचिनो नवाशब्दस्य सम्प्रत्ययो भवति। यदा तु न वा शब्दो यवागूशब्देन सम्बध्यते न तु भुजिना तदा प्रत्ययवाचिनो नवाशब्दस्य सम्प्रत्ययो भवति; यवागूर्नवा भवता भोक्तव्येति[४०]। अर्थवैशिष्ट्यमेतच्छब्दक्रमबलादेवाऽवगम्यते। निश्चितक्रमगता वर्णाः पदं कथ्यते निश्चितक्रमगतानि च पदानि वाक्यं भवति। च्युतक्रमाणि पदानि वाक्यत्वं जहति। च्युतक्रमाश्च वर्णाः पदात् परित्यज्यन्ते—

वर्णानाञ्च पदानाञ्च क्रममात्रनिवेशिनी
पदाख्या वाक्यसञ्ज्ञा च शब्दत्वं नेष्यते तयोः[४१]।

---

३८. वा० प०, २. १९.

३९. वा० प०, २. ४९.

४०. महाभा०, अष्टा०, १. १. ४४.

४१. वा० प०, २. ५३.

क्रमो हि कालस्य धर्मो भवति ।[४२] शब्दक्रमे निश्चितकालातिरिक्तकालव्यवायेन क्रमो विनश्यते । क्रमनाशे च वाक्यं स्वतो भिद्यते । अतः शब्दक्रमो वाक्यमित्यभ्युपगम्यते ।

## (च) बुद्ध्यनुसंहृतिः वाक्यम्—

अर्थाऽभिधानदृष्ट्या स्फोटस्य द्वैविध्यमस्माभिः पदसङ्घातवर्तिन्या जातेः वाक्यत्वप्रतिपादनाऽवसरे प्रतिपादितम्—१. आन्तरस्फोटः २. बाह्यस्फोटश्च । तत्र आन्तरं स्फोटमभिलक्ष्य बुद्ध्यनुसंहृतेर्वाक्यत्वं स्वीक्रियते[४३] । प्रयोक्तृप्रतिपत्तृबुद्धिद्वयस्य तादात्म्यं नाम शब्दव्यापारस्य परिणामो भवति ।[४४] एतत् संलक्ष्यैव च पतञ्जलिः सम्प्रत्ययनिमित्ताया वाचः शब्दत्वं समाचष्ट[४५] । शब्दो बुद्ध्यर्थादुत्पद्यते बुद्ध्यर्थे च लीयते । परिकल्पितमर्थं विवक्षुर्वक्ता शब्दान् प्रयुङ्क्ते, श्रोता च तैः प्रयुक्तैः शब्दैः वक्तृबुद्धिं प्रतिपद्यते । अर्थाच्छ्रोता प्रयुक्तशब्दसाहाय्येन वक्तृबुद्धिमधिगच्छति । अतो बुद्ध्यनुसंहृतिः वाक्यमिति वाक्यविषयकं मतं स्वीकृतम् । अन्ततः शब्दतत्त्वमेव नादैः प्रकाशितं सत् प्रत्ययजनकं भवति । तदेवाऽनवयवं बोधस्वभावं शब्दार्थमयमन्तःशब्दतत्त्वं वाक्यमुच्यते[४६] । वाक्यमिव वाक्यार्थोऽपि अखण्ड एव भवति । अत्र मते शब्दार्थावभिन्नौ स्वीक्रियेते[४७] ।

## (छ) पदमाद्यं वाक्यम्—

पदमाद्यं वाक्यमिति मतं मन्वानानां राद्धान्ते वक्तुरभिप्रायः वाक्यस्य प्रथमपदेनैवाऽभिव्यज्यते, अतस्तस्यैव वाक्यत्वमिति स्वीक्रियते । आद्यपदेनाऽत्र कर्तृकर्मादिकारकयुक्तं यत्किञ्चिदपि पदं ग्रहीतुं शक्यते । तदनन्तरञ्चाऽन्यानि पदानि वक्तुर्विवक्षां बोढुं प्रयुज्यन्ते । 'देवदत्त ! गामभ्याज शुक्लामिति' प्रयोगे 'गां बधाने'त्यस्माद् विशिष्टमेव देवदत्तपदं वक्त्रा समुदीरितम् । गवादिपदसम्बन्धेन विशिष्टा प्रतिपत्तिः तेनाद्येन पदेनाऽभिव्यज्यते । तेनैव

---

४२. वा० प०, २. ५१.
४३. वा० प०, २. २.
४४. वा० प०, ३. ३. ३३.
४५. अष्टा०, महाभा०, पस्प० ।
४६. वा० प०, २. ३०.
४७. वा० प०, २. ३२ ।

चाकाङ्क्षादिवशात् प्रतिपत्तारो वाक्यार्थमवगच्छन्ति[४८]। आद्ये पद एव कृत्स्नस्य वाक्यार्थस्य समाप्तिः स्वीक्रियते। आद्यपदानन्तरं समुदीरिताः पदविशेषास्तु आद्येन पदेन प्रतीतस्य वाक्यार्थस्यैवाऽभिव्यञ्जका भवन्ति[४६]।

अयमत्राऽभिप्रायः—यथा कश्चिद् ग्रन्थकारो ग्रन्थं प्रणिनीषुः प्राग् विषयभूमिं संस्थापयति। सा एव ग्रन्थो भवति। अन्यत्तु तस्या एव परिगुम्फनं जायते। यथा वा कश्चिच्छिल्पी भवनं निमार्तुमनाः प्रागाधारशिलां संस्थापयति, सा एव च भवनं जायते। अग्रे तु आधारशिलायां परिकल्पितस्यैव भवनस्य विकासो भवति। तथैवाऽत्रापि वक्तुर्विवक्षायां सत्यामाद्ये पदे एव कृत्स्नोऽभिप्रायः सन्निविशते। तस्यैव च वाक्यत्वम्। पश्चात्तु प्रकरणादिना प्रयुक्तान्यपदेन च तस्यैवार्थस्याऽभिव्यञ्जना भवति। अतः पदान्तराणां वाक्ये वैयर्थ्यं न भवति। 'द्वारमि'त्युक्ते प्रकरणादिवशाद् 'बधान' 'देहि' वेति अनुगम्यते। अतो द्वारमित्यस्य आद्यस्य पदस्य वाक्यत्वमित्यभिप्रायः। तदाह भर्तृहरिः—

यथा प्रकरणं द्वारमित्यस्यां कर्मणः श्रुतौ,
'बधान' 'देहि' वेत्येतदुपायादधिगम्यते[५०]।

वस्तुतः पक्षोऽयं दोषमुक्तो नाऽस्ति। किञ्चिदपि पदं स्वरूपमात्रेणाऽर्थबोधकं न भवति। शब्दार्थाऽवगमनार्थं हि प्रकरणज्ञानम् औचित्यबोधः, देशकालादिपरिज्ञानञ्च नितान्तमपेक्ष्यते। प्रकरणाविज्ञानं विना द्वारमि'त्युक्तेऽपि 'बधान' 'देहि' वेति सन्देहः स्यादेव। प्रकरणादिज्ञानं विना तु कृत्स्नवाक्यश्रवणानन्तरमपि अर्थाऽवगतिर्न दृश्यते। सैन्धवमानयेति वाक्ये श्रुतेऽपि प्रकरणाविज्ञानहीनेन 'अश्व आनेयः, लवणः' वेति सन्दिह्यत एव। यद्येकेन पदेन सकलवाक्यार्थस्याऽवगतिः स्यात्तदोत्तरेषां पदानामुच्चारणं नियमायाऽनुवादाय वा स्वीक्रियेत, न चैवं स्वीक्रियते। एकस्मात् पदात् समस्तविशेषखचितस्य वाक्यार्थस्य प्रतीतावन्येषां पदानां वैयर्थ्यं सुस्पष्टमेव। अस्मादेव पुण्यराजो वाक्यविषयकं पक्षमिमं दुष्टं व्याचष्ट।[५१]

---

४८. वा० प०, २. १७.

४९. वा० प०, २. १८.

५०, वा० प०, २. ३३४.

५१. दा० प०, २. १८.

## (ज) पृथक् सर्वपदं साकाङ्क्षं वाक्यम्—

वाक्यविषयकमन्तिममेतन्मतं विद्यते। अत्र मते वाक्ये प्रयुक्तानां पदानां पार्थक्येन संस्थितिः स्वीक्रियते। परं सर्वाणि पदानि साकाङ्क्षाणि भवन्ति। वाक्ये गृहीतानि पदानि परस्परं सम्बद्धानि भवन्ति। एकमपि पदं विना वाक्यार्थो भिद्यते। यावद्भिरपि पदैः वाक्यार्थाऽवगतिः सम्भवति तावतां पदानां प्रयोगो वाक्यं भवति। प्रत्येकपदस्य नैजोऽर्थो भवति, तेषां समुदायो हि वाक्यार्थो भवति। "यावतामर्थानामभिधानं भवति तावतां शब्दानां प्रयोग इत्येष पक्षो न्याय्यः[५२]।" क्रियायां गुणभूतं कारकपदं पदान्तरमाकाङ्क्षते। प्रधानभावेन संस्थितं च क्रियापदं वाक्ये कारकपदान्यपेक्षत इति साकाङ्क्षं सर्वपदं भवति वाक्यम्[५३]। शब्दशक्तिप्रकाशिकायां जगदीश एतादृशमेव वाक्यस्वरूपं निर्दिदेश—

'मिथः साकाङ्क्षशब्दस्य व्यूहो वाक्यं चतुर्विधम्[५४]'। साहित्यदर्पणकारो विश्वनाथोऽपि एतद्वाक्यस्वरूपमनुमनुते—

'वाक्यं स्याद् योग्यताऽऽकाङ्क्षाऽऽसत्तियुक्तः पदोच्चयः[५५]।'

## अष्टानां मतानां विश्लेषणम्—

शब्दस्वरूपनिरूपणासन्दर्भे पाणिनीयैः शब्दस्य स्वरूपद्वयं प्रतिपादितम् १—व्यावहारिकं शब्दस्वरूपम् २—भावातात्त्विकञ्च शब्दस्वरूपम्। तत्र व्यवहारसम्पादनार्थम् अनुशासनप्रक्रियानिर्वाहार्थञ्च प्रथमं शब्दस्वरूपमभ्युपगतम्, शब्दस्य आन्तरं वास्तविकञ्च शब्दस्वरूपमवगन्तुमपरम्। शब्दविषये शब्दतत्त्वविदां पक्षद्वयं दृश्यते, १—अखण्डपक्षः २—खण्डपक्षः च। अखण्डपक्षं स्वीकृत्याऽनवयवमविभक्तमान्तरं स्फोटात्मकं शब्दस्वरूपं स्वीक्रियते। खण्डपक्षञ्चाश्रित्य ध्वन्यात्मकं व्यावहारिकं शब्दस्वरूपं स्वीक्रियते।

उपरि वर्णितेषु वाक्यविषयकेषु अष्टसु मतेषु एष एवाऽभिप्रायो दृश्यते। तत्र कानिचिद् वाक्यविषयकमतानि अखण्डपक्षाधृतानि, कानिचिच्च खण्डपक्षाधृतानि। अखण्डवाक्यवादिभिः पदवादः काल्पनिकः समाख्यातः, खण्डपदवादिभिः

५२. अष्टा०, १. २. ६४.
५३. वा० प०, २. ४८.
५४. श० श० प्र०, श्लोक १३.
५५. सा० द०, २. १.

च अखण्डं वाक्यं काल्पनिकमाख्यातम्[५६]। उभयत्रापि पक्षे स्वपक्षपरिपोषणे संहिता पदप्रकृति:[५७] इति ऋक्प्रातिशाख्यसूत्रं समुपस्थाप्यते, स्वपक्षानुकूलञ्च व्याख्यायते सूत्रमिदम्। 'पदस्य प्रकृतिरिति षष्ठीतत्पुरुषेण पदप्रकृति: संहितेति अखण्डवादिभि: सूत्रमिदं व्याख्यायते[५८]। प्रकृतिपदमत्र कारणार्थकम्। एवञ्च संहिता एव पदकारणं भवति। खण्डमतवादिभिस्तु सूत्रमिदमन्यथैव व्याख्यायते। तर्हि सूत्रगते पदप्रकृतिपदे बहुव्रीहिसमासः स्वीक्रियते। 'पदानि प्रकृति: कारणं यस्या: संहिताया इति पदप्रकृतिरिति व्याख्यानेन खण्डपक्षोऽपि अनेन सूत्रेण ज्ञाप्यते[५९]।

पदानाञ्च असत्यत्वात् तत्कारणिका संहिताऽपि असत्येति खण्डवादिनो व्याचक्षते। भर्तृहरिणा एतस्य प्रातिशाख्यसूत्रस्य व्याख्याभेदमिमं समुपस्थाप्य खण्डपक्षोऽखण्डपक्षश्च वाक्यविषयक: प्रतिपादित:[६०]। यथाप्रसङ्गमत्रोक्तानां वाक्यमतभेदानां विभाजना समुपस्थाप्यते।

## (अ) अखण्डपक्षः—

अखण्डवाक्यपक्ष: पाणिनीयानामाचार्याणां सिद्धान्तो विद्यते। कृत्स्ना वक्तृबुद्धि: शब्दद्वारेण श्रोतृबुद्धि: सञ्जायते। न हि तत्र कश्चिद् भेद: सम्भवति। पदेषु वर्णभेदा: वाक्येषु च पदभेदा औपचारिका एव न तु वास्तविका—

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात्पदानामात्यन्तं प्रविवेको न कश्चन[६१]॥

वाक्यविषये विवदमानेषु मतत्रयमखण्डपक्षाऽनुसारं संलक्ष्यते[६२]। तत्र—

१—सङ्घातवर्तिनी जातिर्वाक्यम्, २—एकोऽनवयव: शब्दो वाक्यम्, ३—बुद्धयनुसंहृतिर्वाक्यञ्चेति मतानि अखण्डपक्षाभिमतानि सन्ति।

---

५६. वा० प०, २. ५८.
५७. ऋ० प्रा०, २. १.
५८. वा० प०, २. १, पुण्य०।
५९. वा० प०, २. १. पुण्य०।
६०. वा० प०, २. ५९।
६१. वा० प०, १. ७३.
६२. वा० प०, २. १-२.

प्राकृतवैकृतध्वनिजन्यो नाद एव शब्दव्यपदेशं न लभते। अन्त:-स्थिता प्रयोगभावनामाधायैव ध्वनिना शब्दोऽभिव्यज्यते। तस्या भावनाया एकत्वाद् अखण्डपक्षोऽभ्युपगम्यते। तत्त्वत: शब्दोऽर्थश्चाऽखण्ड एव विद्यते। प्रक्रियानिर्वाहाय स्वीकृतस्य पदभेदस्य वास्तविकत्वकल्पनं भर्तृहरिमते अवैदुष्यमेवाऽस्ति[63]। व्यवहारनिबन्धना एव भेदा न तु वास्तविका इति भर्तृहरेरभिप्राय:। यद्यपि व्याकरणेन प्रत्यक्षत: पदान्येव संस्क्रियन्ते न वाक्यम्, तथापि स्त: इत्यादौ व्याक्रियमाणे कौ इत्यादे: पदस्य सन्निधानमविरुद्धम्। कौ स्त: इति समुदितेनैव सुस्पष्टमर्थाऽवगमसम्भवात्तस्यैव वास्तविकमनुशासनम्। अखण्डपक्षस्था वाक्यभेदा: स्फोटं संलक्ष्य स्वीकृता इति तेषां स्वरूपनिरूपणा-प्रसङ्गे आचार्यै: प्रतिपादितम्। आभ्यन्तरं स्फोटं संलक्ष्य बुद्ध्यनुसंहृतिवाक्यपक्ष:, जातिलक्षणं बाह्यं स्फोटमभिप्रेत्य सङ्घातवर्तिनीजातिवाक्यपक्ष:, व्यक्तिलक्षणं बाह्यं स्फोटञ्चाश्रित्य एकोऽनवयवशब्दवाक्यपक्षोऽभ्युपगत:[64]।

## (आ) खण्डपक्ष:—

शब्दस्य ध्वन्यात्मकं व्यावहारिकं स्वरूपमाधृत्य वाक्यविषयक: खण्डपक्षोऽभ्युपगत:। खण्डवाक्यपक्षे वाक्यं सखण्डं सावयवञ्च भवति। पृथक् पृथक् पदेषु वाक्यं प्रविभक्तं जायते। परिगणितेषु वाक्येषु पञ्चवाक्यानि खण्डवाक्यपक्षाऽनुसारं संलक्ष्यन्ते। तत्र—१. आख्यातशब्दो वाक्यम्, २. सङ्घातो वाक्यम्, ३. शब्दक्रमो वाक्यम्, ४. पदमाद्यं वाक्यम्, ५. साकाङ्क्षं पृथक्सर्वपदं वाक्यञ्चेति खण्डवाक्यपक्षस्थानि वाक्यानि सन्ति। पुण्यराज इमान्येव पञ्च वाक्यानि खण्डपक्षाऽनुसारीणि पर्यगणयत्[65]।

अनुशासनलक्षणेऽस्मिन् व्याकरणे वाक्यस्याऽन्त्यावयव: पदं स्वीक्रियते। तत्रैव प्रकृतिप्रत्ययादिपरिकल्पनेनाऽनुशासन-सम्भवात्। स्वयं पाणिनिना 'स्वं रूपं शब्दस्याऽशब्दसंज्ञा'[66] 'सरूपाणामेकशेष एकविभक्तौ,[67] 'अर्थवद-

---

६३. वा० प०, २. १३.

६४. वा० प०, २. १-२ पुण्य०।

६५. वा० प०, २. १-२.

६६. अष्टा०, १. १. ६८.



६७. अष्टा०, १. २. ६४.

धातुरप्रत्ययः प्रातिपदिकम्'[६८] 'सुप्तिङन्तं पदम्'[६९] इत्यादिसूत्रप्रणयनेन खण्डवाक्यवादिनां पक्षोऽयं प्रतिपादितः। परमत्रैतद् न विस्मर्तव्यं कदाचिद् यदत्र पाणिनीये तन्त्रे प्रक्रियानिर्वाहार्थमेव पदपरिकल्पनं विद्यतेलघुनोपायेन वाचाम् अनुशासनार्थं पदान्यत्र स्वीक्रियन्ते। परमार्थतस्तु अखण्डैकवाक्यपक्ष एवाऽस्ति सिद्धान्तः।

खण्डवाक्यवादिनामिमान्येव मतानि समाश्रित्य १. अभिहितान्वयवादः, २. अन्विताऽभिधानवादश्चेति पक्षद्वयं प्रवृत्तम्।

अस्मिन्नेव पक्षद्वये पञ्चाऽपि खण्डवाक्यानि सन्निविशन्ते[७०] तथा हि—१. सङ्घातः २. क्रमश्चेति वाक्यद्वयमभिहितान्वयवादे स्वीक्रियते। १. आख्यातशब्दः, २. पदमाद्यम्, ३. पृथक् सर्वपदं साकाङ्क्षञ्चेति लक्षणत्रयम् अन्विताऽभिधानवादे स्वीक्रियते। खण्डवाक्येषु पक्षभेदोऽयं शाब्दबोधदृष्टयाऽभ्युपगतः। वाक्यस्य सङ्घातपक्षे क्रमपक्षे च संसर्गो वाक्यार्थः स्वीक्रियते[७१]। सङ्घातपक्षे संसर्गवशान्निराकाङ्क्षो विशेषावस्थितः पदार्थोऽपि वाक्यार्थत्वेन स्वीक्रियते[७२]। आख्यातशब्दस्य वाक्यस्य क्रिया वाक्यार्थो भवति[७३]। अन्यत्र वाक्यद्वयेऽवशिष्टे संसृष्टो वाक्यार्थः[७४]। एवञ्च तत्र सङ्घातक्रमयोः संसर्गे संसर्गवशाद्विशेषाऽवस्थिते पदार्थे च वाक्यार्थे अभिहितान्वयवादो ज्ञेयः। अवशिष्टस्य वाक्यत्रयस्य क्रियायां संसृष्टे च वाक्यार्थेऽन्विताभिधानवादो बोध्यः[७५]।

अखण्डवाक्यपक्षस्थस्य वाक्यत्रयस्य प्रतिभा खलु वाक्यार्थो भवति। प्रतिभायां हि एकरसैव प्रतिपत्तिर्भवति। अतस्तत्र अभिहितान्वयाऽन्विताभिधानवन्न काचिच्चर्चा सन्तिष्ठते[७६]। येषां नये पदार्थयोः संसर्गः आकाङ्क्षाभास्यः स्वीकृतः तन्नये अभिहितान्वयवादः। येषां तु मते संसृष्ट एव पदार्थो

---

६८. अष्टा०, १. २ ४५.
६९. अष्टा०, १. ४. १४.
७०. वा० प०, २०. प० २. १-२.
७१. वा० प०, २. १-२.
७२. वा० प०, २. १-२.
७३. आख्यातशब्दो वाक्यमित्यस्मिन् पक्षे क्रिया वाक्यार्थः।
७४. वा० प०, २. १-१.
७५. वा० प०, २. १-२.
७६. वा० प०, २. १-२.

वाक्ये शक्त्या भासते तेषां मतेऽन्विताऽभिधानवाद:। इदमेव वादद्वयमाश्रित्य मीमांसकेषु दलद्वयं प्रवृत्तमस्ति।

## वैयाकरणानामखण्डवाक्यपक्ष एव सिद्धान्तः—

अखण्डवाक्यपक्षविश्लेषणे पाणिनीयानामाचार्याणामखण्डवाक्यमभिमतमित्यस्माभिः प्रतिपादितम्। स्फोटाऽभिव्यक्तये च ध्वन्यात्मका वाग्व्यापारा: स्वीक्रियन्त इत्यपि चर्चितमस्माभिरनेकत्र। वस्तुतो वैयाकरणस्याखण्ड एक एवाऽनवयवः स्फोटलक्षण: शब्दो वाक्यम्, प्रतिभा च भवति वाक्यार्थः। अत्र सिद्धान्ते पृथगर्थविनिवेशिनां पदानां वाक्यार्थत्वादेवार्थवत्त्वं विद्यते। वाक्यात् प्रविभक्तानां तेषां पदानामर्थवत्त्वं न कल्प्यते[७७]। यथा पृथगर्थाऽनुपातिनां सर्वेषामिन्द्रियाणां शरीरादृते कार्यं न भवति तथा पदानामपि वाक्यादृते प्रयोजनाभाव एव। अतो वाक्यवाक्यार्थयोर्विषयेऽखण्डपक्ष एव पाणिनीयैः वैयाकरणैरभ्युपगम्यते। अर्थसम्प्रत्ययनिमित्ता वाग् व्याकरणेनाऽनुशासनीया भवतीति पतञ्जलि: प्रत्यपादयत्[७८]। वाक्येनैव चार्थसम्प्रत्यय: सम्भवतीति वाक्यस्यैव शब्दत्वम्। पदकारैर्हि लक्षणाऽनुवर्तनं कार्यमिति सिद्धान्तमभ्युपगच्छतां पतञ्जलीनामखण्डवाक्यपक्ष एवाऽभिमतः, पदानाञ्चाऽसत्यत्वम् अभिमतम्। 'तृज्वत् क्रोष्टु[७९]रि'ति सूत्रं भाषमाण: पतञ्जलिरित्यभाषत—

'न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणम् अनुवर्त्यम्[८०]।'

यदि पदानां सत्यता सुस्पष्टा स्यात्तदा तेषां स्वत एव सिद्धत्वात् 'पदानि कुर्वन्ति इति पदकारा:' इति व्युत्पत्तिनिमित्तमसङ्गतं स्यात्। पदानां वस्तुसत्त्वे लक्षणेन पदकाराऽननुवर्तनं पदकारैश्च लक्षणाऽनुवर्तनं किमर्थकं स्यात्? यथा लक्षणमप्रयुक्ते[८१] इति वाक्यमपि पदानां वस्तुसत्त्वेऽनुपपन्नमेव। 'अप्रयुक्ते यथालक्षणम्=लक्षणाऽनुसारेण पदकरणमिति पदानामसत्यत्वे मानम्। एकमभिन्नस्वभावं वाक्यमेव सत्यमिति वैयाकरणानां सिद्धान्त:। तदबुधबोधनाय खलु पदविभाग: कल्प्यते।

---

७७. वा० प०, २. ४२१.

७८. अष्टा०, महाभा० पस्प०।

७९. अष्टा०, ६. १. २०७.

८०. अष्टा०, ६. १. २०७.

८१. अष्टा०, ६. १४. १८ तथा १. १ २४.

# कात्यायनस्य जैमिनेश्च वाक्यस्वरूपविवेकः—

वाक्यस्वरूपनिरूपणावसरे सञ्जातो वाक्यमिति निरूपणायां कात्यायनाऽभिमतं वाक्यस्वरूपमचर्चयम्। निघातयुष्मदस्मदादेशानभिलक्ष्य कात्यायनो वाक्यं पर्यभाषत। कात्यायनमते समानवाक्य एव निघातयुष्मदस्मदादेशाः[८२] स्वीकार्याः। अन्यथा 'अयं दण्डः, हरानेन' इत्यत्र 'हर' इति तिङन्तस्यातिङन्तात् परत्वेन निघात आपद्येत। अत्र हि अनेनेति सर्वनाम्ना दण्डस्य परामर्शात्तस्य हरतिना सह सामर्थ्यमस्ति। एवञ्च सामर्थ्ये सति तिङ्ङतिङः[८३] इति निघातः प्राप्नोति। तद् व्यावृत्त्यर्थं कात्यायनो वाक्यस्वरूपं समुपास्थापयत् :—

"आख्यातं साव्ययकारकविशेषणं वाक्यम्[८४]।" इति एतल्लक्षणाऽनुसारम् 'अयं दण्डः, हराऽनेने'त्यत्र न भवति निघातापत्तिः, वाक्यभेदात्। समानवाक्य एव निघातस्येष्टत्वात्। एवमेव 'ओदनं पच, तव भविष्यति' 'ओदनं पच मम भविष्यति' इत्यत्राऽपि 'ते मयावेकवचनस्य'[८५] इति युष्मदस्मदादेशा अपि न भवन्ति, वाक्यभेदात्। समानवाक्ये एव युष्मदस्मदादेशानामभीष्टत्वात्। अन्यथाऽत्राऽपि युष्मदर्थस्य अस्मदर्थस्य चौदनेन सम्बन्धात् पच्यर्थस्य तेन सह सामर्थ्याद् युष्मदस्मदादेशापत्तिः दुर्वारा स्यात्। समानवाक्ये च तदादेशस्वीकारान्न काचिद् अनुपपत्तिः। आवश्यकः खलु समानवाक्ये तदवगमः अन्यथा समर्थनिघाते स्वीकृते "नद्याः तिष्ठति कूले, वृक्षस्य लम्बते शाखा" इत्यत्रेष्टो निघातो न स्यात्। 'नद्यास्तिष्ठति' इत्यस्य 'वृक्षस्य लम्बते' इत्यस्य च सम्बन्धाऽनुपपत्तेः सामर्थ्याभावात्। किञ्च 'शालीनां ते ओदनं दास्यामी'त्यत्र शालीनां युष्मदश्च सामर्थ्याभावात् 'ते मयावेकवचनस्ये'त्यादेशोऽपि न स्यात्। समानवाक्ये च तत्स्वीकृते तत्सर्वं सिद्धं भवति। तत्सर्वं समालोच्य वार्तिककारो निघातादिव्यवस्थार्थम् 'समानवाक्ये निघातयुष्मदस्मदादेशाः[८६]' इति समाचष्ट।

---

८२. अष्टा०, २. १. १. वा० ११.

८३. अष्टा०, ८. १. १८.

८४. अष्टा०, २. १. १., वा० ९.

८५. अष्टा०, ८. १. २२

८६. अष्टा०, २. १. १., वा० ११.

'तिङ्ङतिङः' इतिसूत्रस्थमतिङ्ग्रहणं कात्यायनकृतं वाक्यलक्षणं पुष्णाति। तत्र तिङ्ग्रहणेनाख्यातं लक्ष्यते। अतिङ्ग्रहणेन च साव्ययादि।

साव्ययस्याऽऽख्यातस्य उदाहरणम्—'उच्चैः पठति', 'नीचैः पठती'त्यादि वाक्यम्। सकारकस्य आख्यातस्योदाहरणम्—'ओदनं पचती'त्यादि वाक्यम्। सकारविशेषणस्याख्यातस्योदाहरणम्—'ओदनं मृदुविशदं पचती'त्यादि वाक्यम्। कात्यायनवाक्यस्वरूपं व्याचक्षाणः पतञ्जलिः सक्रियाविशेषणस्याऽप्याख्यातस्य वाक्यत्वं समाचष्ट[८७]। तेन 'सुष्ठु पचति', 'दुष्ठु पचती'त्यादीनां वाक्यत्वं सिद्ध्यति आख्यातपदेनाऽत्र क्रियाप्रधानत्वं लक्ष्यते। तेन देवदत्तेन शयितव्य-मित्यादिषु अतिङन्तेष्वपि वाक्यत्वं सिद्ध्यति। अपरे आचार्याः कात्यायन-कृतवाक्यलक्षणस्य स्थाने 'आख्यातं सविशेषणं[८८] वाक्यमि'त्येव ब्रुवते। साव्ययकारकविशेषणानां क्रियाविशेषणत्वस्वीकारादेव सिद्धे पृथगुच्चारणस्या-ऽनावश्यकत्वात्। समानतिङोऽपि[८९] वाक्यत्वमभिमतं कात्यायनस्य। तेन 'ब्रूहि ब्रूहि' इत्यस्यापि वाक्यसंज्ञा स्वीक्रियते।

'व्रजानि देवदत्त!' इति वाक्ये देवदत्तेति पदं नाव्ययम्, नाऽपि कारकम् नैव च कारक-विशेषणमेव एवञ्चैतद् वाक्यम्। 'आख्यातं साव्ययकारक-विशेषणं वाक्यमि'ति कात्यायनकृतवाक्य-लक्षणेनाऽसङ्गृहीतमिव प्रतिभाति। सत्यम्, सक्रियाविशेषणस्याऽप्याख्यातस्य वाक्यत्वस्वीकारेण तस्यापि सङ्गृहीत-त्वात्। क्रियाया विशेषणं कदाचित् सामानाधिकरण्येन भवति, कदाचिच्च वैयधिकरण्येन[९०]। सामानाधिकरण्येन क्रियाविशेषणं यथा—मृदु पचति इत्यादि। अत्र पचत्यर्थस्य मृद्वित्यादिविशेषणविशिष्टस्यैव प्रतीतेः मृद्वित्यादीनां पचत्यादिक्रियया सह सामानाधिकरण्यम्। सामानाधिकरण्येन प्रयुक्तमिदं क्रियाविशेषणम् असत्त्वभूतमुच्यते। असत्त्वभूतायाः क्रियाया विशेषणत्वात् तस्यापि असत्त्वभूतत्वमुचितम्। अत एव तत्र क्लीबेन लिङ्गेन निर्देशो भवति। क्रियायाश्च निर्वर्त्यत्वात् सामानाधिकरण्येन प्रयुक्तस्य क्रियाविशेषणस्य कर्मत्वमपि न्यायसिद्धमेव!

---

८७. अष्टा०, २. १. १, महाभा०।

८८. अष्टा०, २. १. १, महाभा०।

८९. एकतिङ्। अष्टा० २. १. १, वा० १०।



९०. वा० प०, २. ५.

अतः समानाधिकरणभूतस्याऽसत्त्ववाचकस्य क्रियाविशेषणस्य कृते कर्मत्वं नपुंसकलिङ्गता चेति[६१] स्वभाविक एव वाचनिको नियम आविष्क्रियते।

वैयधिकरण्येनाऽपि क्रियाविशेषणं स्वीक्रियते। 'व्रजानि देवदत्त।' इति पूर्वोद्धृते वाक्ये सम्बोधनभूतं देवदत्तपदं वैयधिकरण्येन क्रियाविशेषण-स्योदाहरणम्। अत्र वाक्ये 'देवदत्त! व्रजानी'ति देवदत्तस्य व्रजतेश्च क्रियायाः सामानाधिकरण्यं नास्ति। अत्र वाक्ये केवलमामन्त्र्य देवदत्तं व्रजत्यसौ इति देवदत्तामन्त्रणविशेषिता विलक्षणा व्रजिक्रिया विवक्षितेति 'आख्यातं सविशेषणं[६२] वाक्यमिति वाक्यलक्षणेन तत्संग्रहो भवति। 'व्रजानि देवदत्त' इति वाक्ये असम्बोध्यमानदेवदत्त विषयायाः सम्बोध्यमानयज्ञदत्तविषयाया वा क्रियायाः पृथगेव सम्बोध्यमानदेवदत्तविषया विशिष्टा व्रजतिक्रिया प्रतिपाद्यते। अतो देवदत्तपदस्य क्रियाविशेषणत्वादेव 'सक्रियाविशेषणमाख्यातं वाक्यम् इति लक्षणेन आहोस्विद् 'आख्यातं सविशेषणं वाक्यमि'ति लक्षणेन तस्य पदद्वयस्य वाक्यत्वं सिद्ध्यति। तत एव समानवाक्याऽधिकारस्थो निघातादिरत्र प्रवर्तते[६३]। अनेकतिङन्तस्थलेऽपि परस्परं विशेष्यविशेषणभावेन एकवाक्यत्वं भवति।' 'देवदत्तः पूर्वं स्नाति, भुङ्क्ते ततो व्रजति' इत्यादि वाक्येषु समानवाक्यत्वमेव। अत्र वाक्ये व्रजतीत्येतत् तिङन्तं क्रियापदं प्राधान्येन संस्थितम्, अन्यानि च क्रियापदानि तद्विशेषणानि। यथा स्नानभोजनपानादिभिर्घञन्तैः क्त्वान्तैर्वा कृदन्तक्रियापदैः व्रजतिक्रिया विशेष्यते तथा स्नातिप्रभृतिभिस्तिङन्तैः क्रियापदैरपि व्रजति क्रियैव विशेष्यते[६४]।

अतोऽत्र वाक्ये एकैव सविशेषणा व्रजति क्रिया, 'आख्यातं सविशेषणं वाक्यमि'ति लक्षणेन च एकवाक्यत्वम्। पतञ्जलिरपि अनेकतिङन्तस्थले एकवाक्यत्वप्रसाधनाय परस्परं तेषां क्रियाकारकभावं प्रत्यपादयत्[६५]। 'पचति भवती'ति वाक्ये पतञ्जलिमते पचिक्रिया भवतिक्रियायाः कर्त्री विद्यते। एवंविधस्थले गौणभूतस्य भावस्य प्रधानभूतस्य च भावस्य परस्परं साध्य-

---

६१. अष्टा०, २. ४. १८, का० वृ०, वा० प० २. ५.

६२. अष्टा०, २. १. १.

६३. वा० प०, २. ५.

६४. वा० प० २. ६.

६५. अष्टा० १. ३. १, महाभा०।

साधनभावः सम्बन्धो भवति । पतञ्जलेराशयं स्पष्टयन् कैयटः समाचष्ट यदेवंविधस्थले आख्यातवाच्या क्रिया आख्यातवाच्यक्रियया सह कर्तृकर्मभावेनैव सम्बध्यते ! 'पश्य मृगो धावति' 'पचति भवति' इत्यादिषु अनेक तिङन्त-घटितेषु वाक्येषु तिङन्तयोः क्रियापदयोः स एव सम्बन्धः । करणाविभावेन तथा प्रयोगाऽदर्शनात् तिङन्तद्वयं करणाविभावेन न सम्बध्यते[९६] ।

जैमिनेरभिमतं वाक्यस्वरूपं कात्यायनस्य वाक्यस्वरूपेण सह यद्यपि सर्वथा तुल्यलक्षणं नास्ति तथापि किञ्चिदंशेन उभयोर्लक्षणं संवादि विद्यते । जैमिनिराचार्यो मीमांसादर्शने स्वाऽभिमतं वाक्यस्वरूपमित्थमलक्षयत्—

अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ।[९७]

यावत्सु पदेषु अर्थैकत्वं सम्भवति तावत्सु पदेषु वाक्यत्वम् इति भगवतो जैमिनेरभिप्रायो विद्यते । तस्मिन्नेव चैकस्मिन् वाक्ये यजुष्ट्वं स्वीक्रियते मीमांसकैः, न तु वाक्यसमूहे । वाक्यसमूहस्य विनियोगानर्हत्वात्[९८] । वाक्य-विषयकं जैमिनिमतं व्याचक्षाणो भर्तृहरिः—भेदे साकाङ्क्षाऽवयवमभेदे च परानाकाङ्क्षशब्दकं क्रियाप्रधानं विशेषणपदयुक्तमेकार्थवद् वाक्यमित्यन्व-वदत्[९९] । जैमिनिमतेन वाक्ये विभागजिज्ञासायां पदानि साकाङ्क्षाणि भवन्ति । अविभागजिज्ञासायान्तु पदानि परानाकाङ्क्षाणि भवन्ति । तत्र क्रियापदस्य प्राधान्यं भवति । सर्वाण्यपि पदानि एकार्थस्य प्रतिपादकानि । अर्थैकत्वेनाऽत्र नहि पदार्थैकत्वं विवक्षितम्, वाक्ये पदानामनेकत्वात्, अपि त्वत्राऽर्थैकत्वेन भिन्नप्रतीतिविषयस्य अनेकमुख्य-विशेष्यस्य राहित्यमेव यथा—"आयुर्यज्ञेन कल्पताम्, प्राणो यज्ञेन कल्पता[१००]मित्यादि । भाट्टदीपिकायां खण्डदेवः अन्यस्याऽर्थैकत्वस्य दुर्वचत्वादुक्तमेवाऽर्थैकत्वं समाचष्ट[१०१] । एतत् सम्यक् संलक्ष्य शबरस्वामी मीमांसासूत्रं भाषमाण एकार्थस्य पदसमूहस्य वाक्यत्वं व्याचष्ट[१०२] ।

---

९६. अष्टा०, १. ३. १, महाभा० ।
९७. मी० द०, २. १. ४६.
९८. भा० दी०, अ० २, पा०, १. अधि०, १५.
९९. वा० प०, २. ४.
१००. य० वे० ९. २१.
१०१. भा० दी०, २. १, अधि० १५.
१०२. मी० द०, २. १. ४५, शा० भा० ।

निघातादिव्यवस्थार्थं कात्यायनेन वाक्यं यत् परिभाषितं तेन जैमिनिना स्वीकृतं वाक्यलक्षणं कृत्स्नं तुल्यलक्षणं नास्ति। तत्र क्वचिदेते वाक्यलक्षणे समाविशतः, क्वचिच्च नैव समाविशतः। यथा—'गामानय' इत्यत्र वाक्ये आख्यातस्य सकारकत्वात् कात्यायनस्य वाक्यलक्षणं सङ्गच्छते। मुख्यविशेष्यभूताया भावनाया एकत्वेन अर्थैकत्वाज्जैमिनेरपि वाक्यलक्षणमत्र सङ्गच्छते। नद्यास्तिष्ठति कूले, शालीनां त ओदनं दास्यामि' इत्यत्राऽपि वाक्ये उभे अपि वाक्यलक्षणे सङ्गच्छेते। जैमिनिकात्यायनयोरुभयोरपि मतेऽत्र समानवाक्यत्वमस्ति क्वचिच्चाऽनयोर्विवादोऽप्यस्ति। यथा—'अयं दण्डो हरानेन' इत्यस्मिन् वाक्ये विवदते लक्षणद्वयम्। कात्यायनमतेनाऽत्र वाक्यद्वयमस्ति। 'अयं दण्डः' इत्यत्र हरतिना सत्यपि सामर्थ्ये तदेकवाक्यं नास्ति, अवध्यवधिमतोः भिन्नवाक्यतयाऽवस्थानात्। तत्र 'अस्ति' इत्यध्याहारेण एकवाक्यम्, 'हराऽनेन' चेत्यपरं वाक्यं विद्यते। जैमिनिवाक्यलक्षणदृष्ट्या तु 'अयं दण्डो हराऽनेने'ति एकमेव वाक्यं सम्भवति। मुख्यविशेष्यभूताया हरतिक्रियाया एकत्वेन अर्थैकत्वात्। लक्षणद्वयं तोलयता भर्तृहरिणा परिणामभेदोऽयं निदर्शितः। जैमिनिना स्वीकृतस्य वाक्यस्वरूपस्याऽयमस्ति आधारः—यावता पदसमूहेनेज्यते, तावान् पदसमूहो मीमांसाशास्त्र एकं यजुः स्वीक्रियते। तदेव च वाक्यं भवति। यजुः वाक्यं वा नाम क्रियोपकारकं भवति। यावता पदसमूहेन क्रियाया उपकारप्रकाशनं सम्भवति, तावद् वक्तव्यत्वात्, तावतः पदसमूहस्य वाक्यत्वम्। यथा—

> दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वेऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम्; सं व॑पामि॒ समाप॒ ओष॑धीभि॒ः समोष॑धयो॒ रसे॑न सꣳरेव॒तीर्जग॑तीभिः पृच्यन्ता॒ꣳसं मधु॑मती॒र्मधु॑मतीभिः पृच्यन्ताम्।

इत्यत्र यजुषि एतावता पदसमूहेन निर्वापक्रिया प्रकाश्यते। अतस्तावतः पदसमूहस्य यजुष्ट्वं वाक्यत्वञ्चाऽभ्युपगम्यते। एतदेव संलक्ष्य जैमिनिराचार्यो वाक्यं परिभाषमाणः 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागेस्यादि'ति सूत्रं प्रणिनाय। सूत्रमिदं व्याचक्षाणः शबरस्वामी अर्थैकत्वस्य अभिप्रायं प्रयोजनैकत्वं तात्पर्यैकत्वं वा समाचष्ट। एकप्रयोजनत्वादेव 'देवस्य त्वे'त्यादिपदसमूहस्य एकवाक्यत्वं सिद्ध्यति।

शब्दशास्त्रीयप्रक्रिया - निर्वाहोपकारकत्वेन कात्यायनकृतस्य वाक्यलक्षणस्य ज्यायस्त्वं पुण्यराजः प्रत्यपादयत्। कात्यायनेन जैमिनिना च स्वीकृतं वाक्यस्य लक्षणद्वयमपि सङ्घातवाक्यपक्षे सन्निविशते।

# संस्कृतवाङ्मये क्त्वार्थकरूपाणामुद्भवो विकासश्च

डॉ० रविप्रकाश आर्यः
फरमाना, सोनीपत (हरियाणा) - १२४ ४०८

संस्कृते आदिकालत एव वयं क्त्वार्थकप्रत्ययेभ्यो निष्पन्नानां रूपाणां प्रवर्धमानं व्यवहारं लक्षयामः। वैदिकसंहितासु एतेषां प्रयोगः १४७ वारमुपलभ्यते। तदूर्ध्वञ्च ब्राह्मणेषु ३२१ वारम्। लौकिकसंस्कृते तु तस्मादप्यूर्ध्वं प्रयोगोऽस्य लक्षयितुं शक्यः।[1]

क्त्वार्थकप्रत्ययाः सर्वे सम्मिल्य षड् भवन्ति, यथा— त्वी-त्वा-त्वाय-त्वीनं-य-त्याः। तत्र, त्वी, त्वा, त्वाय, त्वीनमित्येते असमास एव प्रयुज्यन्ते। परिशिष्टौ य-त्यौ तु प्रायेण समासे। एतेषु त्वी, त्वाय, त्वीनमित्येते संहिताभाग एवोपलभ्यन्ते। शेषाश्च त्वा-य-त्याः संस्कृत-भाषाविकासस्योत्तरोत्तरावस्थासु प्रयोगबाहुल्यं भजन्ति।

सम्प्रति उत्तरत्र वयं भाषाविकासस्य विभिन्नेषु अवस्थानेषु एतेषां प्रत्ययानां स्थितिं क्रमशः आकलयितुं प्रयतिष्यामहे। तद्यथा—

त्वीप्रत्ययः[2]— ऋग्वेदे सामान्यतः प्रयुक्तः। तत्रायं १५ धातुभ्यः ३५ वारमुल्लिखितः।[3] तद्विपरीतं सर्वाधिकप्रयुक्तस्य त्वाप्रत्ययस्य विंशतिरेव

---

१. द्र० जासो०, भा० १०, पृ० २३१, वर्ब इन्फ्लैक्शन इन संस्कृत, द्वारा अवैरी जे०।

२. पाणिनिनाऽपि स्नात्व्यादयश्च (७.१.४९) इति सूत्रेण प्रत्ययस्यास्यावस्थितिः संसूचिता।

३. द्रष्टव्या सूचिर्निम्ना—

कृत्वी—ऋ० १. १६१. ३ ; १०. १५. १२ ; १०. १७. २ ; १०. १०९. ७ ; १०. १५९. ४ ; १०. १७४. ४ ; गात्वी—४. ४१. ५ ; १०. १०१. ९ ; गूढ्वी—७. ८०. २ ; जुष्ट्वी—१. ११८. ५ ; ८. ५१. ६ ; ९. ९९. १६ ; पीत्वी—३. ४०. ७ ; ८. ६५. १० ; १०. ५५. ३ ; १०. ११३. १ ; पूत्वी—८. ८०. ७ ; भूत्वी—७. १०४. १८ ; १०. ८५. २९ ; १०. १४५. ५ ; वृत्वी—१. ५२. ६ ; वृक्त्वी—(√वर्ज) १०. ८७. २ ; वृष्ट्वी—५. ५३. १४ ; विष्ट्वी—३. ६०. ३ ; १०. ९४. २ ; हत्वी—२. १७. ६ ; २. २०. ८ ; २. ३०. १ ; ३. ३४. ९ ; हित्वी (√हा) २. ३८. ६ ; ६. ५९. ६ ; ९. ६९. ९ ; १०. ९९. ५ ; जनित्वी—१०. ६५. ७ ; स्कभित्वी—१०. ६५. ७.

प्रयोगा उपलभ्यन्ते ।[४] परमन्यत्र वैदिकभाषायां खात्वीति[५] विहाय त्वीप्रत्ययस्य प्रयोगो दृष्टिपथन्नायाति । उत्तरकाले (लौकिकसंस्कृते) चाप्रयुक्त एवास्त्येषः ।[६]

त्वाप्रत्ययः[७]—ऋग्वेदे नवभ्यो धातुभ्योऽस्य प्रयोगो विंशतिवारमुपलभ्यते,[८] ३९ वारञ्चाथर्ववेदे[९] । उत्तरोत्तरञ्चास्य प्रयोगो वर्धत एव । पुराणेषु लोके च सामान्येन प्रयुक्तः । ऋग्वेदोत्तरवैदिकवाङ्मये प्राप्यमाणानि कानिचनोदाहरणानि द्रष्टव्यानि, तद्यथा—हत्वा,[१०] जनयित्वा,[११] विदित्वा,[१२] सुप्त्वा,[१३] दृष्ट्वेति[१४] । यथापूर्वमेव निर्दिष्टं त्वेतस्य प्रयोगोऽसमास एव दृश्यते,[१५] परं वैदिकभाषायामेतादृशान्यपि उदाहरणानि दृग्गोचरीभवन्ति

---

४. द्र० अधस्तात् पा० टि० ५.

५. तैस० ४. १. १. ४.

६. टी० बरो महोदयस्यानुसारेण त्वीत्येतस्य प्रयोगो मध्यकालायाः भारतार्यशाखाया उत्तरपाश्चात्यासूपभाषासूपलभ्यते — द्र० सं०भा० पृ० ३७१.

७. द्र० समानकर्तृकयोः पूर्वकाले—पा० ३. ४. २१.

८. तद्यथा — पीत्वा—१. ४. ८; ८. ५८. ७; ८.८१.६; ९.२३ ७; ९. १०८. २; १०. ४४. ८; १०. ९६. ९; भित्वा—१०. ६८. ७; भूत्वा—१०. १६२. ५; गित्वा—१०. ५.३; युक्त्वा—१. १६१. ७; १. ७७. ३; ५. ४०. ४; वृत्वा (√वर)—१०. ९०. १; श्रुत्वा—६. ५०. ५; हत्वा १. १००. १८; १. १०३. २; २. १२. ३; हित्वा—५. ५३. १४; १०. १६५. ५.

९. तु० मैक्डोनल, पृ० ४१२; अनु० ५९०ब ।

१०. वास० ३२. १२.

११. खिल० १ ४. ८.

१२. वासं० ३१. १८.

१३. तस्मात्सुप्त्वा प्रजा प्रबुध्यन्ते—तैसं० ५. २. २. ६.

१४. तं हैनं दृष्ट्वा भीर्विवेद—शब्रा० ११. ६. १. ७.

१५. द्र० पा० क्त्वापि छन्दसि—७. १. ३८.

यत्रास्य प्रयोगः समासेऽपि दृश्यते । तद्यथा—परिधापयित्वा,[१६] प्रत्यर्पयित्वा,[१७] समीरयित्वेति[१८] ।

महाकाव्येष्वपि एतादृशी प्रवृत्तिरुपलब्धुं शक्यते, यथा उत्तरत्र निर्दिष्टानि उदाहरणानि—अतिक्रामयित्वा,[१९] भस्मीकृत्वा,[२०] नमस्कृत्वा,[२१] पेशिकृत्वा,[२२] उदकं कृत्वा,[२३] श्यामकृत्वा,[२४] समर्चयित्वा,[२५] विचारयित्वा,[२६] प्रज्वालयित्वा[२७] इत्यादयः ।

परं लौकिकसंस्कृते त्वस्य प्रयोगः प्रायेण असमस्तधातुपदेषु एव प्राप्तुं शक्यते ।

त्वायप्रत्ययः[२८]—ऋग्वेदे अष्टवारं प्रयुक्तेभ्यः सप्तभ्यो धातुभ्यः परतः प्रयुक्तोऽस्ति ।[२९] अथर्ववेदे चतुर्वारं प्रयुक्ताभ्यां √हन्, √गम् इति

---

१६. द्र० काठस० ११. १०.

१७. शौ० १२. २. ५; पैस० १७. ३५. ४.

१८. मैस. २. ३. ५.

१९. द्र० राम० ६. ३१. ५५

२०. तत्रैव—७. ५९. २१.

२१. राम० ५. ११५. ६; ५. ११५. ६०; ५. १५. ३२.

२२. तत्रैव—३. ६४. ३३.

२३. तत्रैव—२. ५८. २३; २. ७०. ३.

२४. तत्रैव—४. २९. २४.

२५. तत्रैव—समर्चयित्वा स निशाचरो जगौ—७. ३१. ४०.

२६. तत्रैव—सोऽश्वान् विचारयित्वा तु रथे युक्तान्—७. ४५. १९.

२७. तत्रैव—ततः प्रज्वालयित्वाग्निं तावुभौ हरिराक्षसौ—७. ३४. ४०; तु० च तत्रैव ७. १२. २०.

२८. द्र० क्त्वो यक्—पा० ७. १. ४७.

२९. यथोदाहरणानि—दत्त्वाय—१०. ८५. ३३; भवत्वाय—१०. १०९. ७; युक्त्वाय—१०. ९३. १४; हत्वाय—१०. ८४. २; १०. १५७. ४; हित्वाय—१०. १४८. ८

धातुभ्यां परतो मिलति ।[30] अन्यत्र च षड्भ्य एव ।[31] परं महाकाव्येषु लोके चास्य प्रयोगो नोपलभ्यते । ऋग्वेदे त्वायप्रत्ययान्तरूपाणि दशममण्डलत एवोद्धर्तुं शक्यन्ते । गत्वाय इत्येकमेवाष्टमे मण्डले प्राप्यते ।[32] इतराभ्योऽपि संहिताभ्यः कानिचिदुदाहरणानि उद्धर्तुं शक्यानि । तद्यथा—कृत्वाय[33], तत्वाय[34], वृत्वायेति[35] ।

**त्वीनं-प्रत्ययः**—पाणिन्यादिभिर्वैयाकरणैरपि प्रत्ययस्यास्य इष्ट्वीनं[36], पीत्वीनम्[37] इति प्रयोगौ चर्चितौ । परमस्य व्यवहारः कुत्रापि नयनपथं नारोहति । सम्भवतः पाणिन्यादिभी रूपद्वयमिदं कस्याश्चित् विलुप्तवैदिक-शाखातः समाम्नातमस्ति ।

**य-प्रत्ययः त्य-प्रत्ययश्च**—य-त्य-प्रत्ययान्तरूपाणां व्यवहारो वैदिक-भाषातो लौकिकीं यावन्निरन्तरं वृद्धिमेवाप्नोति ।[38] प्रत्ययावेतौ पूर्वनिर्दिष्ट-रीत्या अनञ्पूर्वे समास एव प्रयुज्येते ।[39] निम्नावस्थासु त्यप्रत्ययो यप्रत्ययस्य स्थानमावृत्ते ।

---

३०. यथा—गत्वाय—२०. १८८. ५; हत्वाय ४. ३१. २; २०. ६३. २; २०. १२४. ५.

३१. द्र० ह्वीटने, पृ० ३५८; अनु० ९९३ब ।

३२. यथा, दिवं सुपर्णो गत्वाय सोमं वज्रिण आभरत् ।

—८. १००. ८

अपि च द्र० खिल० ५. १२. ५; एवञ्च उपरिष्टाद् । पा० टि० २७.

३३. द्र० वास० ११. ५९; तैस० ४. १. ५. ४.

३४. द्र० वास० ११. १.

३५. वास० ११. १९; तैस० ४. १. २. ३.

३६. द्र० इष्ट्वीनमिति च—पा० ७. १. ४८.

३७. द्र० पीत्वीनमित्यपीष्यते—वा० ७. १. ४८.

३८. य प्रत्ययान्त-रूपाणि पञ्चधातुभ्यः ६७ वारं ऋग्वेद उपलभ्यन्ते । तथा वैकल्पिक त्यप्रत्ययान्तरूपाणि पञ्चधातुभ्य=१३ वारं सम्प्राप्यन्ते । विशेषार्थं च द्रष्टव्या डेलब्रूक महोदयेन प्रदत्ता सूचिः पृ० २२९; अनु० २२२-२३.

३९. समासेऽनञ् पूर्वे क्त्वो ल्यप् ।—पा० ७. १. ३८.

(१) ह्रस्वान्तधातुभ्यः,[४०] यथा—उपस्तुत्य,[४१] प्रस्तुत्य,[४२] प्रत्याहृत्य,[४३] आभृत्य,[४४] आदृत्य[४५] इति ।

(२) विलुप्तान्त्यमकारनकारामन्तानन्तधातुभ्यः, यथा[४६]—आगत्य,[४७] विहत्य,[४८] उद्यत्य[४९] इति ।

लोकभाषायान्त्वन्त्यमकारस्य विलोपो वैकल्पिक एवास्ति ।[५०] इत्थममन्तधातोरुभयथा रूपाणि सम्पाद्यन्ते, तद्यथा—

आ + गम् धातोः — आगम्य वा आगत्य वा ।
प्र + नम् धातोः — प्रणम्य वा प्रणत्य वा ।

परं छन्दसि तु अन्त्यमकारस्य नित्यं लोप एव दृश्यते । अतोऽमन्तधातुः सर्वदा त्य इत्यस्यैव प्रत्ययस्य ग्रहणं करोति, यथा—आगत्य[५१] । यथा प्रागेवोल्लिखितं यद् य-त्य-प्रत्ययद्वयं समास एव प्रयुज्यते । परन्तु विषयेऽस्मिन् छन्दोभाषा कमपि दृढनियमं नानुसरति । तत्र तु समासरहितावस्थायामपि प्रत्ययावेतौ दृश्येते ।

---

४०. ह्रस्वस्य पिति कृति तुक् ।—पा० ६. १. ७१.

४१. द्र० वास० २१. ४६.

४२. तत्रैव ।

४३. खिल० ४. ५. २९.

४४. ऋ० १०. ७१. ३.

४५. तत्रैव १. १०३. ६.

४६. द्र० वा ल्यपि—पा० ६. ४. ३८.

४७. ऋ० ३. ३५. ८; ३. ४२. ७; वास० ११. १८; शौ० २०. २४. ७.

४८. ऋ० ५. ४. ५; मैस० ४. ११. १; शौ० ७. ७७. ९; काठस० २. १५.

४९. तैस० ५. १. १०. ४; शौ० ६. २. ७. ४; शौ० ८. ८. १२; पैस० १६. ३०. २; काठस० १०. ११.

५०. द्र० अनु० ४६, तथा च तत्रैव (पा० ६. ४. ३८) काशिका—'व्यवस्थित विभाषा चेयम्, तेन मकारान्तानां विकल्पो भवति । अन्यत्र नित्यमेव लोपः । प्रयत्य, प्रयम्य, प्ररत्य, प्ररम्य ।'

५१. ऋ० ३. ३५. ८; ३. ४२. ७; वास० ११. ८; शौ० २०. २४. ७.

तद्यथा-प्रोथ्य[५२] (√प्रुथ), स्थाप्य[५३] इति। एतादृशी प्रवृत्तिः महाकाव्येष्वपि दृग्गोचरी भवति। यथा—

गत्वा इति स्थाने गम्य[५४]
आप्त्वा इति स्थाने आप्य[५५]
गृहीत्वा इति स्थाने गृह्य[५६]

---

५२. द्र० आश्व० श्रौ० सू० ६. १३. १०.

५३. श्वेत० उप० २. ८.

५४. द्र० राम० ३. ६५. ५

५५. तत्रैव २. ३. ३२.

५६. गृह्य० (राम० १. ४८. ६) ४९ वारमुल्लिखितमस्ति, तद्-विपरीतं ग्रहीत्वेति (राम० १. १. २६) ६४ वारं प्रयुक्तमस्ति।

**संक्षेपाः**

| | |
|---|---|
| द्र०— | द्रष्टव्यम्। |
| पृ०— | पृष्ठम्। |
| जासो०— | जनरल ऑफ अमेरिकन ऑरियण्टल सोसायटी। |
| भा०— | भागः। |
| पा० टि०— | पादटिप्पणम्। |
| सं० भा०— | संस्कृत भाषा। |
| पा०— | पाणिनिः। |
| तु०— | तुलनीयम्। |
| अनु०— | अनुच्छेदः। |
| वास०— | वाजसनेयि-संहिता। |
| खिल०— | खिलपाठः (ऋग्वेदीयः)। |
| तैस०— | तैत्तिरीय-संहिता। |
| राम०— | रामायणम्। |
| डेलब्रूक— | आल्टीण्डीशे वर्बम्। |
| ऋ०— | ऋग्वेदः। |
| शौ०— | शौनकीयोऽथर्ववेदः। |
| मैसू०— | मैत्रायणिसंहिता। |
| पैस०— | पैप्पलाद् संहिता। |
| काठसू०— | काठक संहिता। |
| आश्व०श्रौ०सू०— | आश्वलायन श्रौतसूत्रम्। |
| श्वेत०उप०— | श्वेताश्वरोपनिषद्। |
| वि०म०— | विशेषो मन्तव्यः। |
| श०ब्रा०— | शतपथ ब्राह्मणम्। |

# शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति

डॉ० रघुवीर वेदालङ्कारः
रामजस कालेज, दिल्ली

किमिदं ब्रह्म ? वेदप्रतिपादितमनाद्यन्तं जगदाधारं निराकारं सृष्टिकृद् ब्रह्म, उतौपनिषदं यत्तपसा चीयते गुहानिहितमक्षरं ब्रह्म, भगवच्छंकराचार्यप्रतिपादितमविद्यादिसम्बन्धेनेश्वरत्वाऽऽपन्नं वा ब्रह्म ? भवतु नामेदं सर्वं ब्रह्म। अस्माकं शाब्दिकानां त्वयं शब्द एव ब्रह्म। बृंहणत्वाद् आकाशव्यापकत्वाद् ब्रह्म। आह च शब्दब्रह्मसमुपासकशिरोमणिर्हरिः—अनादिनिधनं ब्रह्म । अयमेव महादेवो वृषभो वेदितव्यः समुपास्यश्च। न चेदं ब्रह्म सृष्टिकृत्। केवलमर्थभावेनानेन ब्रह्मणा जगतः प्रक्रिया साध्यते। यथा वैदिकं ब्रह्म निराकारमपि निमित्तकारणत्वेन सृष्टिकृद् यथा वा शंकरप्रतिपादितं ब्रह्म एव सृष्टिरूपेण विवर्तते तथाऽनेनापि शब्दब्रह्मणाऽर्थभावेन जगतः प्रक्रिया प्रवर्त्यते। जगत्प्रक्रियाप्रवर्त्तकमिदं शब्दब्रह्मेत्याशयः। किं शब्दादृते जगतः प्रक्रिया न प्रवर्त्तते ? दृश्यते तु मूकबधिरेषु शब्दादृतेऽपीङ्गितेन विविधकर्मप्रवृत्तिः। कुतः पुनः सङ्गच्छतेऽर्थभावेन जगतः प्रक्रियेति ? सत्यम्, तेषामपि शब्दादृते न काचित् प्रवृत्तिः। वैखर्या अभावेऽपि ते परापश्यन्तीमध्यमां समाश्रयन्तः शब्देऽर्थमर्थे शब्दं विनिवेशयन्तो जागतीं प्रक्रियां समाश्रयन्ते। पशुपक्षिणोऽपि 'हूं, चीं, मैं' इत्याद्यव्यक्तवाचा शाब्दमेव व्यवहारं समाश्रयन्ते। अतः सम्यगेवोक्तम्—विवर्ततेऽर्थभावेनेति।

अन्यच्च शब्दब्रह्मणोः सारूप्यमस्त्यनादित्वम्। सृष्टिकृद् ब्रह्मवच्छब्दब्रह्माप्यनादिनिधनम्, नित्यमित्यर्थः। शब्दो नित्योऽनित्यो वेति विवादमाश्रयद्भिर्न्यायमीमांसाव्याकरणविद्भिस्तर्कप्रमाणैः शब्दनित्यत्वं स्वीकृतम्। द्वयं चेदमक्षरम्। न क्षरति। सति क्षरणेऽनित्यतासङ्गः। उभे अपीमे ब्रह्मणी व्योमव्यापके। शब्दस्त्वाकाशगुण इति सुसिद्धमेव। परं ब्रह्मापि हृद्गुहानिहितमित्युपनिषत्सु बहुधा प्रपञ्चितम्। हृदयगुहायां हृदयाकाश इत्यर्थः। द्वयमपीदं ब्रह्म समुपासनीयम्। वैदिकमौपनिषदं वा ब्रह्म योगिभिस्तपस्विभिः सत्येन तपसा सम्यग्ज्ञानेन ब्रह्मचर्येण लभ्यम्। शब्दब्रह्म तु शब्दसमुपासकैः शाब्दिकैः। इदं शब्दब्रह्मापि परब्रह्मप्रापकम्। अत एवाह हरिः—शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति। शब्दसिद्धिश्च व्याकरणसम्भवा।

शब्दनिष्णाताय चापावृतो मोक्षमार्गः। व्याकरणमिदं मोक्षप्रदमिति फलितम्। अत एवोक्तम्—

इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः।

अत्रायं प्रश्नः—किं सर्वे वैयाकरणा मोक्षाधिकारिणः? किं शब्दब्रह्मणि निष्णाताः सर्वे परं ब्रह्माधिगच्छन्ति। एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः किं वैयाकरणेभ्य एव कामधुग् भवति नान्येभ्यः? वेदोपनिषदादिषु प्रतिपादित-ज्ञानतपः श्रद्धाब्रह्मचर्यादीनां नास्त्यावश्यकता लब्धवर्णेभ्यः? न वा चित्तनिरोधात्मकः पतञ्जलिप्रोक्तोऽयं योगोऽपेक्ष्यते तैः? यद्येवं सुकरोऽयं पन्था मोक्षस्य। किमियमतिशयोक्तिरसत्कल्पनाऽर्थवादो वा?

इयमत्र विवेचना—ज्ञानयोगध्यानयोगक्रियायोगादिरूपेण योगोऽयं बहुविधः। तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोग इति पतंजलिः। शब्दसिद्धिसमर्पितजीवनोऽयं वैयाकरणः प्रतिदिनं शब्दमवगाहते। शब्दं ब्रह्म मत्वाऽहर्निशं शब्दं समुपास्ते। एवम् अभ्यासवैराग्याभ्यां तन्निरोध इत्यनेन वैयाकरणस्य चित्तवृत्तिनिरोधात्मकोऽयं योगः सुतरां समुत्पद्यते। शब्दसंस्कार-संलग्नोऽयं वैयाकरणो न केवलं साधुप्रकृतिप्रत्ययपरिकल्पनायुतं संस्कृतं शब्दं प्रयुंक्तेऽपित्वसत्यशब्दप्रयोगनिराकरणपूर्वकं संस्कृतं शब्दं प्रयुञ्जान आत्मानमपि संस्करोति। व्याकरणेन सर्वथा संस्कृतं शब्दं प्रयुञ्जानो भावदुष्टः कर्मदुष्ट आचरणदुष्टोऽपि वैयाकरणो मोक्षाधिकारी इति न सङ्गच्छते। न केवलं व्याकरणेन प्रकृतिप्रत्ययविभागपरिकल्पनया संस्कृतेन शब्देन परमात्मसिद्धि-रपित्वनृत-पैशुन्यादि-दोषरहितः संस्कृतः शब्द एवात्राभिप्रेतः। हिंसाऽनृत-कामक्रोधादिदोषमुक्तः संस्कृतात्मा शुद्धात्मा पुरुष एव कृतशब्दसंस्कारो मोक्षाधिकारी नान्य इत्याशयः। व्याकरणमिदं वाङ्मलानां चिकित्सितम्। शब्दं संसाध्यापगतवाङ्मलोऽसौ वैयाकरणः सत्यप्रतिष्ठायां क्रियाफलाश्रयत्व-माप्नोति शब्देषु। शब्दसाधकस्याऽमोघा वाग् भवतीत्याह योगभाष्यकारो व्यासः। योगेऽसत्यस्याशीतिप्रकाराः परिगणिताः। सर्वप्रकारमसत्यं परित्यज्यैव शब्दसाधकोऽमोघवाग् भवति नान्यथा। अयमेव तस्य शब्दसंस्कारः। इयमेव परमात्मसिद्धिः इदमेवापवर्गद्वारम्। अयमेव शब्दः स्वर्गे लोके कामधुङ् नान्यः कश्चित्।

कथमिति चेत्? इदमत्र तत्त्वम्—मनःपूर्वकं हि शब्दप्रयोगः। मनो विना नास्ति शब्दोत्पत्तिः। उक्तञ्च—

आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥

मनो हीष्टानिष्टचिन्तकम् । सङ्कल्पविकल्पात्मकं मन इति शुभाशुभसङ्कल्पा मनसैव क्रियन्ते । इयं चात्रौपनिषदिकी प्रक्रिया---यन्मनसा ध्यायति तद् वाचा वदति, यद् वाचा वदति तत् कर्मणा करोति, यत् कर्मणा करोति तदभिसम्पद्यते । मानवो यदि मनसा शुभं ध्यायति तदा वाचाऽपि शुभं वक्ष्यति । अशुभे ध्यानेऽशुभोच्चारणम् । अयमेव शब्दसंस्कारः । इयमेव शब्दसिद्धिः । वश्यवाग् वैयाकरणः शब्दं सम्यग् ज्ञात्वा सुप्रयुङ्क्ते नान्यथा प्रयुङ्क्ते । मनसा शुभं ध्यायति, वाचा शुभं वदति कर्मणा शुभं करोतीति नास्त्यत्रावकाशोऽधर्मदोष-युक्तस्य शब्दस्य कर्मणो वा । एवमपगतवाङ्मलोऽसौ वैयाकरणो मनसाऽऽत्मना च सर्वथा शुद्धः सन्नेव मोक्षाधिकारी, नान्यथा । अत एवोक्तम्---शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।

अनेनैव मार्गेण मोक्षमाणा महावैयाकरणाः पाणिनीयाष्टके कृत-भूरिश्रमत्वाद् अभिनवपाणिनिः इति विरुदभाजः श्रीमन्तश्चारुदेवशास्त्रिण आजीवनं शब्दं समुपासन्तः शब्दब्रह्मणि निष्णाताः सन्तः परं ब्रह्म सम्प्राप्ताः । ते खलु आदघ्नास उपकक्षास उत्वे ह्रदा इव स्नात्वा उत्त्वे ददृश्रे इति वैदिकीं वाचमनुरुन्धन्तः स्नात्वा इव ददृशिरे ।

मुनिरसौ स्वकीर्तिप्रज्ञापकानङ्गुलिनिर्देश्यानैकानप्रतिमान् ग्रन्थान् प्रणीतवानिति विदन्त्येव विद्वांसः । तेषु २३३२ पृष्ठपरिमितः सुदीर्घ-कलेवरश्चन्द्रोदय इव मनः आह्लादकारी व्याकरणचन्द्रोदयस्तु वाचस्पतेर्नामतीव चारुदेवशास्त्रिणः सुस्थिरयशः-प्रख्यापकः । इमे हि स्वोपज्ञवृत्तिसहितवाक्यपदीय-स्याद्यं काण्डं परिष्कृत्याक्षुण्णं यशो लेभिरे ।

वैयाकरणोऽसौ न केवलं व्याकरणोदधिं तीर्णवानपितु गुजराती-मराठी-रूसी-जर्मन-फ्रांसीसी-भाषास्वपि प्रावीण्यं प्राप्तवान् । तेषां मुखनिःसृता रुचिरा, मधुरा, ललिता गम्भीरा वाग् हिमवतो निःसृता पूता भागीरथीव पावयति स्म मानसम् । सरस्वतीसमाराधनमासीत्तेषां जीवनव्रतम् । वृद्धत्वयुते वलिपलितेऽपि वपुषि समुत्साहपूरितमानसोऽयं प्रतिदिनं दश होरापर्यन्तं पठनं लेखनमकरोदित्यासीदादर्शः । अत एव 'यं ब्रह्माणमियंदेवी वाग् वश्येवानुवर्त्तते' इति भवभूतिवचनानुसारेण वश्यवागसौ निदर्शनमासीद् विदुषाम् अग्रगीश्च वैयाकरणानाम् । मुनिरसौ यदा विद्यासौरभसुरभितसुरभि-

स्थो ब्रह्मसूत्रपवित्रवक्षाः प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि चिन्तयति स्म ग्रन्थान् प्रणयति स्म ततस्तदासीदशक्यं वर्णनाप्यनर्थकेन भवितुं किं पुनः सम्पूर्णशब्देन ।

विद्यामभ्यसनेनैव प्रसादयितुमर्हसीत्याजीवनमभ्यसन्तो विद्यां सम्प्रसाद्येमे न केवलं व्याकरणेऽपितु साहित्येऽपि परं प्राणीण्यमुपगताः । अतएव पञ्जावसर्वकारस्य भाषा - विभागेन 'शिरोमणिसाहित्यकार' इत्युपाधिना विभूषिताः । इतः पूर्वं वाराणसेय हिन्दूविश्वविद्यालयेन सम्मानार्थं डी०लिट् इत्युपाधिना राष्ट्रपतिवरेण च डॉ० राधाकृष्णेन 'विद्यावाचस्पतिः' उपाधिनाऽपि समलङ्कृता इमे ।

पुत्रैषणा-लोकैषणा-वित्तैषणेत्येषणाभिराभिः संयमितं मानवजीवनम् । योगिनः संन्यासिन एवाभ्यः समुत्थाय विरक्ताः सन्तो भैक्ष्यचर्यां चरन्ति । विरला एव सांसारिका एषणात्रयं समुच्छिद्य धवलं विमलं निर्बन्धं स्वच्छन्दं सानन्दं जीवनं यापयन्ति । चारुदेवशास्त्रिणोऽप्येषणात्रयं विजित्य वीतकल्मषं विमलं जीवनं यापयन्तो नूनं मुनित्वमापन्नाः । उपनिषद्‌वेरिव उप-नि-षदताऽनेन जनेन नैकधा विद्यामधुमाधुर्यमपायि । तेऽधुना दिवं गताः । उपायसहस्रैर्जीवनप्रत्यर्पणेनापि तेऽधुना दृग्गोचरीकर्तुं न शक्यन्ते । किमधिकम्—

जीवत्सु तातपादेषु नूतने शब्दसंग्रहे ।
शास्त्रिभिश्चिन्त्यमानानां ते हि नो दिवसा गतः ॥



# पाणिनीयसूत्रयोर्हेतुपदस्यार्थः

डॉ० वसन्तकुमार म० भट्ट
संस्कृत-विभाग, गुजरात युनिवर्सिटी, अहमदाबाद-३८० ००१

## पीठिका—

महर्षेः पाणिनेरष्टाध्याय्यां हेतुरिति शब्दस्य द्विविधः प्रयोगो दृश्यते। तद्यथा—१. शास्त्रीयो हेतुः, २. लौकिकश्च हेतुरिति। तत्प्रयोजको हेतुश्च। १-४-५५ इत्यनेन सूत्रेण शास्त्रीयो हेतुः निर्दिष्टः। सूत्रेणानेन प्रयोजककर्तुः हेतुरिति पारिभाषिकं नाम विहितम्। एवञ्च, हेतौ— २-३-२३ इत्यत्र लौकिकहेतोर्निर्देशो वर्तते। इदं हेतुरिति पदं २-३-२४ एवं २५ इत्येतयोः सूत्रयोरनुवर्तते।[1] अस्य हेतुरिति पदस्य कोऽर्थः, अनुवृत्तौ च तस्यार्थस्य परिवर्तनं भवति न वेत्यत्र विचार्यते।

अपदेशः, लिङ्गं, प्रमाणं, करणं, निमित्तं, प्रकृतिः, कारणम् उपादानञ्चेत्यादिविभिन्ना अर्थच्छायाः प्रदर्शयितुं नैकेषु शास्त्रेषु हेतुरिति शब्दः प्रयुज्यते।[2] अतः विचारणीयमिदं वर्तते यत् पाणिनिना मनसि कामर्थच्छायां निधाय हेतुरिति पदमत्र (२-३-२३ एवं २-३-२५) प्रयुक्तम्।

---

१. हेतौ। पा० सू०, २.३.२३
अकर्तर्य्यृणे पञ्चमी। २.३.२४
विभाषा गुणेऽस्त्रियाम्। २.३.२५।

२. (क) हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम्।
—वैशेषिकसूत्रम् (IX-24)

(ख) साङ्ख्यकारिकायाञ्च "हेतुमदनित्यम् ०,का०१० इत्यत्र—
(१) उपादानं, हेतुः, कारणं, निमित्तमिति पर्य्यायाः। —गौडपादभाष्यम्
(२) हेतुरपदेशो निमित्तं प्रकृतिः कारणमित्य(न)र्थान्तरम्।—सांख्यसप्तति-वृत्तिः $V_1$॥ (३) हेतुरपदेशो लिङ्गं निमित्तं कारणमिति पर्य्यायाः।—सांख्यसप्ततिवृत्तिः $V_2$॥

करणमित्यर्थच्छायामपि प्रकटीकर्तुं हेतुरिति शब्दस्य प्रयोगः भवतीति वैशेषिकसूत्रादिषूक्तम्। किन्तु पाणिनिना साधकतमं करणम्, १-४-४२ इति सूत्रेण करणस्य पृथङ् निर्देशः कृतः। अतः हेतौ, २-३-२३ इत्यत्र हेतुरिति शब्देन करणस्यार्थः नैव ग्रहीतव्य¹ इत्येतत् सुविदितम्। कारकम् (१-४-२३), हेतुः (२-३-२३) एवं लक्षणम् (१-४-८४) इत्यत्र को भेद इति स्पष्टीकुर्वन् तत्रभवान् हेलाराजो व्याचष्टे यत् अष्टाध्याय्याम् पाणिनिना '...निमित्तसामान्यं त्रिधा विभक्तम्। स्वरूपभेदेन क्रियानिर्वर्तकं कारकम्, सामान्येन जनको हेतुः, ज्ञापके लक्षणम्' (वाक्यपदीयम्, काण्ड —३, पृ० २५५)। इत्थं हेतुतः करणमत्यन्तं भिन्नमेव। अतः हेतुरित्यस्य शब्दस्य २-३-२३ एवं २५ इत्यत्र कोऽर्थः, तदिदानीं विचार्यते।

## हेतौ। २-३-२३ इत्यत्र हेतुरिति पदस्यार्थः—

हेतौ। २-३-२३ इत्यत्र भाष्यकारेण हेतुरिति शब्दस्य व्याख्यानं नैव कृतम्। अतः पतञ्जलेर्मतानुसारमत्र हेतुरिति शब्दस्य कोऽर्थः, तद्भाष्याज् ज्ञातुं न शक्यते। भर्तृहरिरिमं विषयमित्थं विवृणोति—

अनाश्रिते तु व्यापारे निमित्तं हेतुरुच्यते।
द्रव्यादिविषयो हेतुः, कारकं नियतक्रियम्॥
(वाक्यपदीयम् ३-७-२४ ब, २५ अ)

अस्यायमाशयः—

द्रव्य-गुण-क्रियाणामुत्पत्तौ यन्निमित्तं तद् हेतुरित्युच्यते। (करण) कारकन्तु सव्यापारं भवति, किन्तु द्रव्यादीनामुत्पत्तौ यन्निमित्तं भवति तत्र व्यापारस्याभावः वर्तते। एतादृशमेव निमित्तं हेतुरिति वक्तुं पार्यते।

---

१. हेतुः करणादनेकधा व्यतिरिच्यते इति प्रतिपादयितुं भर्तृहरिणा वाक्यपदीये भणितं यत्—

अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते।
द्रव्यादिविषयो हेतुः, कारकं नियतक्रियम्॥
—वाक्यपदीयम् ३-७-२४ब, २५अ

क्रियार्थं करणं, तस्य दृष्टः प्रतिनिधिस्तथा।
हेत्वर्था तु क्रिया, तस्मान्न स प्रतिनिधीयते॥
—वाक्यपदीयम् ३-७-२६

तद्यथा—१. दण्डेन घटः। [इत्यत्र घटरूपद्रव्यस्योत्पत्तौ दण्डः[४] निमित्त-कारणम्] २. पुण्येन गौरवर्णः। [इत्यत्र गौरवर्णरूपगुणस्योत्पत्तौ पुण्यं निमित्तकारणं=हेतुः], ३. पुण्येन दृष्टः हरिः। [इत्यत्र हरिदर्शनरूप-क्रियाया उत्पत्तौ पुण्यं निमित्तमस्ति]।

काशिकाकारेण पा०सू० २. ३. २३ इत्यस्य सूत्रस्य हेतुपदम् इत्थं व्याख्यातम्—फलसाधनयोग्यः पदार्थो लोके हेतुरुच्यते। (पृ० १८०) वृत्तिमिमां स्फुटीकर्तुं न्यासकारो लिखति यत्—फलसाधनयोग्य इत्यादि। अनिष्पा-दयन्नपि फलं तत्साधनयोग्यः पदार्थो लोके हेतुरित्युच्यत इति योग्यग्रहणम्। धनेन कुलमित्यादौ कुलादीन्यकुर्वन्त्यपि धनादीनि तत्करणयोग्यतया लोके हेतुव्यपदेशमासादयन्तीति तेभ्यस्तृतीया ॥ (पृ० १८१) हरदत्तश्च पदमञ्जर्यां लिखति यत्—लोके हि अङ्कुरादिकार्योत्पादने योग्यतामात्रप्रयुक्तोऽनाश्रित-व्यापारो द्रव्यगुणक्रियाविषयो बीजादिर्हेतुः। …उदाहरणेषु क्रियायाः अभावात् करणत्वमनाशङ्कनीयम् इति। (पृ० १८०, १८१).

भट्टोजिदीक्षितेनापि भर्तृहरिमनुसृत्य सिद्धान्तकौमुद्यां निरूपितं यत्—द्रव्यादिसाधारणं निर्व्यापारसाधारणं च हेतुत्वम्। करणत्वं तु क्रियामात्र-विषयं व्यापारनियतं च ॥ (पृ० ८११)

इत्थं सर्वैः टीकाकृद्भिः हेतौ २. ३. २३ इत्यत्र हेतुशब्दस्य उत्पादको हेतुः इत्यर्थो गृहीतः। अयमेव चोत्पादकहेतुरूपोऽर्थः ग्रहीतव्य इति तेषां विवरणैश्चोदाहरणैश्च ज्ञायते। अयञ्चार्थो भर्तृहरेर्वाक्यपदीयादारभ्य प्रचलितप्राय इत्यपि प्रतीयते।

## विभाषा गुणेऽस्त्रियाम्। २. ३. २५ इत्यत्रानुवृत्तस्य हेताविति पदस्यार्थः—

हेतौ। २. ३. २३ इत्यस्मात्सूत्रात् (तृतीयेति पदेन सह) हेताविति पदस्यानुवृत्तिः प्रवर्तते। ततश्च २. ३. २४,२५ इत्येतयोः सूत्रयोः हेताविति पदं संयोज्य तयोः सूत्रयोः कस्कोऽर्थो भवतीति तावद् विचारणीयम् ॥

---

४. क्रियासाधकतमं यद् व्यापारवत्त्वेन विवक्षितं चेत् करणम्, नो चेत् हेतुः। द्रव्यसाधकतमस्य दण्डादेस्तु व्यापारवत्त्वेऽपि हेतुत्वमेव ॥—इति अस्मद्गुरुचरणाः श्रीबालकृष्णपञ्चोलिनः। (द्रष्टव्यम्-लक्ष्मीटीकासमेतायाः सिद्धान्तकौमुद्याः भाग-२, पृ० १२।

अकर्तर्यृणे पञ्चमी। २. ३. २४ इत्यस्माच्च सूत्रात् पञ्चमीति पदस्यानुवृत्तिः प्रवर्तते। अतः, २. ३. २५ इत्यत्र हेताविति पदस्यानुवृत्त्या सह पञ्चमीति पदस्याप्यनुवृत्तिं स्वीकृत्य विभाषा गुणेऽस्त्रियाम्। २. ३. २५ इति सूत्रस्यार्थो विचारणीयः। तद्यथा—विभाषा (तृतीया) (पञ्चमी), (हेतौ) गुणेऽस्त्रियाम् इति। अस्य सूत्रस्यायमर्थः—"स्त्रीलिङ्गे यः न वर्तते तादृशो गुणवाचकः शब्दः यदि हेतुवाचकः भवेत्, तस्मात् तृतीयापञ्चम्यौ वा भवतः" इति। अस्य सूत्रस्योदाहरणरूपेण काशिकाकारेण (१) जाड्याद् बद्धः—जाड्येन बद्धः। (२) पाण्डित्यान्मुक्तः—पाण्डित्येन मुक्तः, इति वाक्यद्वयम् प्रदत्तम्। अस्मिन्नुदाहरणे बन्धनक्रियायां हेतुभूतं जाड्यमस्ति। जाड्यमिति हेतुवाचकः शब्दः गुणवाचकोऽप्यस्ति एवञ्च स्त्रीलिङ्गेऽपि नैव वर्तते। तथैव च, मुक्तिक्रियायां पाण्डित्यमस्ति हेतुभूतम्। पाण्डित्यमिति हेतुवाचकः शब्दः स्त्रियामपि नास्ति, अथ च सः गुणवाचकोऽप्यस्ति। अतस्ताभ्यां—जाड्येति पाण्डित्येति एताभ्याम्—तृतीया च पञ्चमी च प्रवर्तेते।

किन्तु लोके 'पर्वतो वह्निमान्, धूमात्।' 'नास्ति घटोऽनुपलब्धेः।' इत्यादीन्युदाहरणान्यपि प्रचलितानि दृश्यन्ते। तेषु सर्वेषु यो हेतुभूतः पदार्थः (धूमः) वर्तते, सः गुणवाचकोऽस्तीति वक्तुं कथं पार्यते। एवञ्च 'अनुपलब्धिः' इति हेतुवाचकः शब्दः स्त्रियां वर्तते, तस्मात्परं पञ्चमी विभक्तिः कथं प्रवर्तेतेत्याशङ्क्यते। (पर्वतो वह्निमान् धूमादिति) एतादृशानामुदाहरणानां संगतिः साधुत्वं वा कथंकारं भविष्यतीति काशिकाकारेण नैव चिन्तितम्। किन्तु न्यासकारेण लिखितं यत्—गुणशब्देन चात्र सम्बन्धिमात्रं परार्थरूपापन्नमुच्यते, तेन अग्निरत्र धूमादित्याद्यपि सिद्धं भवति। ननु चास्त्रियामित्युच्यते, तेन नास्तीह घटोऽनुपलब्धेरित्यादि न सिध्यति? नैतदस्ति, विभाषा गुणे इति योगविभागः कर्तव्यः। तेन यत्नेष्यते तत्र योगविभागादिष्टसिद्धिरिति स्त्रियामपि भवत्येव (१८२); इत्थं न्यासकारेण गुणस्य लक्षणं[५] परिवर्त्य धूमाद् इत्यत्र पञ्चम्याः साधुत्वबोधनं कृतम्। तथा च विभाषा गुणे इति योगं विभज्य अनुपलब्धेः इति (स्त्रियामपि) पञ्चम्याः साधुत्वञ्च प्रतिपादितम्।

भट्टोजिदीक्षितेन गुणस्य लक्षणं न प्रदर्शितम्, न वा परिवर्तितम्। किन्तु विभाषा (२. ३. २५ A) इति, गुणेऽस्त्रियाम् (२. ३. २५ B) इति

---

५. कणादमुनिना गुणस्य लक्षणमित्थं प्रदर्शितम्—द्रव्याश्रयी अगुणवान् संयोगविभागेषु अकारणम् अनपेक्षः इति।। वै० सू० १-१-१६।

योगं विभज्य यः गुणवाचको न भवति, यश्च स्त्रीलिङ्गे वर्तते। तादृशेभ्यः हेतुवाचकशब्देभ्यः परं याः पञ्चमीविभक्तयः प्रवर्तन्ते, तासां सर्वासां साधुत्वम् उद्घोषितम्।

न्यासकार-भट्टोजिदीक्षितप्रभृतिटीकाकाराणां कृते, धूमाद्, अनुपलब्धेः इत्यादिषु प्रयोगेषु पञ्चमीप्रयोगस्य साधुत्वबोधनाय, विभाषा गुणेऽस्त्रियाम् (२. ३. २५) इत्यस्य सूत्रस्य गुणे इति च, अस्त्रियाम् इति च पदद्वयेन प्रदर्शिते द्वे आवश्यकते निवर्तयितुं योगविभागः परमावश्यकः सञ्जातः। एवञ्च अस्य योगविभागस्य साहाय्येनैव (योगविभागादिष्टसिद्धिरिति परिभाषया[6] च) धूमाद्, अनुपलब्धेः इत्यादयः लोकप्रचलिताः प्रयोगाः पाणिनेरपि सम्मताः सन्तीति प्रतिपादितम्॥

अत्र यन्मुख्यं विचारणीयमस्ति तदित्थं प्रतिभाति—२-३-२३ इत्यस्मात्सूत्रात् हेताविति पदं यदा २-३-२५ इत्यत्रानुवर्तते तदा हेतुरिति शब्दस्यार्थः किं पूर्वापरसन्दर्भेषु (विशेषतः २३ एवं २५ उभयत्र) एकरूपो वर्तते, आहोस्विन्नैकरूपः ? प्रश्नोऽयं शब्दान्तरैर्यद्यनूद्येत तर्हि हेतौ २-३-२३ इत्यत्र हेतुरिति शब्दस्य प्रयोगः 'उत्पादको हेतुः' इत्यर्थच्छायां व्यनक्ति। किन्तु तदेव हेताविति पदं यदा 'विभाषा गुणेऽस्त्रियाम्' २-३-२५ इत्यत्रानुवर्तते तदा तस्य हेताविति पदस्य कार्यार्थच्छाया स्वीकरणीया। तर्ह्युच्यते—'विभाषा गुणेऽस्त्रियाम्' २-३-२५ इत्यत्रानुवर्तमानस्य हेतुरिति पदस्य 'ज्ञापकहेतुः' इत्यर्थच्छायाऽनिवार्यरूपेण स्वीकरणीया। अन्यथा 'धूमाद्', 'अनुपलब्धेः' इत्यादयः शब्दाः 'हेतुवाचकाः' सन्ति इति कथं वक्तुं पार्येत ? (अत्र हेतुरिति—शब्दस्यार्थस्तु 'लिङ्गम्', 'ज्ञापकम्' इत्येव कर्तव्य इति प्रतिभाति।[7] इत्थं हेतौ २-३-२३ इत्यत्र 'उत्पादकहेतुः' इत्यर्थच्छायां मनसि निधाय हेतुरिति शब्दः प्रयुक्त आसीत्। किन्तु स एव शब्दः यदा विभाषा गुणेऽस्त्रियाम् २-३-२५ इति सूत्रेऽनुवर्तते

---

६. विभाषा। २-३-२५(A) इति योगविभागसाधितेन सूत्रेण 'पर्वतो वह्निमान् धूमात्', 'नास्ति घटोऽनुपलब्धेः' इत्यत्र पञ्चमी एव प्रवर्तते ; धूमेन, अनुपलब्ध्या इति तृतीया नैव प्रयुज्यते॥

७. केचित्त्वपादानपञ्चमीमेतामिच्छन्ति, तथा च 'नास्तीह घटोऽनुपलब्धितः' इति 'अपादाने चाहीयरुहोः' इति तसिलपि भवति, योगविभागवादिनां त्वाद्यादित्वात्तसिः।—(न्यासपदमञ्जरीसहिता काशिकावृत्तिः पृ० १८२ इत्यत्र) हरदत्तः।

तदा 'ज्ञापकहेतुः' इत्यर्थच्छायां व्यनक्ति इति, एकेनापि टीकाकारेण वृत्तिकारेण वा नैवोक्तम् । अथोपसंह्रियते—




अथ जाड्येन जाड्याद्वा बद्धः इत्येतादृश उदाहरणे तु जाड्यमिति गुणः बन्धनक्रियाया उत्पत्तौ निमित्तकारणं प्रतिभाति, अतः तस्मात् (जाड्येति शब्दात्) तृतीया विभक्तिः विधीयते—जाड्येन बद्धः इति । किन्तु यदि उत्पादकहेतुः (जाड्यम्) गुणवाचकोऽपि स्याद् एवञ्च स्त्रीलिङ्गे नैव वर्तते, तर्हि पञ्चमी अपि विधीयते—जाड्याद् बद्धः इति । अत्र 'जाड्याद्' इति हेतुः ज्ञापकरूपो हेतुः भवितुं नार्हति इति सविशेषमवगन्तव्यं विद्वद्भिः । (एवञ्च जाड्याद् बद्धः, पाण्डित्यान्मुक्तः इति प्रयोगस्तु कादाचित्कः एव स्यादिति प्रतीयते) ।

विषयेऽस्मिन्नेकाऽन्या गवेषणा प्रो० ले० पोल किपार्स्किमहाशयेन या विहिता, साऽप्यत्र प्रस्तूयते । तद्यथा—विभाषा गुणेऽस्त्रियाम्, २-३-२५ इत्यनेन सूत्रेण हेतुवाचकाच्छब्दात्तृतीयापञ्चम्यौ विधीयेते । किन्तु 'विभाषा' इत्यनेन पदेन यो विकल्पो निर्दिष्टस्तत्र तृतीयान्तप्रयोगस्याधिक्यं सूच्यते, एवञ्च पञ्चम्यन्तप्रयोगः कादाचित्को (marginally) दृश्यते । तथापि गच्छता कालेन (पाणिन्युत्तरकाले) (ज्ञापक) हेतुवाचकाच्छब्दात्पञ्चमी-प्रयोगस्याधिक्यं दरीदृश्यते[८] । (एवञ्च तृतीयान्तप्रयोगस्य प्रायोऽदर्शनं सञ्जातम्) ।

---

८. २-३-२५ इत्यत्र हेतुशब्देन ज्ञापकहेतोर्ग्रहणं कर्तव्यमिति किपार्स्किमहोदयेन नैव कथितम् ॥

९. Paul Kiparsky : 2. 3. 25 *Vibhaṣa guṇe' striyam* *[24 : pañcami] [23 : hetau]*

A cause (*hetu*) which is a property (*guṇa*), i. e., expressed by an abstract noun, can marginally have the ablative endings, except in the feminine, e.g., *vīryat* (or preferably *viryeṇa*) *muktaḥ* 'released by heroism'.

This rule is of great interest because it promises to give termini ante and post quem for dating Pāṇini. For the earlier and later stages of Sanskrit diverge completely here, In the older language, the ablative of cause never appears in abstract nouns. According to Renou citing Oldenberg, the ablative of cause, at least in abstract nouns, does not occur before the *Bṛhadāraṇyaka Upaniṣad.*

In later Sanskrit, the ablative of cause is of course extremely common. Whitney notes that the ablative is more frequent than the instrumental in this case. The ablative becomes very much a mark of commentatorial style, and it dominates already Kātyāyana's *Varttikas* (e.g , *na vā bahiraṅgalakṣaṇatvāt*) ... ...

The present rule reflects a period *after* cause in abstract nouns began to be expressable by means of the ablative, but *before* this became favoured over the instrumental. → PANINI AS A VARIATIONIST, pp. 95-96,

## सन्दर्भग्रन्थाः

१. काशिकावृत्तिः (न्यास-पदमञ्जरीसहिता), द्वितीयो भागः, सम्पादकौ —स्वामी द्वारिकादास शास्त्री एवं पं० कालिकाप्रसादशुक्लः, प्राच्यभारतीप्रकाशनम्, वाराणसी, १९६५।

२. वाक्यपदीयम् (काण्ड—३, भाग—१), Ed. K. A. Subramania Iyer, Deccan College, Poona, 1963.

३. वैयाकरणसिद्धान्तकौमुदी (द्वितीयांशः), पण्डित श्रीसभापति-शर्मोपाध्यायविरचितया "लक्ष्मी" व्याख्ययोपेता। सं० श्रीबालकृष्ण पञ्चोलिनः। मोतीलाल बनारसीदास, दिल्ली, १९६६.

४. सांख्यवृत्तिः ($V_2$) Ed. by E. A. Solomon, Gujarat University, Ahmedabad, 1973.

५. सांख्यसप्ततिवृत्तिः ($V_1$) Ed. by E. A. Solomon, Gujarat University, Ahmedabad, 1973.

६. *Pāṇini as a Variationist*—by Prof. Paul Kiparsky, Ed. by Dr. S. D. Joshi, CASS, University of Poona, Pune, 1979.

# यन्त्रयानदृष्ट्या पाणिनीयव्याकरणसमीक्षा

डॉ० रामनारायणदासः,

रीडर्, व्याकरण-विभागः गुरुवायूर् केन्द्रीय संस्कृत विद्यापीठम्,
पुरनाट्टुकरा, त्रिचूर, (केरलम्)

पाणिनीयाऽष्टाध्याय्याः सूत्रानुसारेण यद्वा प्रयोगानुसारेण व्याख्यानभूताः ये महाभाष्यकाशिकावैयाकरणसिद्धान्तकौमुदीप्रभृतयो ग्रन्थाः सन्ति ते सर्वे पाणिनीयसम्प्रदायान्तर्गताः अथ च पाणिनीयव्याकरणनाम्ना प्रोच्यन्ते। पाणिनीयव्याकरणस्य मूलं पाणिनीयाष्टाध्यायी। पाणिनीयं व्याकरणं न केवलं शब्दसाधुत्वसम्पादनपरम्, अपि तु सर्वासां विद्यानां निधानभूतम्। अत एव क्वचिदुक्तम्—

"समाजशास्त्रावगतिमवेदितस्तथेतिहासादि नयादि बुध्यते।
न केवलेयं पदसिद्धिसंहिता द्विजत्वसम्पादनसञ्चिकाद्भुता॥"

महान् दार्शनिको वैयाकरणश्च श्रीभर्तृहरिरपि एतदेव पक्षं वाक्यपदीयस्य ब्रह्मकाण्डे दृढीकरोति। तद्यथा—

"यथार्थजातयः सर्वाः शब्दाकृतिनिबन्धनाः।
तथैव लोके विद्यानामेषा विद्या परायणम्॥" इति।

निखिलेऽपि विश्वे कला-यन्त्र-स्थापत्य-दर्शन-समाजशास्त्रेतिहासादिदृष्ट्या पाणिनीयव्याकरणस्य गहनमध्ययनं सम्पादयितुं शक्यते। अनया दिशाऽनुसन्धाने सति व्याकरणाऽध्ययनस्य न केवलं प्रक्रियापरिष्कारदर्शनाभिज्ञेषु विद्वत्सु अपि तु सामान्यतया सर्वजनोपयोगिता महत्ता च सम्पद्यते। पाणिनीयव्याकरणस्यानया रीत्याऽनुसन्धाने सति नूतनशिक्षापद्धतौ अथ च व्यापारदृष्ट्या पाणिनीयव्याकरणे कानि लोकोपयोगीनि तथ्यानि सन्तीति सर्वप्रकारः जनता वैज्ञानिकाश्च जानीयुः।

## पाणिनीयं व्याकरणं, यंत्रादीनां विज्ञानञ्च—

बहुमनःप्रणिधानेन गम्भीरानुसन्धानं विधाय व्याकरणविषयेऽनुसन्धानस्यैका काचिन्नूतना एव दिशा विदुषां दृष्टिसरणिमानीता।

उदाहरणार्थं कानिचिदनुसन्धानविषयीभूतानि तथ्यानि समुपस्थाप्यन्ते। तद्यथा—

## वाग्दृषदप्रियः—

पाणिनीयव्याकरणस्य पातञ्जले महाभाष्ये एतादृशी दृषदश्चर्चा समुपलभ्यते यत्सहायेन दूरध्वनिश्रुतिरथ च दूरध्वनिर्दूरं प्रेषयितुं शक्यते। एतादृशां दृषदां चर्चा अन्यत्रापि ग्रन्थेषु समुपलभ्यते। "तद्धितार्थोत्तरपद-समाहारे च" ( अष्टा०, २. १. ५० ) इति पाणिनीयसूत्रस्य महाभाष्ये "द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्" इति वार्तिकं समुद्धृत्य "वाग्दृषदप्रियः" इति समस्तं शब्दमुदाहरणरूपेण भगवान् भाष्यकारः समुपस्थापितवान्। "अल्पाच्तरम्" ( २. २. ३४ ) इत्यास्यापि भाष्ये "वाग्दृषदौ" इत्युदाहरणं व्यदधात्।

"वाग्दृषदप्रियः" अत्र समाहारार्थे द्वन्द्वगर्भितबहुव्रीहिसमासो वर्तते। वाक् च दृषद् च वाग्दृषदौ। वाग्दृषदौ प्रिये यस्य सः वाग्दृषदप्रिय इत्यत्र समासे कृते "द्वन्द्वाच्चुदसहन्तात् समाहारे" इति दृषद्शब्दाद् अच् प्रत्ययेऽनुबन्धलोपे सति वाग्दृषदप्रियशब्दो व्युत्पाद्यते। वाग्दृषदोः समाहारद्वन्द्वसमासे किं स्वारस्यमथ च रहस्यं वर्तते। वाग्दृषदोः परस्परं कः सम्बन्धः? दृषदः पाषाणाः बहुविधाः भवन्ति। आग्नेयोऽपि पाषाणो भवति। स च यथाविधिप्रयोगेणाग्निं समुत्पाद्य स्वप्रकाशेन तमोऽपसार्य वितिमिरा दिशो विदधाति। एतादृशस्य पाषाणस्योल्लेखः भोजराजकृत-शृङ्गारप्रकाशस्य द्वितीयप्रकाशे अपादाननिरूपणावसरे कृतः—अग्निः उत्पद्यते अस्मादिति आग्नेयः ग्रावा इति।

वाग्दृषदप्रियः यद्वा "वाग्दृषदौ" इत्यत्र कस्याः दृषदो ग्रहणं वर्तते? "सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्" इति न्यायेनात्र वाक्-साहचर्यात् ध्वनिग्राहिकायाः यद्वा ध्वनिव्यञ्जिकायाः यद्वा ध्वनिप्रेषिकायाः एव दृषदो ग्रहणं स्वीक्रियते। यथा "रामलक्ष्मणौ" इत्यत्र लक्ष्मणसाहचर्येण दशरथापत्यस्यैव रामस्य ग्रहणं न तु बलरामपरशुरामयोः। "वाग्दृषदप्रियः" इत्यत्रापि वाक्साहचर्येण ध्वनिग्रहणप्रेषणसमर्थायाः एव दृषदो ग्रहणम्, नान्यदृषदः।

## ऐतिहासिकमध्ययनम्—

ध्वनिग्रहणप्रेषणपाषाणो वाग्दृषद्नाम्ना व्यवह्रियते स्मेति पूर्वोद्धरणे-नावगम्यते। यन्त्रमयी सा वाग्दृषद् यस्य पार्श्वे आसीत्, स उच्यते

स्म वाग्दृषदप्रिय इति। एतादृशो दृषदो भगवतः पतञ्जलिसमये आसन्। एतादृशाः पाषाणाः पतञ्जलिसमये आसन्। तदव्यवहितपूर्वकाले तदव्यवहितोत्तरकाले वा पाषाणद्वारा दूरध्वनिश्रवणव्यवस्था आसीत्। नूतनाविष्कारैः नूतनध्वनिग्रहणयन्त्राणां प्रचारप्रसारेणाथवा कालप्रभावेणैतादृशां पाषाणानां प्रयोगो लुप्तः। व्यवहारे प्रयोगस्य लोपात् पाषाणाः अपि अज्ञाताः प्रच्छन्नाश्च जाताः।

श्रीरघुनन्दनशर्मकृत - वैदिकसम्पत्तिनामके ग्रन्थे ध्वनिग्रहणप्रेषणक्रियासमर्थस्य पाषाणस्य स्पष्टरूपेण चर्चा भवति। अस्मिन् ग्रन्थे लेखकः अमृतबाजारपत्रिकायाः उद्धरणं प्रस्तौति—"दक्षिणहैदराबादे पत्थर्घाटीति नामके ग्रामे मुहम्मदकासिमनामकः कश्चिद् विद्वान् निवसति स्म। तस्य गृहे पुस्तकालयोऽप्यासीत्। तस्मिन् पुस्तकालये यन्त्रविषये एकः कश्चित्संस्कृतभाषायां पाण्डुलिपिग्रन्थः आसीत्। अस्मिन् ग्रन्थे दूरध्वनिश्रावकयन्त्रस्य चर्चा अपि विद्यते। एतच्च यन्त्रं पाषाणनिर्मितमासीत्। दूरध्वनिग्रहणप्रेषणसक्षमपाषाणद्वयं संयुज्य तन्माध्यमेन दूरदेशात्समागतस्य ध्वनेः श्रवणस्य व्यवस्था आसीत्।

महाभाष्यकारेण भगवता पतञ्जलिना समुद्धृतेन "वाग्दृषदप्रियः, वाग्दृषदी" इत्यादिशब्देन तद्व्याख्यया तथा पूर्वोद्धृतेन ऐतिहासिकतथ्येन प्राचीनभारते ध्वनिग्रहणप्रेषणसक्षमपाषाणैः इतिवृत्तस्य यद्वा भविष्यद्वृत्तस्य श्रवणार्थं व्यवस्था आसीत्। सा च व्यवस्था पतञ्जलेः अव्यवहितपूर्ववर्तिनि यद्वा तदव्यवहितोत्तरसमये अथ तत्समये आसीत्। तादृशं यन्त्रं यस्य पार्श्वे आसीत् स उच्यते स्म वाग्दृषदप्रिय इति।

तदित्थमनया रीत्या पाणिनीयव्याकरणस्याध्ययनेन बहूनां यन्त्राणामुपलब्धिः सम्भवति। भारतीयं संस्कृतवाङ्मयं च यान्त्रिके वैज्ञानिके च युगे जगद्धिताय किमपि ज्ञानं दातुं प्रभवति। किं बहुना पाणिनीयव्याकरणे यान्त्रिकभाषाणां संकेतोऽपि उपलभ्यते।

## प्राक्तनं सेविकायन्त्रम्, प्रहरियन्त्रम् अथ च नूतनकम्प्यूटर्यन्त्रं तत्र च पाणिनीयं व्याकरणम्—

समराङ्गणसूत्रधारनामके ग्रन्थे सेविकायन्त्रस्य अथ च प्रहरीयन्त्रस्योल्लेखो दृष्टिपथं समायाति। गृहे भृत्यानामथ च प्रहरिणामभावे सेविकायन्त्रेण

प्रहरि-यंत्रेण च प्राचीनभारते कार्यं प्रचलति स्म । इमानि यन्त्राणि सकृत्संचलितानि स्वप्रेरितानि आसन् । संकेतात्मकचिह्नान्येव एतेषां यन्त्राणां भाषा आसीत् । एतादृशान्येव संकेतात्मकचिह्नानि अद्यतनीने कम्प्यूटर्यन्त्रेऽपि भवन्ति । तेषां संकेतार्थानां विपुलार्थाश्च भवन्ति ।

आधुनिकाः वैज्ञानिकाः प्रयतमानाः सन्ति यत् कम्प्यूटर्यन्त्रे लघूपायेन विपुलकार्याणां सम्पादनं कथं भवेत् । अतीव लघुसंकेतेन च विपुलार्थज्ञानं कथं भवेदिति । एनां समस्यां समाधातुं सर्वे वैज्ञानिकाः विश्वभाषाव्याकरणाध्ययनं कृतवन्तः । ततस्ते पाणिनीयव्याकरणस्यातिशयामुपयोगितामस्मिन् विषये स्वीकृतवन्तः । भगवतः पाणिनेरष्टाध्याय्यां घिसंज्ञाटिसंज्ञेत्यादिना एकेनैव संकेतेन बहूनां घिसंज्ञादीनां शब्दानां तद्वाच्यार्थानां च ज्ञानं भवति । तद्यथा—अच्च घेः (७. ३. ११९), घेर्ङिति (७. ३. १११) इत्यादिसूत्रेषु घिसंकेतेन संस्कृते समस्तह्रस्वेकारोकाराणाम् अनदीसंज्ञकानां समस्तशब्दानामेकेनैव संकेतेन घेर्ङिति इत्येकस्मिन्नेव सूत्रे संग्रहो भवति । एतदतिरिक्ताः अपि भूयस्यः प्रक्रियाः पाणिनीयव्याकरणे समुपलभ्यन्ते याः कम्प्यूटर्यन्त्राय अतिशयेनोपयोगिन्यः सन्ति । एतादृशानामेव संकेतानां (कम्प्यूटराङ्कितसंकेतानामिव) समुपयोगः प्राचीनभारतीय - सेविकायन्त्रे प्रहरियन्त्रे सम्बभूव ।

## धनुष्कपालम्—

धनुष्कपालम्—वैयाकरणसिद्धान्तकौमुद्यां पञ्चसन्धिप्रकरणे पञ्चसन्धिनिरूपणावसरे हल्सन्धिप्रकरणे कस्कादिषु च (८. ३. ४८) इत्येतत्सूत्रव्याख्यानावसरे उदाहरणमुखेनायं प्रयोगः समुपस्थापितः । शिष्यधीवृत्तिनामके ज्योतिर्ग्रन्थे समयज्ञापकधनुर्यन्त्रस्योल्लेखः कृतः । न केवलं धनुर्यन्त्रस्यापि तु दिनमानसूचकानामन्येषामपि गोलादियन्त्राणां चर्चा कृता । धनुष्कपालमित्यत्र धनुःशब्दो न केवलं बाणप्रक्षेपकस्य धनुषो वाचकः अपि तु समयसूचकयन्त्रात्मकस्यापि धनुषो ग्रहणम् । अत्रार्थतन्त्रम् शब्दतन्त्रम् स्वीकर्तव्यम् । न तत्र काचिद्विप्रतिपत्तिः । यथा अद्यतने युगे अयस्कपालद्वयादिसंयोगेन घटीयन्त्रं निर्मीयते तथैव पुराकालेऽपि कपालादिसंयोगेन धनुर्नामकयन्त्रस्य निर्माणमासीत् । अत एव धनुष्कपालम्=धनुषः कपालम् धनुष्कपालमिति संगच्छते । यथा कपालद्वयसंयोगेन घटनिर्माणं तथैव पुराकालेऽपि कपालादिसंयोगेन धनुषो निर्माणं धनुष्कपालमित्यस्य धनुर्नामकघटीयन्त्रस्य कपालम् । यद्वा—कपालनामकस्यापि घटीयन्त्रस्यापि चर्चा शिष्यधीवृत्तिनामके ग्रन्थे

उपलभ्यते। अत्र पक्षे धनुष्कपालमित्यत्र धनुशब्दोऽस्त्रपरः। कपालशब्दश्च तन्नामकयन्त्रपरः। धनुषि कपालम्=धनुष्कपालम्। पुराकाले धनुषि रात्रिदिवामानसूचकसमयसूचककपालनामकयन्त्रमपि निर्मीयते स्म। येन युद्धकालेऽपि संग्रामस्थले समयज्ञानं क्रियते स्म। धनुष्कपालमित्यत्र उभयोरपि यन्त्रपरत्वं स्वीक्रियते चेत् अत्र धनुश्च कपालश्चेत्यत्र-समाहारद्वन्द्वसमासः स्वीकर्तव्यः। यन्त्रदृष्टचा धनुष्कपालमित्यस्यैवमेव व्याख्यानं कर्तुं शक्यते।

## शकटियन्त्रम्—

शिष्यधीवृत्तिनामके ग्रन्थे शकटियन्त्रस्याप्युल्लेखो वर्तते। अनेनापि यन्त्रेण समयस्य ज्ञानं क्रियते स्म। अस्य यन्त्रस्य चर्चा अष्टाध्याय्यामपि पाणिनिना कृता। तद्यथा—लङः शाकटायनस्यैव=शकटिना प्रोक्तः शाकटः समयः, समय एवायनं यस्यासाविति शाकटायनः, तस्य शाकटायनस्यैवेति। अस्य शाकटायनस्य ब्रह्मर्षेः समय एव गृहमासीत्। क्षणलेशोऽपि शास्त्रविचिन्तनविहीनः न भवति स्म।

वस्तुतस्तु शाकटायनस्येत्यत्र "शकटि" इत्येकदेशे अर्थतत्त्वं यद्वा शब्दतत्त्वं स्वीकर्तव्यम्। एकः शकटिशब्दः यानपरः अपरश्च यन्त्रपरः उभयथापि व्याख्यानमर्हति। उभयोरप्यर्थयोरत्र शकटिशब्दे समावेशः। अयं शाकटायनाख्यो महर्षिः प्रतिक्षणं शास्त्रविचिन्तनेऽतिशयेन मग्नः अभवत् येन स्वपार्श्वतः गच्छन्तीं शकटिमपि न ज्ञातवान्। अत एव भगवान् भाष्यकारः शाकटायनशब्दस्य व्याख्यां कुर्वन्नाह— "परोक्षे लिट्" (३. २. ११५) इत्यस्मिन् सूत्रे। तेन शाकटायनचरितमपि ज्ञायते। तद्यथा— "अथवा भवति वै जाग्रदपि वर्तमानकालं नोपलभे। तद्यथा वैयाकरणानां शाकटायनो रथमार्गे आसीनः शकटिसार्थं यन्तं नोपलेभे" इति।

शाकटायनशब्दस्य बहुविधं व्याख्यानं चक्रुरन्येऽपि विद्वांसः। मयापि यन्त्रदृशाऽस्य शाकटशब्दस्य व्याख्यानं कृतम्। यान्त्रिकदृशाऽस्य शब्दस्य एतादृशमेव व्याख्यानं सम्भवति। शकटिशब्दः लघुशब्देन्दुशेखरेऽपि दृष्टः। तद्यथा=अजन्तस्त्रीलिङ्गप्रकरणे "ङिति ह्रस्वश्च" (१. ४. ६) इति सूत्रे "ह्रस्वौ चेयङुवङ्स्थानौ च प्रवृत्तौ स्त्रीवचकावेव नदीसंज्ञौ भवतो न तु पुंवाचकाविति वक्तव्यम्" इति वार्तिकव्याख्यावसरे— "अतिशकट्यै

ब्राह्मण्यै। क्व मा भूत्, अतिशकटये ब्राह्मणाय।" इति। अत्र यन्त्रदृष्ट्या शकटिशब्दः समयवादकयन्त्रपरः। तथा च या शकटिम् एतन्नामकं समयवादकं यन्त्रविशेषमतिक्रान्ता या ब्राह्मणी, अतिक्रान्तो यः ब्राह्मणो वा सा उच्यते अतिशकटिः ब्राह्मणी, अतिशकटिर्वा ब्राह्मणः। प्राक्तनसमयेऽस्मिन् भारते एतादृशा अपि ब्राह्मणाः अभूवन् ये शकटियन्त्रं विनापि अधुना कतिवादनं जातम्, दिनस्य कियानंशः समाप्तः इति जानन्ति स्म।

## यानविषये मूलविभुजरथः—

पाणिनीयाष्टाध्याय्यां मूलविभुजरथस्योल्लेखो दृश्यते "तुन्दशोकयोः परिमृजापनुदोः" (अष्टा०, ३. २. ५) इत्यस्मिन् सूत्रे "कप्रकरणे मूलविभुजादिभ्यः उपसंख्यानम्" इति वार्तिके उदाहरणरूपेण मूलविभुजरथशब्दस्य व्युत्पत्तिः - मूलानि विभुजतीति मूलविभुजो रथ इत्येवं कृता। मूलकर्मोपपदपूर्वकव्युपसर्गपूर्वकभुज् धातोः कप्रत्यये कृते मूलविभुज - शब्दो व्युत्पद्यते। तुदादिगणपठितोऽयं भुज् धातुः कौटिल्यार्थे च वर्तते। वृक्षमूलोत्पाटनं विदधत्, प्रस्तरखण्डांश्च समुत्पाटयन् मार्गनिर्माणं च सम्पादयन् यो रथः संचलति स उच्यते मूलविभुजरथ इति। प्राक्तनयुगे राजमार्गस्य व्यवस्था न्यूना आसीत्। तस्मिन् समये एतादृशरथानां निर्माणं बभूव ये मार्गनिर्माणं कुर्वन्तः संचलन्ति स्म। एतादृशरथानां वोढारोऽश्वा अपि पर्वतादिगहनस्थानं गन्तुं प्रभवा आसन्। मूलविभुजरथस्याग्रभागे वृक्षमूलानि यद्वा पाषाणान् मार्गादिभ्यः अपसारयितुं यन्त्रमयानि अस्त्राणि शस्त्राणि च संयुज्यन्ते स्म। पुराणेषु इतिहासग्रन्थेषु च पर्वताधिरोहणसमर्थानां रथानामश्वानां च उल्लेखः पुष्कलरूपेण समुपलभ्यते।

मूलविभुजस्यैतादृशव्याख्याने काश्यां सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्थप्राचीनव्याकरणविभागाध्यक्षचराः अपरपाणिनीत्युपनाम्ना प्रसिद्धाः श्रीरामप्रसादत्रिपाठिनोऽपि सहमताः।

## रथाक्षनिर्माणम्, रथस्य जलस्थलगतिविषये नूतनवैज्ञानिकस्य अथ च पाणिनीयव्याकरणस्य दृष्टिः—

रथाक्षेषु वायुशक्तिसंयोजनं क्रियमाणमासीदिति वैदिकमन्त्रैर्ज्ञायते। रथाक्षेषु वायुशक्तिसंयोगेन रथस्य गतिः वायुरिव शीघ्रतमा जायते स्म। ऋग्वेदस्य पंचममण्डले रथाक्षेषु वायुसंयोजनविधेरुल्लेखो वर्तते।

रथवाहकेष्वश्वेष्वपि सीमातिशया शक्तिः अथ च वेगः आसीत्। एते रथ्या अश्वाः स्ववेगशक्त्या गम्भीरावर्तनदीजलेष्वपि स्थलवत् रथं वहन्ति स्म, तेषां शफाश्च जलमग्ना नाभवन्। वाल्मीकीयरामायणेऽनेकत्र एतादृशस्य रथस्य अश्वानाञ्च उल्लेखः कृतो महर्षिणा वाल्मीकिना। श्रीरामचरितमानसे ऽस्य स्पष्टरूपेणोल्लेखो दृष्टिसरणिमवतरति। तद्यथा—

"जे जल चलहिं थलहिं की नाईं।
बूड न टाप वेग अधिकाई॥" इति।

नेयमतिशयोक्तिः। अत्र वैज्ञानिकं तथ्यं वर्तते। महावैज्ञानिकस्य बर्नोलिमहोदयस्यात्र विषये यः सिद्धान्तो वर्तते, तत्सत्यं प्रतिभाति। अस्य मतानुसारेण यस्मिन् वेगाधिक्यं तस्मिन् भारो न्यूनो भवति, वायुभारेण स्तब्धो न भवति। यत्र वायुभारस्याधिक्यं भवति स ऊर्ध्वमुत्थातुमसमर्थः। स्ववेगशक्त्या रथ ऊर्ध्वमुत्तिष्ठति। वायुयानस्योड्डयनसिद्धान्तकर्ता श्री बर्नोलिरपि प्रमेयसिद्धान्तमनुसरति। प्राक्तनेष्वश्वेषु एतादृशी क्षमता आसीत्। अद्यापि अश्वाः शक्तेः प्रतीकभूताः स्वीक्रियन्ते। अस्मिन् यन्त्रे दशाश्वशक्तिः वर्तते इत्येवं वैज्ञानिकाः यन्त्राणां शक्तिमापनमश्वशक्त्या कुर्वन्ति।

एतादृशाः एवाश्वाः पाणिनिव्याकरणे सर्वधुरीणनाम्ना प्रोक्ताः। तद्यथा—तद्वहति रथयुगप्रासङ्गम् (पा० ४.४.७६) रथं वहतीति रथ्योऽश्वः। खः सर्वधुरात् (४ ४. ७८) सर्वधुरं वहतीति सर्वधुरीणः। एकधुराल्लुक् च (४. ४. ७९) एकधुरं वहतीति एकधुरीणः, एकधुरः।

पुराकाले आचार्याः स्वाधीतप्रचाराद्यर्थं योजनशतं गच्छन्ति स्म। यश्चाचार्यः योजनशतं गच्छति स्म स उच्यते यौजनशतिक आचार्यः, यश्च क्रोशशतं गच्छति स क्रौशशतिक आचार्यो भवति। अत्र विषये योजनं गच्छति (५. १. ७४) इति पाणिनीयसूत्रम् क्रोशशतयोजनशतयोरुपसंख्यानम् इति वार्तिकं चात्र प्रमाणभूतम्। आचार्याणामेतद् गमनमश्वैरेव सम्भाव्यते, नान्यथा। प्राक्तनसमये आचार्या सत्यवसरे योजनशतं गच्छन्ति स्म अथ योजनशताद्दूरं स्थितमाचार्यमाह्वातुं जना गच्छन्ति स्म। अत्र विषये ततोऽभिगमनमर्हतीति च वक्तव्यम् इति वार्तिकं प्रमाणभूतम्। एतावद्दूरे यात्रा अश्वैः यद्वा यौगिकशक्त्या सम्भाव्यते। अश्वाः शक्तिनिर्भिन्नहृदयाः अपि भवन्ति। अत एव भगवता पतञ्जलिना ध्रुवमपायेऽपादानम् इति

सूत्रस्य भाष्ये अश्वनामाशुगामित्वमेव अश्वत्वमिति स्वकण्ठरवेण व्याहृतम्। तद्यथा—ध्रौव्यम्। इह तावदश्वाधस्तात् पततीति यत्तदश्वेऽश्वत्वमाशुगामित्वं तद्ध्रुवम्, तच्च विवक्षितम्। ध्रुवमपायेऽपादानम् १. ४. २४.

अनया दिशाऽनुसन्धाने सति पाणिनीयव्याकरणे बहुविधाः रथाः दृष्टिपथं समायान्ति। मन्ये तावद् एतादृशानां निर्माणं शिक्षणं च संस्कृत-भाषायां स्यात् तर्हि संस्कृतस्य निःसन्देहं प्रचारः प्रसारश्च स्याताम्।

सम्पूर्णानन्द-संस्कृतविश्वविद्यालये वाराणस्यां १९८७ ईस्वीयस्यागस्त-मासपर्यन्तं अध्यापन-गवेषणाकार्यं च कुर्वन्नहमस्यां दिशि चिरकालं प्रयासं कृतवान्। कांश्चिद् विचारांश्च लिपिबद्धान् कृतवान्। अस्यां दिशि सर्वे संस्कृतविद्वांसोऽग्रेसरा भवेयुरित्यहमाशासे।



# करणत्वविमर्शः

डॉ० श्री आदित्यनाथ भट्टाचार्यः
प्राध्यापकः संस्कृतविभागे, वर्धमानविश्वविद्यालयस्य

करणस्वरूपनिरूपणे पाणिनिप्रमुखवैयाकरणानां सुमहानेव प्रयासः परिलक्ष्यते। शाब्दिकानां मतञ्च प्रकटयितुं तत्र नैयायिकानामपि मतम् आलोचनीयम्। न्यायकुञ्चिकया वैयाकरणानां विशेषतः पाणिनीयानां वक्तव्यरहस्यतालकमुद्घाटितं स्यात्। करणत्वविषये नवीनप्राचीननैयायिकयोर्मध्ये मिथो विरोधः सन्दृश्यते। तत्र नव्यप्राचीनन्यायमतयोः किन्तावदुपादेयम्, किञ्च परिहेयं सर्वथा? वैयाकरणानाञ्च तत्र कोऽभिप्रायः, उभयोर्नैयायिकवैयाकरणयोरैकमत्यमस्ति न वा, न्यायव्याकरणैकदेशिनाञ्च कोऽभिसन्धिः, वस्तुस्थितिमादाय किञ्च तावदत्रोपपत्तिग्राह्यमिति सर्वमेतन्निश्चेतव्यमत्र करणत्व-निरीक्षायाम्। अत एवास्माभिः शाब्दिकानां तथा नैयायिकानां मतानि सुष्ठु विविच्यैवास्मिन्निबन्धे यथामति करणत्वं परीक्ष्यते। इदञ्चोल्लेख्यं विशेषतो यत् शिष्टव्यवहारानुपादायैव वैयाकरणानां सर्वत्र लक्षणप्रवृत्तिः। अतो लौकिकवैदिकव्यवहार एवास्माकं परमं शरणमिति वृद्धानां साधुव्यवहारानुसारमेवात्र निर्दोषकरणत्वनिर्धारणमस्माकम्।

षट्सु कारकेषु करणमन्यतमम्। क्रियासिद्धौ कर्त्तुः प्रकृष्टोपकारकत्वमेव करणत्वम्। अतो बाणेन हतो वालिरिति वाक्ये हननक्रियायां कर्त्तुः प्रकृष्टोपकारकत्वाद् बाणस्यैव करणत्वम्। तस्य चानभिहितस्य 'कर्त्तृकरणयोस्तृतीये'ति तृतीया सिद्धा। तथा च करणत्वप्रदर्शनावसरे पाणिनिहेमचन्द्रादयः प्राहुः 'साधकतमं करणमि'ति (पा० १, ४, ४२, हेमचन्द्रः २, २, २४, सरस्वतीकण्ठाभरणम् २, २, ५५, सुपद्मम् २, २, ९)। साधकतमं करणं इति जैनेन्द्रः (१, २, १०८)। एवं करणं साधकतममिति (१, ७०७) प्रयोगरत्नमालायाम्। तथैव चामरार्थकल्पद्रुमे नानार्थवर्गे। क्रियातिसाधनं करणमिति च सारस्वते (५, १६)। तथा 'साधनहेतुविशेषणभेदकं घमि'ति (२८९) मुग्धबोधे।

अत्र केचिदेवं मन्यन्ते—करणमित्यन्वर्थसंज्ञा। क्रियते निष्पद्यते अनेनेति करणम्। 'करणाधिकरणयोश्चे'ति (पा० ३, ३, ११७) करणवाच्य एव कृधातोर्ल्युट्प्रत्ययः। अतः क्रियानिष्पादनसाधनत्वमेव करणत्वमित्यायातमत्र

करणशब्दस्य व्युत्पत्त्यनुसारतः। तेन घटादिकार्य्योत्पत्तिसाधनत्वेन दण्डादेः करणत्वं नासंगतमेव प्रतिभाति । तथाचोक्तं, कातन्त्रे—येन क्रियते तत् करणम् इति (का०, २, ४, २२)। उक्तञ्च—करणे इति (चन्द्रः, २. १. ६३)। तथा च समुल्लसति कारकोल्लासेऽपि—

क्रियते साध्यते कर्त्रा यदाश्रित्य वदन्ति तत्

तत्त्वन्ये नानुमन्यन्ते । क्रियासाधनस्य करणत्वे कारणमात्रस्य करणताऽऽपत्तिर्दुर्निवारा। दृश्यते हि शास्त्रेषु कारणमात्रस्य क्रियासाधनत्वम्। एतेन घटकार्य्यनिष्पादकत्वेन सलिलादेरपि कारणत्वमापद्येत । एवञ्च सति कर्त्तृकरणयोस्तृतीये'त्यनेनैव सर्वत्रेष्टसिद्धौ हेताविति (पा० २, ३, १३) हेत्वर्थे पुनस्तृतीयाप्रतिज्ञाऽप्यकिञ्चित्करा प्रतिभाति। अतः करणत्वं न हि क्रियासाधनत्वमात्रम्, अपितु क्रियायाः प्रकृष्टसाधनत्वम्, असाधारणकारणत्वं च। कारणस्य चासाधारणत्वं प्रकृष्टत्वं वा अनुपदमेव विचार्य्य निर्धार्य्यते । तादृशासाधारणकारणत्वं घटोत्पत्तौ दण्डस्यैवास्ति, सलिलादेस्तु नास्ति । सलिलादेस्तु घटोत्पादकत्वेन कारणत्वमेव स्वीक्रियते। तेन सलिलेन घटः क्रियते इत्यादौ हेतावेव तृतीया, न तु करण इति बोध्यम्। अतः करणमिति नान्वर्थसंज्ञा। अन्वर्थसंज्ञाया हि लक्षणं नैव निरमायि पाणिनिना, अन्यथा सिद्धसाधनत्वप्रसङ्गात्। अत एवाचार्य्येण करणशब्दस्य क्रियासाधनत्वरूपमन्वर्थमनादाय साधकतमं करणमिति संज्ञासूत्रेण प्रकृष्टसाधनत्व-रूपोऽर्थः अभ्युपगतः।

अत्रेदमाशङ्क्यते—क्रियायाः प्रकृष्टसाधनत्वस्य करणत्वे पुनरङ्गीकृते कर्त्तुरेव करणत्वमापद्येत । तथाहि व्यापाराश्रयः कर्त्तैव क्रियासिद्धौ मुख्योपकारकः। अन्ये कर्म्मकरणादयस्तु कर्त्तृतन्त्रतयैव क्रियासम्पादका इति न मुख्योपकारकाः । स्वतन्त्रः कर्त्ते'ति (पा० १, ४, ५४) क्रियानिष्पत्तौ कर्त्तुरेव स्वातन्त्र्यात् साधकतमत्वं कर्त्तुरेव न्याय्यम्। तदुक्तम् शाब्दिकराजहेलाराजेन—

कर्त्तुर्विनियोगोत्तरकाले साधनानां प्रवृत्तेस्तदपेक्षया कर्त्तुरेव साधकतमत्वं न्याय्यम् इति।

एवञ्च सति साधकतमं करणमि'ति करणत्वविधायकं सूत्रमप्यसंगतं स्यात्। कथमन्यथा कर्त्तुरपि करणत्वापत्तौ तत्र कर्त्तृकरणसाङ्कर्यं निवार्येत ?

तत्रैवं समाधानम्—कर्त्तुः साधकतमं यत् तदेव करणमित्यङ्गीकारे नैवोक्तदोषावकाशः। क्रियासिद्धौ कर्त्ता क्रियायाः प्रकृष्टसाधनत्वेन यमाश्रयति तस्यैव करणत्वमित्येव विवक्षितोऽर्थः 'साधकतमं करणमि'ति सूत्रस्य। तेन च कर्त्तुः करणत्वापत्तिर्न स्यात्।

अत्र केचिदेकदेशिनो वैयाकरणा नैयायिकाश्च फलोपहितत्वेन कारणस्यासाधारणत्वमभिलषन्तः करणत्वं निरूपयन्ति। तथा च यस्य अव्यवहितोत्तरक्षणे कार्य्योत्पत्तिर्भवति तद्धि करणमिति त एवाभिप्रयन्ति। तथा च कथ्यते न्यायतन्त्रे—फलायोगव्यवच्छिन्नं कारणं करणमिति।

भर्तृहरिणा चोक्तं वाक्यपदीये—

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते तदा तत्र करणत्वं तदा स्मृतम्॥

तथा च— कारकाव्यवधानेन क्रियानिष्पत्तिकारणम्।
यद्वै विवक्षितन्तेषु करणं तत् प्रकीर्त्तितम्।

नारायणदण्डनाथेनापि व्यलेखि सरस्वतीकण्ठाभरणस्य सूत्रवृत्तौ—

क्रियासिद्धौ यत्प्रकृष्टोपकारकत्वेनाव्यवधानेन विवक्षितं तत् कारकं करणसंज्ञकं भवतीति। (२, १, ५५)।

तस्माद् यदुपस्थितावपि कार्यानुत्पादः, यदनुपस्थितावपि च कार्योत्पादस्तन्न करणम्, किन्तु कार्याव्यवहितप्राक्क्षणावच्छेदेन विद्यमानं नियतफलोत्पादकं पुष्कलमसाधारणं वा कारणं करणमिति वक्तव्यहृदयम्। तथा चात्र पुण्येन दृष्टो हरिरिति दृष्टान्तः। पुण्यशब्दस्यादृष्टरूपस्याव्यवहितोत्तरकाले हरिदर्शनसम्भवात् पुण्यस्य हरिदर्शनरूपफलोपहितत्वेन करणत्वम्, करणत्वाच्च तदुत्तरं तृतीयापि संगच्छते। यागादिकर्म्मानन्तरक्षणे तु हरिदर्शनायोगात् यागादेर्यागार्थाभिधायिनः पुण्यस्य वा न करणत्वम्। अतो पापेन पुण्येन वा दृष्टो हरिरित्यत्र तृतीया नैव युक्ता भवति, किन्तु हेतावेवेति बोध्यम्। क्रियातिसाधनत्वरूपयोग्यतामात्रविवक्षायान्तु करणत्वं बालप्रलपितमित्यतो योग्यतासत्त्वेऽपि फलमनिष्पादयतोऽरण्यस्थदण्डस्य फलोपहितत्वाभावात् घटोत्पत्तौ करणत्वशङ्का दूरमपास्ता एव।

अत्रेदन्त्ववधेयं यत्—फलायोगव्यवच्छेदेन नियतफलोत्पादनेन वा कारणस्यासाधारणत्वे स्वीकृते महती विपत्तिर्भवति। तथाहि विनापि दण्डेन

हस्त-लौहलगुडादिभि: घटोत्पादसम्भवात् दण्डो न घटस्य नियतोत्पादक:। अतो दण्डस्यानुपस्थितावपि घटोत्पत्तिं प्रति दण्डस्य न पुष्कलकारणता। किन्तु मृत्तिकाया: सत्त्व एव घटोत्पत्तिदर्शनात्, अन्यथा त्वदर्शनात् अन्वय-व्यतिरेकाभ्यां मृत्तिकाया एव नियतावश्यकतया पुष्कलकारणता। तथा सति मृत्तिकाया एव करणत्वं स्यात्, स्याच्च तदुत्तरं तृतीया 'मृत्तिकया घट: क्रियते' इति। अपिच दण्डभ्रमिजन्यचक्रभ्रमेरेव घटोत्पत्तिरूपफलोपहितत्वात् दण्डस्य न फलोपहितत्वम्। अतो घटोत्पत्तौ दण्डस्य न करणत्वं स्यात्। एवं फलोपहितस्य कारणस्यैव करणत्वे दुर्निवार एव सर्वसिद्धव्यवहारापलाप:। तथाहि चाक्षुषादिप्रत्यक्षेषु चक्षु:संयोगादे: फलोपधायकत्वात् करणत्वं स्यात्। तथा सति तत्र तृतीयाविभक्तियोगेन 'चक्षु:संयोगेन घटं पश्यामि' इत्यादय: प्रयोगा: प्रेक्षावद्व्यवहारविरुद्धा अपि प्रसज्येरन्। तत्तु असंगतमेव। एवं फलानुपहितस्य दण्डस्य करणत्वाभावात् 'दण्डेन घट: क्रियते' इति करणे तृतीयान्तप्रयोगोऽपि नैव दत्तप्रसरो भवेदिति करणस्य फलोपधायकत्वपक्षो न साम्प्रतं कक्षीकर्त्तुम्।

तस्माद् व्यापारवत्त्वेनैव कारणस्यासाधारणत्वमूरीकर्तव्यम्, न तु फलोपहितत्त्वेन। एतेन व्यापारवत् कारणमेव करणं स्यात्, न तु प्रागुक्तं फलोपहितं कारणं करणमिति विदुषां परामर्श:। अस्मिन् पक्षे तु नास्ति कोऽपि दोष:। तथाहि व्यापारवत् कारणं करणमिति वाक्ये व्यापारत्वं नाम तज्जन्यत्वे सति तज्जन्यजनकत्वम्। अत्र तत्पदेन करणस्य परामर्श:। अत: करणजन्यं सत् करणजन्यकार्यस्य यज्जनकं तदेव व्यापार:। तथाहि चाक्षुषादिप्रत्यक्षस्थले चक्षुरादीन्द्रियं करणम्। कार्य्यन्तु प्रत्यक्षज्ञानम्। व्यापारस्तु घटादिविषयेण चक्षुरादे: संयोगादिसम्बन्ध:। स च सम्बन्धश्चक्षु-रादिकरणजन्य: सन् चाक्षुषादिप्रत्यक्षज्ञानजनको भवेत्। चक्षुरादिकं हि घटादिभि: संयुज्यते, तत उत्पद्यते घटादिविषयकचाक्षुषादिज्ञानम्। तदेवं चाक्षुषप्रत्यक्षादौ चक्षु:संयोगादेस्तज्जन्यत्वविशिष्टतज्जन्यजनकत्वेन व्यापार-त्वसिद्धेश्चक्षुरादेर्व्यापारवत्त्वात् चक्षुरादेश्चाक्षुषादिकार्य्यं प्रति करणत्वम्, करणत्वाच्च 'चक्षुषा पश्यामी' त्यादिषु चक्षुरादिभ्यस्तृतीयाप्रसक्ति:।

अथोच्येत—व्यापारवत्कारणस्य करणत्वे 'पुण्येन दृष्टो हरि' रित्येतेषां कथमुपपत्ति: ? अग्निहोत्रादियज्ञेन स्वर्गादिफले जनयितव्ये यदवान्तरव्यापार-भूतमपूर्वं तदेवात्र पुण्यपदाभिधेयम्। अत: स्वयं व्यापारभूतमेवात्र पुण्यम्। न हि पुण्यस्य हरिदर्शनविषये तत्परवर्त्ती कश्चिदपरो व्यापारोऽस्ति।

तस्मान्निर्व्यापारत्वात् पुण्यस्य करणत्वमत्र न स्यात् । तर्हि 'पुण्येनेत्यत्र तृतीया कथं स्यात् ?' तत्रेदं समाधेयम्—पुण्यशब्दस्य यागादिरप्यर्थो विद्यते । यागादेस्तु व्यापारोऽपूर्वः । अपूर्वं हि यागादिजन्यं सत् यागादिजन्यस्वर्गादेः जनकम् । अतोऽपूर्वरूपव्यापारवत्त्वेन यागादिरूपपुण्यस्य करणत्वमुपपद्यते । पुण्यशब्दस्यापूर्वार्थत्वे तस्य निर्व्यापारत्वात् करणत्वासिद्धेः 'पुण्येन दृष्टो हरि' रित्यत्र हेतावेव तृतीया बोध्या ।

ननु कथन्तर्हि गङ्गेशोपाध्यायेनानुमानचिन्तामणौ 'तत्करणमनुमानं तच्च लिङ्गपरामर्शः, न तु परामृश्यमानं लिङ्गमिति वक्ष्यते' इत्युक्तम्, कथं चोक्तमन्नंभट्टेन तर्कसंग्रहे 'तस्माल्लिङ्गपरामर्शोऽनुमानम्', कथं वा भाषितं विद्वद्वरेण वरदराजेन तार्किकरक्षायाम्—'लिङ्गपरामर्शोऽनुमानमि'ति । न हि लिङ्गपरामर्शो व्यापारवान्, स्वयंव्यापारत्वात् । तथाहि अनुमीयतेऽनेनेति व्युत्पत्त्या करणवाच्य एव ल्युट्प्रत्ययोपपत्तेरनुमितिकरणमेवानुमानं तच्चानुमितौ लिङ्गपरामर्श एवेत्यभिहितमाचार्य्यपादैः । व्याप्तिविशिष्टहेतोः पक्षवृत्तित्वाव-गाहिनिश्चयस्य परामर्शस्य व्याप्तिज्ञानजन्यत्वाद् व्याप्तिज्ञानजन्यानुमिति-जनकत्वाच्च व्यापारत्वमक्षतमेव । न च तस्य कश्चिद् व्यापारविशेषो विद्यते । तस्माद् व्यापारवत्त्वाभावाद् अस्य परामर्शस्य व्यापारवत्कारणत्वलक्षणकरणत्वं नोपपद्यते । अतो विवदमानैरकामैरप्यगतिकैः फलोपहितकारणस्यैव करण-त्वमास्थेयमित्येवैका गतिः शरणीकरणीयेति चेत्, तत्रोच्यते श्रूयतां भो विसंवादिन्, त्वदुक्तमेव तत्त्वमिति न वक्तव्यम् । कथमन्यथा मुक्तावलीकृता विश्वनाथेन 'व्यापारस्तु परामर्शः' करणं व्याप्तिधीर्भवेदित्युक्तम् ? न हि फलोपहितस्य करणत्वे व्याप्तिनिश्चयस्य करणत्वमनुमितौ सम्पद्येत् । आचार्ययोश्चास्ति यत्र मिथो महान् विरोधस्तत्र विद्वदनुभवाहितलोकानुभव एव प्रमाणम् । व्यापारवत्कारणस्य करणत्वे चक्षुषा पश्यामीत्याद्यभीष्टोपपत्तिः, फलोपहितस्य करणत्वे तु तत्र चक्षुःसंयोगेन पश्यामीत्याद्यनिष्टापत्तिर्दुर्वारा इत्यधस्तादेव दर्शितम् । तस्माद् व्यापारवत्कारणस्यैव करणत्वं चाक्षुषादि-प्रत्यक्षेषु यद्यभिमतं स्यात्तर्हि प्रत्यक्षोपजीवकमनुमानादिप्रमाणमपि व्यापार-वत्कारणत्वघटितमेव भवेदिति निश्चप्रचमलमास्थातुम् ।

अयमाशयः - व्यापारवत्कारणत्वं करणत्वमित्येव करणलक्षणं समर्थितमत्र प्रायशो नव्यन्यायादिवादिभिः । दृश्यते हि व्युत्पत्तिवादे शब्द-खण्डीयतर्कशास्त्रेऽपि विद्याविभूषण-श्रीमद्गदाधरभट्टाचार्यैरपि करणस्योक्त-लक्षणमेव अनुमोदितमिति । अनुमितिगादाधर्य्यान्तु व्याप्तिविशिष्टपक्ष-

धर्म्मताज्ञानजन्यज्ञानमनुमितिरित्यनुमितिलक्षणे तादृशज्ञानपदेन अनुमानस्यैव विवक्षणात् परामर्शस्यैवानुमानत्वं पर्यवस्यति। एवञ्च परामर्शस्यैवानुमानत्वं चिन्तामणिकारादिविवक्षितमित्यपि सुगम्यते। तथा च सति व्याप्तिनिश्चितेरनुमानत्वं यद्व्यवस्थापितं नव्यैस्तद् व्याहन्यत एवेति तदुपपत्तये अनुमितिकरणमनुमानमिति करणशब्दस्य व्यापारवत्कारणत्वमुपपाद्य परामर्शस्यैव व्यापारत्वं प्रसाध्य तद्वत्त्वेन व्याप्तिनिश्चयस्यैव करणत्वमुपपादितम्। यत्तु परामर्शस्यानुमानत्वमुक्तम् चिन्तामणिकृत्प्रभृतिभिस्तत्तु विवक्षावशात् कारकाणि भवन्तीति न्यायात् करणत्वविवक्षयैव, न तु तात्त्विककरणत्वाभिप्रायेणेति बोध्यम्। अतएव नवीनतरनैयायिकेन विश्वनाथन्यायपञ्चाननेनापि व्यापारवत्कारणस्यैव करणत्वं विवक्षितम्। तदनुसारतः प्रत्यक्षे इन्द्रियस्य, अनुमितौ व्याप्तिनिश्चयस्य, उपमितौ सादृश्यज्ञानस्य, शाब्दबोधे च पदज्ञानस्य करणत्वमापादितम्। तदुक्तं विश्वनाथेन—'इन्द्रियं करणं मतम्' 'करणं व्याप्तिधीर्भवेत्' 'सादृश्यधीः ··· करणं मतम्, 'पदज्ञानन्तु करणमि'ति। (भाषापरिच्छेदः, ५८, ६६, ७९, ८१)। शब्दशक्तिप्रकाशिकायामप्यभ्यधायि—करणशब्दस्तु व्यापारप्रत्यासत्त्या जनकस्य वाचकः। चाक्षुषादौ चक्षुरादिः संयोगेन, अनुमित्यादौ व्याप्तिज्ञानादिः परामर्शादिना, स्मृत्यादावनुभवादिः संस्कारादिना, स्वव्यापारेणैव सम्बन्धेन हेतुः। शरीरात्मप्रभृतयस्तु ज्ञानादौ तादात्म्येनैव, अतो न तेषां तत्र करणत्वप्रसङ्गः। (पृ० ३१२)

अपिचोक्तम्—फलायोगव्यवच्छिन्नं फलोपधायकं वा कारणमेव करणम्, ज्ञानत्वादावात्मादेः करणत्वस्येष्टत्वात्, उपाधेयसंकरेपि कर्त्तृत्वकरणत्वाद्युपाधेरसाङ्कर्यादेव कारकस्य षड्विधत्वादत एव आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मनेत्यादिकः प्रयोगः। अतएव च विवक्षातो हि कारकविभक्तयो भवन्तीत्यपि प्रवाद इत्यन्ये। (शब्दशक्तिप्रकाशिका, पृ० ३२३) अत्र अन्य इत्युक्तिः ग्रन्थकारस्यास्वारस्यसूचनार्था। अतो व्यापारवत् कारणमेव करणमित्यभिप्रायोऽत्र जगदीशस्य। उक्तञ्च—

योऽर्थो विकरणाक्तस्य धातोरर्थे तृतीयया।
बोध्यते करणं नाम कारकं तदिहोच्यते ॥

सविकरणस्य यद्धातोरुपस्थाप्य यादृशा तृतीययार्थे यादृशः स्वार्थोऽनुभाव्यते स तद्धातूपस्थाप्यतादृशक्रियायाः करणसंज्ञकं कारकमुच्यते। (शब्दशक्तिप्रकाशिका पृ० ३११) तथाहि 'दात्रेण छिनत्ति, घटत्वेन जानातीत्यादौ धात्वर्थे छिदायां दात्रस्य व्यापारद्वारा जन्यत्वादि, ज्ञानादौ च घटत्वादेः

प्रकारित्वादिकं तृतीयया बोध्यते, तदेव तत्र करणत्वम्। चैत्रेण पक्वमित्यादौ धातोरर्थे तृतीयया बोध्यमपि कर्त्तृत्वं न विकरणाक्तस्य। ... ...' (शब्दशक्तिप्रकाशिका) एतावता कुठाराविकरणस्य कारकान्तरनिष्ठव्यापारद्वारा छिदादिक्रियाहेतुत्वाभावः, स्वनिष्ठव्यापारद्वारा छिदादिजनकता चेति जगदीशवचःसारः।

अथ कथ्येत—तथापि नापसरति सर्वथा विचिकित्सा। 'सुखन्तु जगतामेव काम्यं धर्म्मेण जायते (भाषापरिच्छेदः १४५) इत्यादौ नव्यनैयायिकैरेव सुखसाधनत्वेन धर्म्मस्याङ्गीकारात्। नापि धर्म्मशब्देनेह यागादिर्विवक्ष्यते 'गङ्गास्नानादियागादिव्यापारः स तु कीर्त्तितः' (भा० प० १६२) इत्यादौ यागादिव्यापारस्यात्मनिष्ठपुण्यस्यैव धर्म्मत्वेनाभ्युपगमात्। धर्म्मो व्यापारोऽपि स्यात्, स्वर्गादिसाधनमपि स्यादिति परस्परविरुद्धप्रतिभासनम्। तस्मादकामैरपि करणस्य फलायव्यवच्छिन्नकारणत्वं स्वीकर्त्तव्यम्, अन्यथा अत्र का गतिः स्यात्?

तत्राह समाधाता—नैवमप्यलमाशङ्कितुम्। उक्तस्थले सुखं प्रति धर्म्मस्य व्यापारत्वेन कारणत्वमेव विवक्ष्यते, न तु करणत्वमपि 'धर्म्मत्वेन सुखत्वेन कार्यकारणभाव इत्यर्थ' इति मुक्तावलीकृदुक्तेः। अपि च 'धर्म्मः स्वर्गादिकारणमि'ति (भा० प० ७५७) विश्वनाथोक्तेः स्वर्गादि प्रति धर्म्मस्य कारणत्वमेव स्यात्, कुतः करणत्वम्? करणत्वे तु 'धर्म्मः स्वर्गादिसाधनमि'त्येवाभिलप्येत, साधनशब्दस्य करणे रूढत्वात्। कथञ्च न तथोक्तं ग्रन्थकृता तस्मादकामेनापि स्वीकार्यमुक्तविश्वनाथोक्तवाक्ये धर्म्मेणेति तृतीया हेतौ, न तु करण इति। तथाहि यागादिव्यापारतया धर्म्मस्यास्ति अवश्यमपेक्षा। अन्यथा यागादेश्चिरध्वस्ततया व्यापारशून्यतया च कालान्तरभाविस्वर्गादिसाधनत्वं न स्यात्। उक्तञ्च—

चिरध्वस्तं फलायालं न कर्म्मातिशयं विना।

तस्मात् सिद्धमेव यागादेः धर्म्माख्यव्यापारवत्तया स्वर्गादिकरणत्वम्। धर्म्मस्य तु यागादिव्यापारस्य तत्करणत्वमात्रमिति न विरुद्धमत्र प्रतिवेदनम्। यद्वा प्राचीनन्यायवित्पक्ष एवायमिति करणत्वस्वीकारेऽप्यत्र न दोषः, नव्यैर्व्यापारवत् कारणस्य करणत्वाङ्गीकारेऽपि प्राचीनैः फलायोगव्यवच्छिन्नकारणत्वस्यैव करणत्वाभ्युपगमात्। अत्र दिनकरीकारसमर्थनमप्यस्ति—

'इदञ्च प्राचां मतेनोक्तमि'ति । दृश्यते च प्रशस्तपादभाष्यटीका-कृतामपि धर्म्मस्य स्वर्गादिसाधनत्वे प्रत्याग्रहः । तत्र यागादेर्न स्वर्गादि-साधनत्वम्, अपितु पुण्यस्यैव धर्म्मस्य इत्येतावन्मात्रसाधन एव हि ते बद्धपरिकराः ।

ननु प्राचीननैयायिकैर्नव्यनैयायिकानां करणस्वरूपे मतविरोधोऽपि स्पष्ट एवेति वाढमेतत् । किन्तु चिन्तामणि-तर्कसंग्रहदीपिकादौ करणस्य व्यापारवत्-कारणत्वपक्षमादाय प्रत्यक्षादौ करणत्वमिन्द्रियादेः, फलाव्यवहितकारणत्व-पक्षमादाय त्वनुमितौ परामर्शस्य करणत्वं यदुपपादितं तद्दुरुपपादमेव स्यात्, प्राचीननवीनमतयोर्मिथो विरुद्धयोरेकत्र ग्रन्थे संप्लवात् । ये च केचन न्यायवैशेषिका इन्द्रियादेः करणत्वं धर्म्मस्य च स्वर्गादिसाधनत्वमनुमन्यन्ते ते चोक्तदोषकवलिता भवेयुः । अपि च प्राचीनमतखण्डनमेव यदि नव्यानामभिमतं स्यात्तर्हि चिन्तामणिकृतं प्राचीनमतानुमतमनुमानलक्षणं खण्डितमेव भवेत्, न तु मण्डितम् । खण्डने च तस्य तट्टीकायाश्चिन्तामणिग्रन्थव्याख्यातृत्वं कथमुपपद्यते ? कुतस्तराञ्च गम्यतेतराम् मूलग्रन्थस्योपरि व्याख्याकृतां श्रद्धालुता ? तदत्र भवतो तीक्ष्णबुद्धिना किन्तावत् समाधानमाविष्कर्त्तुमलम् ? इति चेत्तन्नेदं वक्तव्यम्—यदेतदुक्तं विवादिभिः, तत्तु युक्तमिव प्रतिभाति । सम्भाव्यते चात्र सुष्ठु समाधानेन । असाधारणं कारणमेव करणम् । कारणस्यासाधारण्यञ्च व्यापारवत्— कारणत्वेन फलाव्यवच्छिन्नकारणत्वेन वा बोध्यम् । तथा च व्यापारवत्त्वफलाव्यवच्छिन्नत्वैतदन्यतरविशिष्ट-कारणत्वमेव करणत्वमिति करणस्य लक्षणं पर्यवस्यति । विवक्षावशाद्धि असाधारण्यस्य द्वैविध्यमुपपद्यते । तेन च कुत्रचित् ग्रन्थकृता व्यापारवत्कारण-त्वेन करणत्वमवधार्यते, क्वचिच्च विवक्षया फलाव्यवच्छिन्नकारणत्वेन । अतो व्यापारवत्त्वविवक्षया प्रत्यक्षादौ इन्द्रियादीनां करणत्वमवगम्यते, तथा फलाव्यवच्छिन्नकारणत्वविवक्षया परामर्शादीनामपि अनुमानत्वमनुमोद्यते इति न किञ्चिदनुपपन्नम् । एतयैव च दृष्ट्या केषाञ्चिदिन्द्रियादेः करणत्वविधानं धर्म्मस्य च स्वर्गादिसाधनत्वविधानमुपपद्यत इति सर्वं समञ्जसम् । तस्माद-स्माकमत्र नव्यप्राचीनयोरुभयोरेव मतयोरुपरि श्रद्धा अविकलैवावतिष्ठते । नावतिष्ठेरन् विप्रतिपत्तयोऽपि ।

यद्वा सामग्र्यान्तर्गतेन केनचिदेकेन कारकविशेषेण न क्रियायाः परिनिष्पत्तिः, सामग्रीसत्त्वे फलोत्पत्तौ कालक्षेपायोगात्, तदसत्त्वे च तदनुदयात् क्रियासिद्धौ सर्वेषां कारकाणां प्रयोजकत्वनियमात् । अतः फलेनावश्यम्भावि-

स्वरूपातिशयवत्त्वात् कारकसामग्री एव क्रियायाः साधकतमा करणसंज्ञां लभत इति न्यायवित्समयः। तदुक्तम् पदवाक्यप्रमाणपारावारपारीण-श्रीमज्जयन्त-भट्टेन—

'यत एव साधकतमं करणं, करणसाधनश्च प्रमाणशब्दः, तत एव सामग्र्याः प्रमाणत्वं युक्तम्। तद्व्यतिरेकेण कारकान्तरे क्वचिदपि तमवर्थ-संस्पर्शानुपपत्तेः। अनेककारकसन्निधाने कार्यं घटमानमन्यतरव्यपगमे च विघटमानं कस्मै अतिशयं प्रयच्छेत्? न चातिशयः कार्यजन्मनि कस्यचिदव-धार्यते सर्वेषां तत्र व्याप्रियमाणत्वात्।' (न्यायमञ्जरी, प्रमाणप्रकरणम्, पृ० १२, वाराणसी संस्करणम् १९३६)। अपि चोक्तम्— 'फलोत्पादाविना-भाविस्वभावत्वमवश्यता कार्यजनकत्वमतिशयः। स च सामग्र्यन्तर्गतस्य न कस्यचिदेकस्य कारकस्य कथयितुं पार्यते। सामग्र्यास्तु सोऽतिशयः सुवचः। सन्निहिता चेत् सामग्री, सम्पन्नमेव फलमिति सैवातिशयवती' (पृ० २३)।

न च सामग्रीकरणतापक्षे करणविभक्तिर्नोपपद्येत, लोके सामग्र्या पश्यामीत्येवं व्यवहारानुमोदनात्, दीपेन पश्यामि, चक्षुषा पश्यामीत्यादि-व्यवहारपरिग्रहाच्चेति वाच्यम्, तत्सामग्रीसरूपसमारोपेण चक्षुषा पश्यामि, स्थाल्या पचतीत्यादिलोकसिद्धगौणव्यवहारोपपत्तेरिति। तदुक्तम्—'सामग्री हि संहतिः। सा हि संहन्यमानव्यतिरेकेण न व्यवहारपदवीमवतरति। तेन सामग्रीं पश्यामीति न व्यपदेशः। यस्तु दीपेन्द्रियाणां तृतीयानिर्देशः स फलोपजननाविनाभाविस्वभावत्वाख्यसामग्रीसरूपसमारोपनिबन्धनः। अन्यत्रापि च तद्रूपसमारोपेण स्थाल्या पचतीति व्यपदेशो दृश्यते एव। तस्मादन्तर्गतकारकापेक्षया लब्धकारणभावा सामग्री प्रमाणम्। (न्यायमञ्जरी पृ० २३)।

अत एव अव्यभिचारिणीमसन्दिग्धां कार्योत्पत्तिं विदधती सामग्री करणसंज्ञास्पदं भवतीत्यवसीयते। तदुक्तं न्यायमञ्जर्याम्—'अव्यभिचारादि-विशेषणार्थोपलब्धिसाधनत्वं लक्षणमि'ति (पृ० १२)।

यद्वा सामग्र्यन्तःपातितया कश्चिदपि कर्त्ता कर्मभूतविषयं क्वचिदपि सामग्र्या कथञ्चिदपि नोत्पादयितुमीष्टे, तथा कर्तृकर्मव्यवहारोऽपि समुच्छिद्येत। तस्मात् कर्तृकर्मविलक्षणमव्यभिचारासन्दिग्धकार्योत्पादन-साधनं कारकं करणमित्यङ्गीकारे किमनुपपन्नं स्यादित्यवधेयं विपश्चिद्भिः। तदुक्तं जयन्तभट्टेन प्रमाकरणत्वव्यवस्थापनप्रसङ्गे—

अपरे पुनराचक्षते। सामग्री नाम समुदितानि कारकाणि तेषां द्वैरूप्यमहृदयङ्गमम्। अथ च तानि पृथगवस्थितानि कर्मादिभावं भजन्ते, अथ च तान्येव समुदितानि करणीभवन्तीति कोऽयं नयः। तस्मात् कर्त्तृकर्म-व्यतिरिक्तमव्यभिचारादिविशेषणकार्यप्रमाजनकं कारकं करणमुच्यते। तदेव च तृतीयया व्यपदिशन्ति। दीपेन पश्यामि, चक्षुषा निरीक्षे, लिङ्गेन बुध्ये, शब्देन जानामि, मनसा निश्चिनोमी'ति। (न्यायमञ्जरी पृ० १३-१४)। उक्तञ्च— ... कर्त्तृकर्म्मवैलक्षण्यं चक्षुरादीनाम्। तद्वैलक्षण्यमेव च तेषामतिशयः इति। तदयमिह प्रमाणं प्रमाता प्रमेयं प्रमितिरिति चतुर्वर्गेणैव व्यवहारः परिसमाप्यते। तस्मात् कर्त्तृकर्मविलक्षणा संशयविपर्ययरहितार्थ-बोधविधायिनी बोधाबोधस्वभावा सामग्री प्रमाणमिति युक्तमिति'। (पृ० १४) स्पष्टीकृतञ्च ढुण्ढिराजशास्त्रिणा— कारकान्तरेऽचरितार्थत्वे फल-(क्रिया) हेतुत्वं करणत्वम्। कारकान्तरनिष्ठव्यापारद्वारा क्रियाहेतुत्वाभावः सत्यन्तार्थः। कर्त्तृकारके आरम्भकसंयोगप्रतिद्वन्द्विविभागानुकूल-कुठारादि-क्रियाया एव छिदादिधात्वर्थतया कर्तुः कुठारादि-करणनिष्ठव्यापारद्वारा छिदादिहेतुत्वान्नातिव्याप्तिः। कर्म्मणस्तु तादृशक्रियाहेतुत्वविरहादेव नातिप्रसङ्गः। अधिकरणादेरपि कर्त्तृकर्मान्यतरव्यापारद्वारैव क्रियाहेतु-त्वान्नातिप्रसङ्गः इति जयरामपञ्चाननादयः। (शब्दशक्तिप्रकाशिकाटिप्पणी, पृ० ३११) तदेवं करणस्य स्वव्यापारद्वारा कार्यजनकत्वपक्षः स्वयमावेदितः कातन्त्रे कविराजेनापि। अत उक्तम्—करणं साधकतमम् इति।

अथ शङ्केत—व्यापारवतो वस्तुनः कारणत्वमेव मा भूत्। करणत्वन्तु कुतः? अव्यवहितपूर्ववर्त्तिन एव हि कारणत्वं शास्त्रकारसम्मतम्। न हि व्यापारवद्वस्तुनः कार्याव्यवहितपूर्ववर्त्तित्वं सिद्ध्येत्। इन्द्रियादीनां विद्यमानत्वेऽपि विना इन्द्रियसंयोगादिकं नैव प्रत्यक्षादेरुपपत्तिरित्यवश्यक्लृप्त-नियत—पूर्ववर्त्तित्वात् कारणत्वमिन्द्रियसंयोगादेरेव, इन्द्रियादेस्त्विन्द्रिय-संयोगादिभिर्व्यवधानात् नियतपूर्ववर्त्तित्वाभावेन कारणत्वाभाव एव स्यात्, का कथा करणत्वस्येति तस्य त्वन्यथासिद्धत्वपक्षे निक्षेप इत्येवमापत्तौ किमुत्तरं तव? तत्र समाधेयम्— इन्द्रियसंयोगादिभिर्व्यापारैर्व्यव-धानादिन्द्रियादेर्न नियतपूर्ववर्त्तित्वमिति यदुक्तं त्वया, तद्दुर्षणम्। इन्द्रिय-संयोगकाले इन्द्रियादेः सत्त्वात् व्यापारावतोऽपि तस्य कार्याव्यवहितपूर्ववर्त्तित्वं न व्याहन्यते। व्यापारेण व्यापारिणो नान्यथासिद्धिरिति न्यायात् नेन्द्रियादेरन्यथासिद्धत्वमपि। तथा चेन्द्रियसंयोगकाले चक्षुरादेरसत्त्वं सत्त्वं

वेति वक्तव्यम् वादिभिः। असत्त्वं चेत्, इन्द्रियसंयोग एवासम्भवः, सत्त्वं चेदिष्टापत्तिः।

ननु व्यापारवत् कारणमेव करणमित्यास्थीयेत चेत् अन्योन्याश्रयदोषान्नास्ति निस्तारः। तथाहि, उक्तकरणलक्षणज्ञानकाले तल्लक्षणघटकव्यापारलक्षणज्ञानमावश्यकम्। एवं तज्जन्यत्वविशिष्ट-तज्जन्यजनकत्वव्यापारलक्षणज्ञानकालेऽपि तत्पदेन लक्षणे करणपदपरामर्शात् करणलक्षणज्ञानमावश्यकम्। अतः स्वग्रहसापेक्षग्रहसापेक्षग्रहविषयत्वेन अन्योन्याश्रयदोषप्रसङ्गादुक्तव्यापारपदघटित-करणलक्षणं दुर्घटमेव स्यात् इति चेत् तदपि न विचारचारु। तत्पदं नात्र हि करणस्वरूपोपपादकम्, किन्तु तत्परिचायकम्। तस्मादिह करणपदं नैव लक्षणघटकमित्यतो नान्योन्याश्रयप्रसङ्गः? अयमाशयः—दण्डेन घट इत्यादौ व्यापारवत्त्वविवक्षणेऽपि दण्डस्य हेतुत्वमेव स्वीकृतं शाब्दिकैः, न तु करणत्वमपि। व्यापारलक्षणघटकतत्पदेन करणत्वपरामर्शे कृते तु कारणमात्रत्वेनाभिमतस्य दण्डस्य व्यापारवत्त्वं नाङ्गीकर्त्तुमलम्। अथ च तदङ्गीक्रियते, तत् कथम्? तत्रोच्यते—स्वजन्यत्वस्वजन्यजनकत्वैतदुभयसम्बन्धेन वस्तुविशिष्टत्वं व्यापारत्वमित्येवाङ्गीकार्य्यम्। तस्मात् करणलक्षणे व्यापारलक्षणज्ञाने समपेक्षितेऽपि व्यापारलक्षणे करणलक्षणज्ञानापेक्षा नास्तीति नान्योन्याश्रयदोषः प्रसरति। एतेनापसारित एव संवादिनामक्षिषु प्रतिपक्षिणां धूलिपटलप्रक्षेपः।

अथोपतिष्ठते पुनः पर्य्यनुयोगः। व्यापाराश्रयत्वं कर्त्तुरेव सिद्धमिति तत्रैव व्यापारवत्त्वं मुख्यम्। अतो व्यापारवत्त्वं करणस्येत्युक्तिर्विनिगमनाविरहान्न सोढव्या। तत्रेव प्रतिविधीयते—

अत्र व्यापारपदेन कर्त्तृव्यापाराधीनव्यापार एव विवक्षणीयः। तथा-चानुमानं प्रेक्षावताम्—करणं सकर्त्तृकं कर्तृव्यापारजन्यत्वात् एतदभिप्रेत्यैवोक्तम्—करणं खलु सर्वत्र कर्त्तृव्यापारगोचरः। उक्तञ्च—'कर्त्तुरधीनं प्रकृष्टं सहायं करणम्' (हरिनामामृतम् ४, ९९)। अस्मात् क्रियानिष्पत्तौ करणस्य कर्त्तृपारतन्त्र्यमेवास्ति। 'साधकतमं करणमि'ति सूत्रे साधकतममिति पदेन कर्त्तृव्यापाराधीन-व्यापारवत् कारणमेव प्रणिधेयं सुधीभिः। समाख्यायि च वासुदेवेन— 'कर्त्रा क्रियायां जनयितव्यायां यत् सहायभूतं तदुपकारकमुच्यते' इति।

ननु करणस्य व्यापारवत् कारणत्वमेव यदीष्येत र्तीह दण्डेन घटः, पुण्येन गौरवर्णं इत्यादिषु दण्डपुण्यादेर्व्यापारवत्त्वविवक्षायां करणत्वं कथं

नाभिप्रेतम् ? इति चेत् ? तत्र समाधीयते—करणलक्षणसूत्रे कारक इत्यधिकारेण करणस्य कारकत्वात् तथा करोतीति व्युत्पत्तेः कारकाणां क्रियासाधकत्वात् व्यापारोपेतं यत् कारणं क्रियामात्रस्य साधकं तत् करणमित्येव विवक्षितं सूत्रे 'साधकतमं करणमि'ति। अतः पुण्येन यागेन वा दृष्टो हरिः, दण्डेन घट उत्पद्यते, कुठारेण वृक्षं छिनत्तीत्यादिषु पुण्य-दण्ड-कुठारादीनां हरिदर्शन-घटोत्पादन-वृक्षछेदनादि - क्रियासाधनत्वात् अदृष्ट-स्वभ्रमिजन्यभ्रमि - वृक्षसंयोगादिव्यापारवत्त्वाच्च साधकतमकारकत्वसिद्धेः करणत्वमुपपद्यते। किन्तु दण्डेन घटः, पुण्येन गौरवर्ण इत्यादिषु दण्डादेरुक्त-व्यापारवत्त्वविवक्षायामपि क्रियासाधनत्वायोगात् न करणत्वमिति स्थितिः। यत् खलु द्रव्यसाधनं गुणसाधनं च तद् व्यापारवत् निर्व्यापारं वा कारण-त्वमेव भजते। एवं यत् पुनः क्रियासाधनं तदपि निर्व्यापारमेव सत् हेतुर्भवति न तु करणम्। व्यापारवत् क्रियायाः जनकमेव असाधारणं कारणं करणं वा बोध्यम्। तल्लक्षीकृत्य चोक्तम् दीक्षितेन— द्रव्यादिसाधारणं निर्व्यापारसाधारणञ्च हेतुत्वम्, करणत्वन्तु क्रियामात्रविषयं व्यापारनियतञ्च (साधकतमसूत्रे वृत्तिः) उक्तञ्च हरिणा—

द्रव्यादिविषयो हेतुः कारकं नियतक्रियम्।
अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते॥

ननु हेतुकरणयोरुभयोरेव किञ्चित्फलसाधनयोग्यत्वात् करणस्यापि हेतुत्वसिद्धेः 'हेता' वित्यनेनैव सर्वत्रेष्टसिद्धेः पुनस्तृतीयोपपत्तये 'कर्तृकरणयोः तृतीये'ति सूत्रे करणपदोपादानं कथं व्यर्थं न स्यात्, इति चेत् ? तत्रोच्यते— नैतदपि मनोरमम्। सिद्धो हि विधिरारभ्यमाणो ज्ञापको भवतीति न्यायाद् यद्व्यर्थं तज् ज्ञापकमेव भवति। प्रकृतेऽपि करणपदं सूत्रे व्यर्थीभूय हेतुतोऽस्य वैलक्षण्यं सूचयति। तेन क्वचिद्धेतौ क्वचिद्वा करणे विहिता तृतीया विवक्षोः शाब्दबोधभेदं जनयेदिति समीचीन एव हि उभयोः पृथगुपन्यासः। अपि च शोकेन क्रन्दतीति वाक्ये हेतुभूतशोक एव पुरुषं क्रन्दने नियुङ्क्ते। नास्त्यत्र कर्तुः स्वातन्त्र्यम्। न हि स्वेच्छयैवात्र क्रन्दने प्रवृत्तो जनः। कुठारेण छिनत्तीत्यादौ तु कर्त्ता छेदनकर्म्मणि कुठारं स्वेच्छयैव नियुङ्क्ते। अस्ति चात्र कर्त्तुः स्वातन्त्र्यम्। अतो हेत्वधीनः कर्त्ता, कर्त्रधीनं च करणमिति पुरुषोत्तमोक्तः हेतुकरणयोर्विवेकोऽवगन्तव्यः। तस्मात् हेतोः करणस्य च वैलक्षण्यात् करणे पृथक्तृतीयाविधानं संगच्छत एव।

एतावता सुस्थित एवात्र करणस्य व्यापारवत्-क्रियासाधनत्वपक्षः। अथ प्रश्नान्तरमत्रोपतिष्ठते—वृक्षसंयुक्तकुठारोपरि कुठारान्तरसमाहननेन वृक्षच्छेदे सति वृक्षसंयुक्तस्य प्रथमस्योद्यमननिपातनोपेतस्य वा द्वितीयस्य कुठारस्येति कस्य तावत् करणत्वम् ?

अत्रायमेव सिद्धान्तः—प्रथमकुठारस्यैवात्र करणत्वम्, न तु द्वितीयस्य। तथाहि वृक्षेण सह प्रथमकुठारस्य संयोग एवात्र व्यापारः। तादृशसंयोगः प्रथमकुठारजन्य - छेदनकार्य्यजनकश्च। अत एवोक्तसंयोगस्य व्यापारत्वमक्षतमेव। तादृशव्यापारवत्त्वेन प्रथमकुठारस्यैव करणत्वम्। न चोक्तसंयोगरूपो व्यापारः द्वितीयकुठारे समस्ति। अतो द्वितीयकुठारस्य करणत्वशङ्का कथङ्कारमपि न समुदेति।

तत्र पूर्वपक्षी आक्षेप्तुमेवमर्हति—छेदनकार्यं प्रति व्यापारभूते तु कुठारस्य उद्यमननिपातने एव। तादृशव्यापारश्च सर्वत्र छेदनकर्म्मणि दृश्यते। स तु व्यापारोऽत्र प्रकृते द्वितीये एव कुठारे विद्यते, न तु प्रथमे। द्वितीयमेव हि कुठारमत्र वृक्षच्छेदकः समुद्यम्य निपातयति, न तु प्रथममिति हेतोस्तादृशव्यापारवत्त्वादत्र द्वितीयकुठारस्यैव करणत्वं न तु प्रथमस्येति।

अत्रोच्यते सिद्धान्तिभिः—उद्यमननिपातने खलु प्रकृते छेदनव्यापारभूते एव भवितुं नार्हतः। न ह्युद्यमननिपातने छेदनकार्यजनके। यतो हि कार्याधिकरणे अव्यवहितपूर्ववर्त्तिन एव जनकत्वं स्वीकृतम्। न चोद्यमनादिकमिह छेदनकार्य्याधिकरणे अव्यवहितपूर्ववर्त्तितयाऽवतिष्ठते। अत्र प्रागेव द्वितीयकुठारस्योद्यमनादिकम्, तदुत्तरं वृक्षेण प्रथमकुठारस्य दृढतरसंयोगः, ततश्छेदनमिति छेदनकार्याधिकरणे उद्यमनादेर्वृत्तित्वाभावात् कार्यजनकत्वमेव नोपपद्यते। तथा च सति द्वितीयकुठारस्य करणत्वशङ्का दूरत एवापसारिता।

ननु यत्र केनचिदेकेन कुठारेण वृक्षच्छेदो जातस्तत्रोद्यमनादेः प्रभृत्यावृक्षसंयोगं सकल एव क्रियाकलापः व्यापारत्वेन यथा प्रतिपद्यते तथैवास्तु प्रकृते। एवञ्च सति संयोगवतः प्रथमकुठारस्येव उद्यमनादिवतो द्वितीयकुठारस्यापि करणत्वमस्तु इति प्राप्ते कानुपपत्तिरिति चेत् ?

तत्रोच्यते—अहो वत कः खलु भवादृशो वाक्पटुर्दृष्टान्तवैषम्यदोषग्रस्तोऽपि स्वमतप्रतिष्ठापनाय प्रयतते ? दृष्टान्ते यस्योद्यमनादिकं तस्यैव संयोगः। न तथा त्वत्र दृष्टो दार्ष्टान्तिके। तत्रोद्यमनादिकं द्वितीयस्यैव कुठारस्य, प्रथमस्य तु वृक्षसंयोग एवेत्युक्तदोषान्नास्ति निस्तारः।

अथ विवदेत—उद्यमनादेरपि परम्परया कार्यजनकत्वसिद्धेर्व्यापारत्वमक्षतमेव। तादृशव्यापारवत्त्वाच्च द्वितीयकुठारस्य करणत्वमपि वज्रलेपायते। इति।

तत्राभिधीयते—परम्परयाप्यत्र कार्यजनकताभ्युपगमे छेदनकार्ये कुठारेण सह हस्तसंयोगस्यापि व्यापारत्वमस्तु। तद्वत्त्वाच्च हस्तस्यापि छेदनं प्रति करणत्वं केन निवार्येत? ततः हस्तेन वृक्षं छिनत्तीत्यादयः प्रयोगाः प्रसज्येरन्। न तु तथाऽवलोक्यते लोके। अतो नैव युक्तिसहं वचो विवादिनामत्र।

पूर्वपक्षिणः पुनरेवमाक्षिपन्ति—क्रियानिष्पत्तौ बहूनि कारकाणि यद्यपि व्याप्रियन्ते, तथापि तेष्वनेनैतत् करोमीति भावनया कर्त्तुः प्रकृष्टोपकारकमन्तरङ्गं यद्विवक्षितं तदेव करणमित्यभिप्रेत्योक्तम्—'साधकतमं करणमि'ति। प्रकृतेऽपि छेदनकार्यनियोगे कर्त्ता स्वतन्त्रः सन् द्वितीयमेव कुठारं मुख्यतयाऽवलम्बते, तमेव हि स उद्यम्याधः पातयति। अतः प्रकृष्टोपकारकत्वाद् द्वितीयस्य कुठारस्य करणत्वमस्तु, कृतं प्रथमकुठारस्योदासीनस्य करणत्वकल्पनया।

तत्रेदमातिष्ठन्ते उत्तरपक्षिणः— सखीकृतेऽप्युद्यतनिपातिते अत्रान्तरे द्वितीयकुठारे वृक्षसंयुक्तं प्रथमकुठारमेव कर्त्ता छेदनकर्म्मणि प्रधानतया शरणीकरोति। यतो हि छेदनं प्रति कुठारस्योद्यमननिपातने न खल्वपरिहार्य्ये, अपरिहार्य्यन्तु वृक्षेण सह कुठारस्याव्यवहितस्य दृढतरसंयोजनम्। कुठारसंयोगं विना नैवात्र छेदनं सम्भवेत्। अतः कुठारसंयोगेनैवात्र छेदनस्यान्वयसहचारो व्यतिरेकसहचारश्च। कुठारोद्यमननिपाताभ्यां तु नस्तच्छेदनान्वयव्यतिरेकौ। कुठारोद्यमनिपातसत्त्वेऽपि वृक्षेण दृढसंयोगासत्त्वे छेदनकर्म्मणि प्रयासशतमप्याकाशमुष्टिहननायते। एवमुद्यमनादिकं विनापि शानितकुठारादिना वृक्षादेच्छेदनमपि सम्भवेत्। तस्मादन्वयव्यतिरेकव्यभिचारात् उद्यमननिपातने न छेदनकर्मणि नूनमावश्यके। किन्त्वन्वयव्यतिरेकसत्त्वात् वृक्षसंयोग एवावश्यक्लृप्ततयाङ्गीकार्यः तस्माद् वृक्षसंयुक्तस्य व्यापारवतः प्रथमकुठारस्यैव कार्यजनकत्वात् प्रकृष्टोपकारकत्वाच्च करणत्वोपपत्तिः, द्वितीयकुठारस्य तु कथञ्चिदुपकारकत्वेऽपि छेदनक्रियायां मुख्योपकारकत्वानुपपत्तेर्न करणत्वप्राप्तिरिति स्थितिः।

अपि च यत्र वृक्षसंयुक्तस्य कुठारस्योपरि मुषलाद्घननेन वृक्षच्छेदो जातस्तत्र कस्य तावत् करणत्वम्, कुठारस्य मुद्गरस्य वेति पृच्छायां

किमुत्तरं भवेत् प्रतिपक्षिणाम् ? पूर्वपक्षीयरीत्या द्वितीयकुठारस्येव प्रकृते मुद्गरस्यैव करणत्वमभ्युपेतव्यम् । यतो हि छेदनकर्त्ता स्वहस्तेन मुद्गरमेवात्र गृह्णाति, मुद्गरमेव हि स द्वितीयकुठारवत् समुद्यम्यात्र निपातयति । तदेवमिह करणत्वं मुषलस्यैव स्यात् । तथा च सति तदुत्तरं तृतीयापत्तौ मुषलेन वृक्षं छिनत्तीति प्रयोगो दुर्निवारः स्यात् । न च तथा कथञ्चिद् भवत्यभिमतः प्रेक्षावताम् । न हि कदापि कुत्रापि मुषलेन छेदनकार्यं सम्भवेत्, छेदनन्तु शाणितास्त्रविशेषसाध्यमेव स्यात् । तस्मात् वृक्षसंयुक्तकुठारस्योपरि मुद्गराहननेनापि वृक्षच्छेदे सम्पन्ने छेदनकर्म्मण्य-योग्यत्वात् मुद्गरस्य न करणत्वम्, अपितु योग्यतावतो वृक्षसंयुक्त-कुठारस्यैवेति ध्येयम् । तस्माद् रीतिमेतामनुसृत्य वृक्षसंयुक्तप्रथमकुठारस्यैव करणत्वं स्वीकर्त्तव्यम्, न तूद्यत - निपातितस्य द्वितीयस्य कुठारस्येति सुधीनामाकूतम् ।

अथ समाक्षेप्ता विप्रतिपद्येत—कथनमात्रमेतद् यदुक्तं वादिभिः नास्ति मूले किञ्चिदत्र प्रमाणम् । यतो हि यथा घटोत्पत्तौ परम्परासम्बन्धमात्रमादाय दण्डस्यैव करणत्वमास्थीयते, तथैवात्र प्रकृते तादृशसम्बन्धमाश्रित्य द्वितीयकुठारस्यैव करणत्वमस्तु । अयमभिसन्धिर्वक्तव्यस्य—अत्र दृष्टान्ते प्रथमतो दण्डभ्रमिर्भवति, ततश्चक्रभ्रमिः, ततश्च घण्टोत्पत्तिर्दृश्यते । तत्र चक्रभ्रमेः चक्रजन्यत्वात्, घटाव्यवहितपूर्ववर्त्तित्वेन च चक्रजन्यघटकार्यजनक-त्वात् घटोत्पत्तौ तस्यैव व्यापारत्वमस्तु । तद्वत्त्वाच्च चक्रस्यैव करणत्वं सिद्ध्यतु । ततश्च तदुत्तरं तृतीयापत्तौ चक्रेण घटः क्रियते इत्येवमनिष्टं व्यवहारविरुद्धं वज्रलेपायेत । अपिच दण्डभ्रमेः चक्रभ्रमिणा व्यवधानात् घटाव्यवहितपूर्ववर्त्तित्वमेव मा भूत् । तेन तस्य घटजनकत्वाभावात् घटोत्पादे व्यापारत्वकल्पना खपुष्पायेत । ततो दण्डस्य व्यापारवत्त्वाभावेन करणत्वा-भावात् दण्डेन घटः क्रियते इत्यभीष्टोपि शिष्टप्रयोगो न संगच्छेत । तस्माद् विद्वत्सभाजितव्यवहारानुरोधेन नूनमेतदस्माभिरवधेयं यत्—स्वभ्रमिजन्यभ्रमि-वत्तासम्बन्धेन दण्डस्याव्यवहितपूर्ववर्त्तित्वमादाय घटजनकत्वसिद्धेः स्वभ्रमि-जन्यभ्रमिवत्त्वेन व्यापारवत्त्वात् यथा दण्डस्यैव करणत्वं सुसाधनीयम्, तथैव प्रकृते उद्यमनादिजन्यदृढसंयोगवत्तासम्बन्धेन द्वितीयकुठारस्य छेदनजनक-त्वसम्भवात्, उद्यमनिपातजन्यदृढसंयोगवत्त्वेन च व्यापारवत्त्वात् तस्यैव करणत्वमास्थेयम्, न तु चक्रस्येव प्रथमकुठारस्य इति ।

तत्र सिद्धान्ती सुष्ठ्वभिवदति—विपक्षिणामेतन्मतं महोपष्टम्भेनो-पस्थापितमपि कुशिक्षितर्कालाकुलितं न विद्वद्भिरादरणीयम्, असमीक्ष्य

भाषितत्वात् । विवादिनां रीत्यनुसारेण यत्र हस्तेन कुठारमादाय कुठारेण वृक्षश्छिन्नस्तत्र स्वसंयोगजन्यसंयोगवत्तासम्बन्धेन व्यापारवत्त्वमावाय हस्तस्यैव करणत्वमापद्येत । न तु तथा दृश्यते लोके । अत्र वक्तव्यम्—शिष्टव्यवहाररक्षैव वैयाकरणानां मुख्यमुद्देश्यम् । लक्ष्यते चात्र साधूनामभिमतः प्रयोगः—'कुठारेण छिनत्ती'ति न तु 'हस्तेन छिनत्ती'ति । छेदनकार्यं प्रति कुठारस्यैव करणत्वयोग्यता, न तु हस्तस्येति सर्वानुभवसिद्धा । हस्तेन कुठारेण छिनत्तीति प्रयुक्ते तु कुठारेणेति करणे तृतीया, हस्तेनेति तु हेतौ तृतीयेति बोध्या । तस्मादत्र लाघवात् शिष्टानुसरणाद्वा साक्षात् सम्बन्ध एवास्माभिर्व्यापारत्वेनाभ्युपेतव्यः, न तु गौरवादनिष्टप्रसङ्गाच्च परम्परासम्बन्धः । फलमुखिगौरवस्यापि सर्वैरदोषत्वेनाङ्गीकाराच्च वृद्धाचरणसंरक्षार्थमेव क्वचित् परम्परासम्बन्धोऽपि व्यापारो भवितुमर्हति । अत एव दण्डेन घटं करोतीत्यादौ शिष्टव्यवहारानुरोधादेव स्वभ्रमिजन्यभ्रमिवत्तारूपपरम्परासम्बन्ध एव व्यापारत्वेनानुमोद्यते । तादृशव्यापारवत्त्वेन च दण्डस्य करणत्वमपि सूपपद्यते । यत्र तु मुद्गरम् आदाय वृक्षसंयुक्तं कुठारमाहत्य वृक्षच्छेदनं कृतं तत्र 'कुठारेण छिनत्ती'त्येवमेव प्रयोगो दृश्यते, न तु मुद्गरेण छिनत्तीति प्रयोगः, मुद्गरेण छेदनासम्भवात् । तस्मात् सदाचारानुरोधविरोधात्, गौरवात्, प्रयोजनाभावाच्च यथा खलूद्यमनादिजन्यदृढसंयोगरूपपरम्परासम्बन्धस्य व्यापारत्वं प्रकल्प्य तद्वतो मुद्गरस्य करणत्वं नेष्यते प्रेक्षावद्भिः, तथैव प्रकृते परम्परासम्बन्धस्य व्यापारत्वकल्पनया तादृशव्यापारवतो द्वितीयकुठारस्य करणत्वमनुभवादिविरोधात् कथङ्कारमपि नासाद्येत तत्त्वविद्भिः । किन्तु लाघवार्थं शिष्टप्रयोगसङ्गत्यर्थञ्च प्रथमकुठारेण सह वृक्षस्य संयोगरूपसाक्षात् सम्बन्धस्यैव व्यापारत्वं सुनिश्चित्य तादृशव्यापारोपेतस्य प्रथमकुठारस्यैव करणत्वं समास्थातव्यम्, प्रथमप्राप्तस्य तस्य करणत्वपरित्यागे मानाभावात् ।

न च व्यापारस्य कर्त्तृजन्यत्वनियमात् उद्यमननिपातनयोरेवात्र स्वजन्यत्वात् व्यापारत्वमस्तु, अस्तु च द्वितीयकुठारस्यात्र करणत्वम् । किन्तु तत्र प्रथमकुठारेण वृक्षसंयोगस्यान्यजन्यत्वसम्भवात् व्यापारत्वमेव मास्तु च प्रथमकुठारस्य कथञ्चिदपि करणत्वभावना इत्यलं शङ्कितुम् । प्रथमकुठारेण वृक्षसंयोगस्यान्यकर्त्तृयत्नसाध्यस्यापि छेदनाक्षमत्वमेव विभावनीयम् । अतो हि तत्र द्वितीयकुठारस्योद्यमननिपातनयोरप्युपयोगः । तादृशयत्नेन च साध्यः प्रथमकुठारस्य वृक्षेण दृढतरसंयोगश्छेदनक्षमो यो जातः स तु कर्त्तृजन्य एव बोध्यः, नान्यजन्यः । तस्मादत्र प्रथमकुठारेण सह वृक्षसंयोगस्य कर्त्तृव्यापारत्वमक्षतमेवेति न कोऽपि दोषः । एककुठारकरणकछेदनकार्ये कुठारस्योद्यमननिपातनवृक्षसंयोगादिव्यापारः स्व(कर्त्तृ-)जन्य एवेति स्पष्टमवगम्यते, प्रकृते

तु कुठारद्वयसाध्यछेदेनकार्ये तथैव प्रतीयेत पर्य्यालोचनया यथोक्तप्रणिधानतः। तस्माद् वृक्षसंयोगरूपव्यापारवान् प्रथमकुठार एवात्र करणं स्यादिति निश्चप्रचमलं समाधातुम् । द्वितीयकुठारस्तु तत्र घटादौ कुलालजनकवत् अन्यथासिद्धत्वमधिगच्छति । अन्यथासिद्धत्वाच्च न तस्य कारणत्वम्, अन्यथासिद्धिशून्यस्य नियता पूर्ववर्त्तिता कारणत्वं भवेदि'ति मुक्तावलीकृदुक्तेः कारणत्वस्यान्यथासिद्धिभिन्नत्वनियमात् । कारणत्वाभावाच्च तस्य करणत्वमपि दुःसम्पादमेव, असाधारणकारणस्यैव करणत्वावधारणात् । तस्माद् द्वितीयकुठारो नात्र करणं, न वा कारणं, किन्त्वन्यथासिद्धमेव, आरादुपकारकं वा रासभादिवदित्यायातम् । प्रथमकुठारेण व्यवधानात् छेदनाव्यवहितपूर्ववर्त्तित्वाभावात् द्वितीयकुठारस्य कारणत्वमसंगतमेव । प्रथमकुठारस्य वृक्षेण दृढतरसंयोजनं प्रति हेतुत्वेन तस्य परम्परया कार्यजनकत्वं वा। मुद्गरादिनां वा तथात्वसम्भवात् न तस्यात्र नियतावश्यकत्वम् । अतो द्वितीयकुठारस्यात्र कारणत्वमेव न, करणत्वं तु कुतः? द्वितीयकुठारस्योद्यमननिपातने च न छेदनं प्रति व्यापारः, न वा करणं, नापि वा कारणं किन्तु सहकारिमात्रम् । तथाहि उद्यमननिपातनयोः छेदनाव्यवहितपूर्ववर्त्तित्वाभावान्न कारणत्वम्, अकारणत्वाच्च तत्र व्यापारवत्त्वविशिष्टकारणत्वानुपपत्तेः करणत्वमपि न, तथा स्वजन्यत्वविशिष्टस्वजन्यजनकत्वाभावान्न व्यापारत्वमपि, सामान्याभावस्य विशिष्टाभावप्रयोजकत्वनियमात् प्राणित्वाभावस्य मनुष्यत्वादिविशिष्टाभावप्रयोजकत्ववदिति ध्येयम् ।

ननु सिद्धान्तिभिरुद्यमननिपातनयोः छेदनं प्रति सहकारित्वमुच्यते, अथ च कारणत्वं नेष्यते इति तु विरुद्धं वचः। सहकारित्वाभ्युपगमे तस्य कार्य्यजनकत्वस्यापि सिद्धे कथं न व्यापारवत्वम्, कथञ्च तद्वतो द्वितीयकुठारस्य न करणत्वमिति चेन्मैवं शङ्किः। सहकारिकारणमित्यनेन वयमन्यथासिद्धमेवात्र विवक्षामः। अत्र द्वितीयकुठारस्यान्यथासिद्धत्वे तन्निष्ठोद्यमनादेरप्यन्यथासिद्धत्वकोटौ प्रवेशः स्यादित्यत्र नावशिष्यते संशयलेशोऽपि। किमधिकेन, कार्येणास्यान्वयव्यतिरेकासम्भवात् कार्यजनकत्वमसम्भवमेव स्यात्। यथा रासभादिवस्तु घटोत्पत्तिकाले सहकारित्वेनावगम्यमानमपि शास्त्रदृष्टया नियतसहायकत्वाभावात् अन्यथासिद्धत्वं भजते, तद्वदत्रापि बोध्यम्। तस्माद् वयमेतन्निश्चिनुमः—यत्र वृक्षसंयुक्तकुठारोपरि कुठारान्तरसमाहननेन वृक्षच्छेदो जातस्तत्र छेदनं प्रति तदव्यवहितपूर्वकालवर्ती संयोगः एव व्यापारः, तद्वान् प्रथमकुठार एव च करणम्, द्वितीयकुठारश्चान्यथासिद्धः, तथा तस्य समुद्यमननिपातनादिकं कार्यस्य सहकारित्वभाजनमित्यस्माकं वक्तव्यसारः।

शोध-पत्रम्—

# आदिकाव्येऽपाणिनीयानि क्रियारूपाणि

डॉ० देसराज शर्मा

ठाकुर केशोदास महाविद्यलय, ढलियारा, (कांगड़ा) हि० प्र०

आदिकाव्ये २०१०० तिङन्तक्रियारूपाण्युपलभ्यन्ते। एतेभ्यः क्रियारूपेभ्यः कानिचित् क्रियारूपाण्येतादृशानि सन्ति येषु अपाणिनीयः प्रयोगः उपलभ्यते। पुरुषवचनक्रमेणैतेषामनियमितक्रियारूपाणां विवरणमधोलिखितप्रकारेणास्ति—

## प्रथमपुरुषैकवचनम्—

जागृधातोः लङ्लकारप्रथमपुरुषैकवचनस्य पाणिनीयरूपम् अजागः भवति, परं रामायणेऽस्य स्थाने अन्वजाग्रत्[1] रूपमुपलभ्यते। अस्मिन्ननियमितप्रयोगे गुणाभावः शप्प्रयोगश्चापाणिनीयोऽस्ति। लिट्लकारप्रथमपुरुषैकवचने वृद्धिरवश्यं भवति[2] न तु वैकल्पिका। परमादिकाव्यस्य जुहव[3] रूपे वृद्धेरभावः प्राप्यते। अस्य रूपस्य पाणिनीयरूपं जुहाव अस्ति।

## मध्यमपुरुषद्विवचनम्—

छिद्धातोः लङ्लकारप्रथमपुरुषे द्विवचनस्य पाणिनीयरूपम् अच्छिन्ताम् भवति, परमादिकाव्येऽस्य स्थाने अव्यवस्थितरूपम् अच्छिन्दतामुपलभ्यते[4]।

---

१. गुहोऽपि सह सुतेन सौमित्रिमनुभाषयन्।
अन्वजाग्रत् ततो राममप्रमत्तो धनुर्धरः॥ २. ४४. २६

२. क्ङिति च। अष्टा०, १. १. ५

३-क. तथोक्तो राक्षसेन्द्रेण प्रतिगृह्य पितुर्वचः।
यज्ञभूमौ स विधिवत् पावकं जुहवेन्द्रजित्॥ ६. ९.७४

ख. स होतुकामो दुष्टात्मा गतश्चैत्यं निकुम्भिलाम्।
निकुम्भिलामधिष्ठाय पावकं जुहवेन्द्रजित्॥ ६.६९.२३

४. ततस्तौ देशकालज्ञौ खड्गाभ्यामेव राघवौ।
अच्छिन्दतां सुसंहृष्टौ बाहू तस्यांसदेशयोः॥ ३. ६६. ५

## प्रथमपुरुषद्विवचनं बहुवचनं च—

लिट्लकारप्रथमपुरुषद्विवचने च धातोर्गुणो न भवति परं रामायणे कृत्, दृश्, सृज्, स्पृश्, वृष्, हृष् इत्येतेषां धातूनां क्रमशः निचकर्तंतुः,[५] ददर्शतुः[६] विससर्जतुः,[७] पस्पर्शतुः,[८] ववर्षुः,[९] जहर्षिरे[१०] इत्येतानि गुणयुक्तानि क्रियारूपाणि प्राप्यन्ते। एषां पाणिनीयरूपाणि निचकृततुः, ददृशतुः, विससृजतुः, पस्पृशतुः, ववृषुः, जहृषिरे च भवन्ति। पाणिनिमतानुसारेण यदि धातोः पूर्वं द्वित्वं न स्यात् तर्हि लिट्स्थानीय-प्रत्ययपरे सति हलादि धातोः प्रथमैकाचोऽजादिधातोश्च द्वितीयैकाचो द्वित्वं भवति,[११] परमादिकाव्ये एतादृशानि क्रियारूपाण्यप्युपलभ्यन्ते यत्रोपरोक्तावस्थायामपि द्वित्वाभावो विद्यते। विश्, विद्, शंस्,

---

५. अतिमात्रं शरौघेण दीप्यमानौ नरोत्तमौ।
तानिषून् पततो भल्लैरनेकैर्निचकर्ततुः॥ ६. ६७. ३०

६-क. अथ तौ समतिक्रम्य क्रोशमात्रे ददर्शतुः।
महान्तं दारुणं भीमं कबन्धं भुजसंवृतम्॥ ३. ६५. २२

ख. त्वामेव मार्गमाणौ तौ विचरन्तौ वसुन्धराम्।
ददर्शतुर्मृगपतिं पूर्वजनेनावरोपितम्॥ ५. ३३. २२

७. एवमुक्तौ तु तौ वीरौ कबन्धेन नरेश्वरौ।
गिरिप्रदरमासाद्य पावकं विससर्जतुः॥ ३. ६८. १

८. प्रच्छादयन्तौ गगनं शरजालैर्महाबलौ।
तमस्त्वैः सुरसंकाशौ नैव पपस्पर्शतुः शरैः॥ ६. ६७. २३

९-क. राक्षसा मथिताः केचिदवानरैर्जितकाशिभिः।
ववर्षू रुधिरं केचिन्मुखै रुधिरभोजनाः॥ ६. ४२. १०

ख. मेघाश्च खरनिर्घोषा रथस्योपरि रक्षतः।
ववर्षू रुधिरं चास्य सिषिचुश्च पुरःसरान्॥ ६. ४२. ३६

१०. अवेक्ष्य सौमित्रिमरोगमुत्थितं।
मुदा ससैन्याः सुचिरं जहर्षिरे॥ ६. ७९. १७

११. लिटि धातोरनभ्यासस्य। अष्टा०, ६. १. ८,

धातूनां विशतुः,[12] विदुः,[13] शंसुः,[14] आशंसुः[15] इत्येतानि क्रियारूपाणीदृशान्येव सन्ति। एतेषां पाणिनीयरूपाणि विविशतुः, विविदुः, शशंसुः, आशशंसुः भवन्ति।

## प्रथमपुरुषबहुवचनम्—

लट्लकारप्रथमपुरुषबहुवचनस्य ब्रुवते इत्येतत् पाणिनीयरूपस्य स्थानेऽपाणिनीयरूपं अतिब्रुवन्ते[16] उपलभ्यते। णिजन्त-दीप् धातोः आदीप्यन्त[17] इत्येतस्य लङ्लकारस्य रूपे विकरणात् पूर्वं गुणाभावोऽपाणिनीयोऽस्ति। अत्र चेद् गुणसत्ता स्यात् तर्ह्येकाक्षाराधिक्येन छन्दोभंगः स्यात्। लौकिक्यां सार्वधातुक-लकारेषु धातोरनन्तरमेकस्यैव विकरणस्य प्रयोगो भवति परं वैदिकानां धातूनामेकाधिकविकरणयुक्तानि क्रियारूपाण्यप्युपलभ्यन्ते[18] यथा नेषतु [नी+ष+अ+तु], तरुषेम [तृ+उ+ष+अइम] इत्यादयः। आदि-काव्ये एतादृशाः प्रयोगाः प्राप्यन्ते। लङ्-लकारे भीधातोः अबिभ्यन्[19] रूपे

---

१२. अन्योन्यं लम्बितकरौ ततस्तौ हरिराक्षसौ।
किष्किन्धां विशतुर्हृष्टौ सिंहौ गिरिगुहामिव॥ ७. ३४. ४१

१३-क. तानि सर्वाणि रामाय आनीय हरियूथपाः।
संहृष्टा दर्शयामासुर्गतिं तु न विदुस्तव॥ ५. ३३. ३६

ख वीर-पार्थिवपत्नीनां ये विदुर्भर्तृपूजिताम्।
तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः॥ ६. ३८. ४

१४. दीप्यमाने ततस्तस्य लाङ्गूलाग्रे हनुमतः।
राक्षस्यस्ता विरूपाक्ष्यः शंसुर्देव्यास्तदप्रियम्॥ ६.५१.२०

१५. ऋषयश्च महात्मानो यमुनातीरवासिनः।
द्रुतं लवणमाशंसुः शत्रुघ्नस्याभिषेचनात्॥ ७. ५५. १८

१६. परस्परं केचिदुपाश्रयन्ति।
परस्परं केचिदतिब्रुवन्ते॥ ५. ५९. १५

१७. राक्षसा सिद्धसंनाहास्ततस्ते चण्डविक्रमाः।
तदादीप्यन्त मे पुच्छं हनन्तः काष्ठमुष्टिभिः॥ ५. ५६. १३

१८. भट्टोजिदीक्षित, सिद्धान्तकौमुदी, वैदिकी प्रक्रिया, पृष्ठ ३९५

१९. पूज्यते नित्यशः सौम्य भयार्तै रघुनन्दन।
अबिभ्यंश्च त्रयो लोका सरोषस्य महात्मनः॥ ७. ७. ८६

जुहोत्यादिगणस्य श्लु [ साभ्यासविकरण। ] भ्वादिगणस्य च शप् एतयोः द्वयोः विकरणयोः प्रयोगोऽस्ति । अस्य पाणिनीयरूपं अबिभयु। अस्ति ।

पाणिनिना धातुं प्रत्ययं चान्तराऽस्य विकरणस्य विधानं लृट्-लकारे कृतं[20] न तु लोट् लकारे परमादिकाव्ये लोट्लकारस्य विनेष्यन्तु,[21] वत्स्यन्तु[22] रूपयोः लृट् लकारस्य विकरणः प्रयुक्तोऽस्ति ।

## मध्यमपुरुषैकवचनम्—

लट् - लकारमध्यमपुरुषैकवचने भी - धातोः बिभ्यसे[23] रूपेऽपि जुहोत्यादिगणस्य श्लु [द्वित्वप्रयोजकविकरणः] भ्वादिगणस्य च शप् विकरणस्य प्रयोगो वर्तते । पाणिनिना लोट्लकारे अडागमो न मतः[24] परमादिकाव्यस्य अभ्यभाष[25] रूपेऽडागम उपलभ्यते । अडागमप्रत्ययसम्बन्ध्यनियमिततायाः परिहारार्थं चेदिदम् रूपं लङ् लकारस्य मन्येत तर्ह्यत्र लोडर्थे लङ् प्रयोगो मन्येत ।

---

२०. स्यतासी लृलुटोः । अष्टा०, ३, १, ३३

२१. शीघ्रमेव हि राक्षस्यो विकृता घोरदर्शनाः ।
दर्पमस्या विनेष्यन्तु मांसशोणितभोजनाः ॥ ३. ५४. २४

२२. यावद् रामकथा वीर चरिष्यति महीतले ।
तावच्छरीरे वत्स्यन्तु प्राणा मम न संशयः ॥ १.७.३९

२३. इह शाखामृगाः सिंहा द्वीपिव्याघ्रमृगास्तथा ।
ऋक्षास्तरक्षवः कङ्काः कथं तेभ्यो न बिभ्यसे ॥ ३. ४४. २८

२४. स्यतासी लृलुटोः । अष्टा०, ३.१.३३

२५. तमभ्यभाष सौमित्रे सुग्रीवं सचिवं कपिम् ।
वाक्यज्ञं मधुरैर्वाक्यैः स्नेहयुक्तमरिंदमम् ॥ ४. ३. २५

गुप्, ब्रू, भी णिजन्तसिच् धातूनां पाणिनीयरूपाणि क्रमशः गोपाय, ब्रूहि, मा भैषीः अभिषेचय भवन्ति परं रामायणे एतेषामनियमितरूपाणि गोपय,[२६] ब्रवीहि,[२७] मा भैः[२८] अभिषिञ्चय[२९] उपलभ्यन्ते ।

## मध्यमपुरुषबहुवचनम्—

चिधातोः परस्मैपदस्य चिनुत, आत्मनेपदस्य विचिनुध्वम्, ब्रू धातोः च ब्रूध्वम् इत्येतेषां पाणिनीयरूपाणां स्थाने क्रमशः अपाणिनीयक्रियारूपाणि विचिन्वथ,[30] विचिन्वध्वम्,[31] ब्रुवध्वम्[32] चोपलभ्यन्ते । विचिन्वध्वम् रूपे स्वादिगणस्य "नु" भ्वादिगणस्य च शप् विकरणः प्रयुक्तोऽस्ति । द्रक्ष्यध्वम्,[33]

---

२६. तस्य छिद्राणि मार्गस्व स्वच्छिद्राणि च लक्षय ।
चक्षुषा धनुषाऽऽत्मानं गोपय समाहितः ।। ६. ४७. ४८

२७-क. ब्रवीहि कोऽद्यैव मया वियुज्यतां, तवासुहृत्प्राणयशः सुहृज्जनैः ।
यथा तवेयं वसुधा वशेभवे, तथैव मां शाधि तवास्मि किंकरः ।।
२. २०. ३५

ख. उपपन्नं च युक्तं च वचनं तव मैथिलि ।
प्रीता चास्म्युचितं किं ते करवाणि ब्रवीहि मे ।। २.११०.१५

२८. उत्पातवाताभिहता नानाद्विजगणायुताः ।
मा भैरिति विधूताग्रा व्याजहुरिव पादपाः ।। ३.५०.३२

२९. स नः समीक्ष्य द्विजवर्यवृत्तां, नृपं विना राज्यमरण्यभूतम् ।
कुमारमिक्ष्वाकुसुतं वदान्यं, त्वमेव राजानमिहाभिषिञ्चय ।।
२. ६१. २५

३०. काम्बोजयवनांश्चैव शकानां पत्तनानि च ।
अन्वीक्ष्य दरदांश्चैव हिमवन्तं विचिन्वथ ।। ४. ४२. १२

३१. तद् गच्छत विचिन्वध्वम् पुत्रका भद्रमस्तु वः ।
समुद्रमालिनीं सर्वां पृथिवीमनुगच्छत ।। १. ३८. १३

३२. न हि वो गमने संगः कदाचिदपि कस्यचित् ।
ब्रुवध्वं यस्य या शक्तिर्गमने प्लवगर्षभाः ।। ४. ६३. २३

३३. महामेरुप्रकाशं मां द्रक्ष्यध्वं प्लवंगमाः ।
दिवमावृत्य गच्छन्तं ग्रसमानमिवाम्बरम् ।। ४. ६६. १८

भविष्यध्वम्,[३४] रूपयोः लृट्लकारस्य स्य विकरणस्य प्रयोगमपाणिनीयमस्ति। "द्रक्ष्यध्वम्" रूपं भविष्यदर्थे प्रयुक्तोऽस्ति तथापि "ध्वम्" प्रत्ययस्य योगात् अयं लोट्लकारस्य प्रयोगः मतः, यतो ध्वम् प्रत्ययस्य योगो धातुना सह लोट्लकारे भवति न लृट्लकारे। लृट्लकारे ध्वे प्रत्ययः एव प्रयुज्यते परं तथापि अस्मिन् रूपे दृश् धातोः पश्यादेशे, पदव्यत्ययलकारार्थव्यत्यय-सम्बन्धिन्योऽनियमितता अवशिष्यन्ते एव। लृट्लकारे चेत् वयं ध्वे प्रत्ययस्य स्थाने अपाणिनीयं ध्वम् प्रत्ययं मन्यामहे तदा केवलं पदव्यत्ययसम्बन्ध्य-नियमितता एवावशिष्यते या रामायणभाषाया एका सामान्या अनियमितता अस्ति।

## उत्तमपुरुषैकवचनम्—

उत्तमपुरुषैकवचने कृ, दा, ब्रू, धातूनां करोमि, ददामि, ब्रवीमि इत्येतेषां पाणिनीयरूपाणां स्थाने क्रमशः कुर्मि,[३५] दद्मि,[३६] ब्रूमि[३७] इत्येतानि

---

३४. प्रतिगृह्य च काकुत्स्थः समालभ्य च पाणिना।
मानसा मे भविष्यध्वमिति तान्यभ्यचोदयत्॥ १. २६. १४

३५-क. असंदेशात्तु रामस्य तपसश्चानुपालनात्।
न त्वां कुर्मि दशग्रीव भस्म भस्मार्हतेजसा॥ ५. २०. २०

ख. सोऽहं भगवतः श्रुत्वा देवदेवस्य निश्चयम्।
आहारं गर्हितं कुर्मि स्वशरीरं द्विजोत्तम॥ ७. ६९. २०

३६-क. प्रस्वापनप्रशमने दद्मि सौरं च राघव।
दर्पणशोषणं चैव संतापनविलापने॥ १. २६. १५

ख. मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम्।
सौमित्रे योऽहमम्बाया दद्मि शोकमनन्तकम्॥ २. ४७. २१

ग. किमग्नौ निपताम्यद्य आहोस्विद्वडवामुखे।
शरीरमाहो सत्त्वानां दद्मि सागरवासिनाम्॥ ५. ३३. ९

घ. अहमत्यत्र ते दद्मि वरं शस्त्रभृतां वर।
अर्घ्यं प्रतिगृहाणेदमयोध्यां श्वो गमिष्यसि॥ ६. ११२. १५

३७-क. मन्युर्न च त्वया कार्यो देवि ब्रूमि तवाग्रतः। २. १६. ३०

ख. हितं वयस्यभावेन ब्रूमि नोपदिशामि ते। —४. ७. १३

ग. हितं पथ्यमहं ब्रूमि दीयतामस्य मैथिली। ६. ९. २०

क्रियारूपाणि उपलभ्यन्ते एतत् प्रतीयते यदेतानि क्रियारूपाणि प्राचीन-संस्कृतभाषायां प्रचलितानि आसन् यानि लौकिक्या आदिग्रन्थेऽपि निजास्तित्वं नात्यजन् । एष्वधिकांशरूपेष्वियमनिमितता छन्दोभंगस्य कारणादस्ति । णिजन्त - वृ धातोः वारयामि रूपस्य स्थानेऽपाणिनीयं वार्यामि[३८] रूपमुपलभ्यते ।

## उत्तमपुरुषद्विवचनम्—

लट्लकारोत्तमपुरुषद्विवचने छिन्दवहे रूपस्य स्थाने अपाणिनीयं छिन्दावहे[३९] रूपमुपलभ्यते ।

## उत्तमपुरुष-बहुवचनम्—

लट्लृट्लकारयोः उत्तमपुरुषबहुवचने धातुना सह मस् प्रत्ययः प्रयुज्यते परमादिकाव्ये लट्लकारे स्म,[४०] गच्छाम,[४१] अनुगच्छाम,[४२] प्रतिगच्छाम,[४३]

---

३८. वार्यामि त्वां निरीक्षन्तो त्वयि पञ्चत्वमागते ।
उद्बबर्ह शरं नीलस्तस्य गात्रगतं तदा ॥ ४. २३. १६

३९. त्वां च मां च पुरा तूर्णमादत्ते राक्षसाधम ।
तस्मादसिभ्यामस्याशु बाहू छिन्दावहे गुरू ॥ ३. ६६. ४

४०-क. अन्नं हि विधिवत्स्वादु प्रशसन्ति द्विजर्षभा: ।
अहो तृप्ता स्म भद्रं ते इति शुश्राव राघव: ॥ १. १३. १२

ख. १.१३.२९, १.२७.११, १. ३२. ३, १. ६४. ११, २. ६. २२, २. १५. ६, २. ४८. ६, २. ४९. ७, २.५१.१०, २.५२.२०, २.८६.६, २.८७.७, २.९३.८, ३.७.५, ३.९.१०, ३.११.९२, ३.१४.२, ४.१४.१५, ४.३४.२३, ४.३९.३७, ५.५४.१९, ६. ८. ३, ६. २६. ६, ६.५४. १९, ७. ६. २६, ७. २२. ११, ७.२४.१६, ७.७३.१३, ७.१०८.२१.

४१-क. अस्माद् गच्छाम किष्किन्धां क्षिप्रं गच्छ त्वमग्रत: ।
गत्वा चाह्वय सुग्रीव बालिनं भ्रातृगन्धिनम् ॥ ४.१२.१३

ख. पौरेषु यदि ते प्रीतिर्यदि स्नेहो ह्यनुत्तमः ।
सपुत्र-दाराः काकुत्स्थ समं यच्छाम सत्पथम् ॥ ७.९७.१३

४२. उद्यानानि परित्यज्य क्षेत्राणि च गृहाणि च ।
एकदुःखसुखा राममनुगच्छाम धार्मिकम् ॥ २.३०.१६

४३. इत एव पथा क्षिप्रं प्रतिगच्छाम तां पुरीम् ।
अयोध्यामायतो ह्येष: पन्था: परमदुर्गमः ॥ ६.१०९.७

विचराम,[४४] पश्याम,[४५] अभिनन्दाम,[४६] विभजाम,[४७] मार्गाम[४८] याम,[४९] अभिप्रयाम[५०] रूपेषु मस् स्थाने म प्रत्ययः प्रयुक्तोऽस्ति। एवं लृट्लकारस्य प्राप्स्याम,[५१] करिष्याम,[५२] मार्गयिष्याम,[५३] द्रक्ष्याम,[५४] वत्स्याम[५५] रूपेष्वपि

---

४४. ते वयं प्रच्युता राज्यात्कैकेय्यास्तु कृते त्रयः।
विचराम द्विजश्रेष्ठ वनं गम्भीरमोजसा ॥ ३.४५.१८

४५-क. अलं हि भुक्तेन परमार्थैरलं च नः।
यथा पश्याम निर्यान्तं रामं राज्ये प्रतिष्ठितम् ॥ २.१५.७

ख. तस्मादाहारवीर्येण निसर्गेण च वानराः।
आयोजनशतात्साग्राद्वयं पश्याम नित्यशः ॥ ४.५७.२९

४६. अभिनन्दामि ते सर्वे संश्रुत्येन्द्रजितो वधम्।
अवध्यः सर्वभूतानां महामायाधरो युधि ॥ ७.१.३०

४७. विशस्येमान् ततः सर्वान् समान्काकुत्स्थपिण्डकान्।
विभजाम ततः सर्वा विवादो मे न रोचते ॥ ५.२.३९

४८. प्राणत्यागविशङ्केन कृतं तेन तव प्रियम्।
तस्य मार्गाम वैदेहीं पृथिव्यामपि चाम्बरे ॥ ४.२८.२२

४९-क. तेष्वेवं हतवीरेषु राक्षसेषु हनुमता।
किमन्यदत्र कर्तव्यं गृहीत्वा याम जानकीम् ॥ ५.५८.२०

ख. स्वस्ति प्राप्नुहि भद्रं ते साधु याम नरर्षभ।
अगस्त्यस्याश्रमपदं द्रष्टुमिच्छाम राघव ॥ ७.६७.१६

५०. उत्तराफाल्गुनी ह्यद्य श्वस्तु हस्तेन योक्ष्यते।
अभिप्रयाम सुग्रीव सर्वानीक-समावृताः ॥ ६.४.४

५१. तेषां चिन्तयतां राम बुद्धिरासीद्विपश्चिताम्।
क्षीरोदमथनं कृत्वा रसं प्राप्स्याम तत्र वै ॥ १.४४.१६

५२. न पश्यामहेऽश्वं तमश्वहर्तारमेव च।
किं करिष्याम भद्रं ते बुद्धिरत्र विचार्यताम् ॥ १.३९.८

५३-क. नैवायोध्यां गमिष्यामो न गमिष्याम दण्डकान्। २.८५.५५

ख. मा विनाशं गमिष्याम अप्रसाद्यादिते सुताः। ७.३५.६३

५४. संयच्छ वाजिनां रश्मीन् सूत याहि शनैः शनैः।
मुखं द्रक्ष्याम रामस्य दुर्दर्शं नो भविष्यति ॥ २.३५.१९

५५. इदं पुण्यमिदं रम्यमिदं बहुमृगद्विजम्।
इह वत्स्याम सौमित्रे सार्धमेतेन पक्षिणा ॥ ३.१४.१९

मस् प्रत्ययस्य स्थाने म प्रत्ययस्य योगो विद्यते । लृट्लकारस्यैतादृशानि क्रियारूपाणि इच्छार्थकलृट्लकारस्य रूपे प्रयुक्तानि सन्ति ।

विधिलिङ्लकारे म प्रयुज्यते परमादिकाव्यस्य स्यामः,[५६] सम्प्राप्नुयामः[५७] रूपयोः "म" स्थाने मस् प्रत्ययस्य प्रयोगः प्राप्यते ।

उपरोक्ताध्ययनेन स्पष्टं भवति यत् न केवलं वैदिक्यां अपितु लौकिके आदिकाव्येऽपि प्रत्ययव्यत्यय-सम्बन्ध्यनियमितता प्राप्यते । रामायणस्य न केवलं कर्तृवाच्यस्य क्रियारूपेषु परं कर्मवाच्यस्य क्रियारूपेष्वपि प्रत्ययव्यत्ययः प्राप्यते । भाववाच्ये कर्मवाच्ये च धातुना सह आत्मने पदस्य प्रत्ययानां प्रयोगो भवति[५८] परमादिकाव्ये संध्रियन्तु,[५९] हीयेत्,[६०] ह्रियेयम्[६१] इत्येतेषु कर्मवाच्यस्य रूपेषु परस्मैपदस्य प्रत्यया प्रयुक्ता दृश्यन्ते ।

## पुरुषव्यत्ययसम्बन्ध्यनियमितता—

आदिकाव्ये कानिचिदेतादृशानि क्रियारूपाण्यप्युपलभ्यन्ते येषु पुरुषव्यत्ययो दृश्यते । चिक्षेपिथ,[६२] योजयः,[६३] न्ययोजयः[६४] रूपेषु प्रथमपुरुषैकवचनस्य

---

५६. ततस्तेषां नरश्रेष्ठ बुद्धिरासीन्महात्मनाम् ।
अमरा निर्जराश्चैव कथं स्यामो निरामयाः ॥ १.४४.१५

५७. दुष्प्रापं ब्रह्मलोकं वा प्राप्नुमो युधि सूदिताः ।
संप्राप्नुयाम कीर्ति वा निहत्वा शत्रुमाहवे ॥ ६.५४.२२

५८. भावकर्मणोः । अष्टा०, १.३.१३

५९. गुरूणां वचनाच्छीघ्रं संभाराः संध्रियन्तु मे ।
समर्थाधिष्ठितश्चाश्वः सोपाध्यायो विमुच्यताम् ॥ १.११.१४

६०. कामं त्वमपि पर्याप्तो निहन्तुं सर्वराक्षसान् ।
राघवस्य यशो हीयेत् त्वया शरास्तैस्तु राक्षसैः ॥ ५.३५.५७

६१. परित्यक्ता वसिष्ठेन किमहं सुमहात्मना ।
याहं राजभृतैर्दीना ह्रियेयं भृशदुःखिता ॥ १.५३.७

६२. स तं प्रदीप्तं चिक्षेपिथ दर्भं तं वायसं प्रति ।
ततस्तु वायसं दर्भः सोऽम्बरेऽनुजगाम ह ॥ ५.३६.२७

६३. स दर्भसंस्तराद् गृह्य ब्रह्मणोऽस्त्रेण योजयः ।
स दीप्त इव कालाग्निर्जज्वालाभिमुखो द्विजम् ॥ ५.३६.२६

६४. स दर्भसंस्तराद् गृह्य ब्रह्मास्त्रेण न्ययोजयः ।
स दीप्त इव कालाग्निर्जज्वालाभिमुखं खगम् ॥ ५.६५.१२

कर्ता अस्ति परं एषु रूपेषु मध्यमपुरुषैकवचनस्य क्रियायाः प्रयोगः पुरुषव्यत्यय-सम्बन्ध्यनियमितातायाः परिचायकोऽस्ति। इतो विपरीतं वधिष्यति[६५] रूपे मध्यमपुरुषैकवचनस्य कर्तरि सत्यपि प्रथमपुरुषैकवचनस्य क्रिया प्रयुक्ता दृश्यते। एवं प्रथमपुरुषैकवचनस्य कर्त्रा सहोत्तमपुरुषैकवचनस्य जुहव[६६] क्रिया प्रयुक्ता अस्ति। हु धातोः प्रथमपुरुषैकवचने वृद्धिरनिवार्या भवति न तु वैकल्पिका। अस्मिन् रूपे छन्दोभंगस्य कारणात् वृद्ध्यभावोऽस्ति।

## वचनव्यत्ययसम्बन्ध्यनियमितता—

रामायणे स्वं प्रति आदरभावप्रदर्शनार्थं वचनव्यत्यययुक्तानि क्रिया-रूपाण्यपि प्रयुक्तानि दृश्यन्ते। लट्लकारस्य मन्यामहे[६७] रूपे उत्तमपुरुषैक-वचनस्य कर्ता [रावण:] स्वं प्रति अत्यादरस्य भावं द्योतयितुं उत्तमपुरुष-बहुवचनस्य क्रियायाः प्रयोगं करोति। एवं मोहयिष्यामहे[६८] इति रूपे द्विवचनस्य कर्त्ता विद्यते परं आदरभावे उत्तमपुरुषबहुवचनस्य क्रिया प्रयुक्ता अस्ति।

## लकारव्यत्ययः—

आदिकाव्ये न केवलं तिङ् व्यत्ययः अपितु लकारव्यत्ययोऽपि प्राप्यते। वक्ष्यन्ते[६९] रूपे लडर्थे लृट्लकारस्य प्रयोगो विद्यते। अस्य समुचितरूपं

---

६५. श्वः प्रभाते तु लवणं वधिष्यति न संशयः।
अगृहीतायुधं क्षिप्रं ध्रुवो हि विजयस्तव॥ ७.६७.२३

६६-क. तथोक्तो राक्षसेन्द्रेण प्रतिगृह्य पितुर्वचः।
यज्ञभूमौ स विधिवत् पावकं जुहवेन्द्रजित्॥ ६.६७.४

ख. स होतुकामो दुष्टात्मा गतश्चैत्यं निकुम्भिलाम्।
निकुम्भिलामधिष्ठाय पावकं जुहवेन्द्रजित्॥ ६.६९.२१

६७. एतान्यन्यानि दुष्टानि निमित्तान्युत्पतन्ति च।
विष्णुं मन्यामहे रामं मानुषं रूपमास्थितम्॥ ६.२६.३१

६८. विद्युज्जिह्वं मायाज्ञमब्रवीद् राक्षसाधिपः।
मोहयिष्यामहे सीतां मायया जनकात्मजाम्॥ ६.२२.७

६९-क. अद्य चन्द्रोऽभ्युपगमत् पुष्यात् पूर्वं पुनर्वसुम्।
श्वः पुष्ययोगं नियतं वक्ष्यन्ते दैवचिन्तकाः॥ २.४.२१

ख. Dr. Satyavrat : The Rāmāyaṇa, A Linguistic Study, Page 236.

ब्रुवन्ति अस्ति । एवं पालये[70] रूपे विधिलिङर्थे लट्लकारस्य, ईयात्[71] रूपे च विधिलिङर्थे आशीर्लिङ्लकारस्य प्रयोगो विद्यते । इतो विपरीतं प्रयुञ्जीयात्[72] रूपे लृडर्थे विधिलिङ्लकारः प्रयुक्तोऽस्ति ।

अनेन शोधेन स्पष्टं भवति यत् न केवलं वैदिक्यां परं लौकिके आदिकाव्ये रामायणेऽपि तिङ्लकारव्यत्यय उपलभ्यते ।



---

७०. या या मे जायते बुद्धिर्येषु येष्वाश्रमेषु च ।
सा सा भवतु धर्मिष्ठा तं तं धर्मं च पालये ॥ ७.१०.२७

७१. पठन् द्विजो वागृषभत्वमीयात्,
स्यात् क्षत्रियो भूपतित्वमीयात् ।
वणिग्जनः पुण्यफलत्वमीयाज्
जनः शूद्रोऽपि महत्त्वमीयात् ॥ १.१.७९

७२. कृत्वा तु तन्महाप्राज्ञः सभविष्यं सहोत्तरम् ।
चिन्तयामास कोन्वेतत् प्रयुञ्जीयादिति प्रभुः ॥ १.४.१२

## ग्रन्थसमीक्षा—

ग्रन्थ नाम— **पाणिनीय-शब्दार्थसम्बन्ध-सिद्धान्तः**

लेखकः—**डॉ० नरदेवः शास्त्री**, हिमाचलप्रदेश विश्वविद्यालय, शिमला। प्रकाशकः—पिपठिषु प्राच्यविद्याप्रतिष्ठानम्, १८/५५०, विजय पार्क (आनन्द विहार), मौजपुर, दिल्ली-५३, मूल्यम्—२५०-००, पृष्ठानि—३५०+५०।

पाणिनीयं शब्दानुशासनं शब्दान्वाख्यानपरकं स्थितस्य गतिं चिन्तयति। स स्थितो विषयो द्विविधः—(१) शब्दसिद्धिपरकः, (२) शब्दबोधीयजिज्ञासा-प्रशमनपरकश्च। प्रथमो विषयो व्युत्पत्तिमाश्रयति द्वितीयश्च दार्शनिकचिन्तनम्। अतोऽत्र शब्दसिद्धिप्रक्रिया निरूप्यते शाब्दार्थतत्सम्बन्धशाब्दबोधाद्युपायश्च वर्ण्यते। उच्चरितप्रध्वंसि-शब्दस्तु न शाब्दबोधाधारो भवितुमर्हति, अतः कः शाब्दबोधाधारः? इत्यादि जिज्ञासाप्रशमनाय वैयाकरणैर्यो विचारः प्रस्तुतः सोऽस्य दार्शनिकः पक्षः। विशेषतः पस्पशायां वाक्यपदीयादौ च वर्णितो विचारो व्याकरणस्य दर्शनत्वसाधकः।

पूर्वोक्तो द्विविधोऽपि पक्षो यथा पाणिनीयव्याकरणस्य प्रौढस्तथा नान्यस्य। अत एवोच्यते—

**पाणिनीयं महाशास्त्रं कृत्स्नं त्याज्यं न किञ्चन।**

उभयपक्षस्य प्रतिपादनसौष्ठवादिदं व्याकरणं समीक्षकैर्महाशास्त्रमाख्यातं पातञ्जलं च सर्वन्यायबीज-निबन्धनं सूत्रवार्तिकादिव्याख्यानमर्थगाम्भीर्याद् गभीरं शब्दसौष्ठवादुत्तानं महाभाष्यमित्युच्यते। अन्यत् सर्वं व्याख्यानं केवलं भाष्यम्, एतत्तु महाभाष्यमिति यत् कथ्यते तत्र मूलमस्य शब्दविषयकदार्शनिक-चिन्तनमेव। माघः कथयति—

**अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना।**
**शब्दविद्येव नो भाति राजनीतिरपस्पशा॥**

पाणिनीयव्याकरणस्य व्युत्पत्तिपक्षचिन्तनं यथा बुद्धेश्चरमो विकास-स्तथास्य शब्दादिविषयकं दार्शनिकचिन्तनमपि मनीषिणां मनीषायाः परमा

प्रकाशः समुल्लासश्च विचारवीचीनाम् । अतएव पाणिनीयं व्याकरणं न केवलं वेदाङ्गेषु मुखं किन्तु दर्शनेषूत्तमं दर्शनमपि । व्याकरणसूत्रवार्तिकादीनां रचयितॄणां पाणिन्यादीनां व्याख्यातॄणां पतञ्जलिभर्तृहरिकैयटनागेशादीनां च ग्रन्थानां गभीराध्ययनेन विदितमेव— व्याकरणमिदं दार्शनिकमाधारमाश्रित्य विरचितमस्तीति ।

शब्दादि-विषयकं दार्शनिकचिन्तनं दर्शनेष्वन्यत्रापि यत्र तत्र विकीर्णं वर्तते तस्य सर्वस्य तात्पर्यप्रतिपादनसमीक्षणसम्पृक्तः पाणिनीयव्याकरणदिशा शब्दार्थसम्बन्धसिद्धान्तस्य प्रौढ्या प्रतिपादकोऽयं ग्रन्थ **आचार्येण डॉ० नरदेव-शास्त्रिणा** लिखितः सर्वतो भावेन स्तुत्यः **पाणिनीय - शब्दार्थ - सिद्धान्तो-ऽन्वर्थनामा** च । विषयस्य साकल्येन समुपस्थापनादाकर इव शोधार्थिनां जिज्ञासूनामयं महत उपकाराय सम्पत्स्यत इति मम विश्वासः । पाणिनीयार्थविदा विदुषा लेखकेनात्र प्रतिपाद्यो विषयः परमगंभीरोऽपि हस्तामलकीकृतः । गुरुमुखादध्ययनेन सततं समाहितमनसा मननेन साभि-निवेशाध्यापनेन च क्लिष्टोऽपि विषयो यथाऽऽत्मसाद्भवति यथा च सरलशैल्योपस्थापयितुं शक्यते, एतस्य निदर्शनभूतोऽयं ग्रन्थः । नामूलमत्र किञ्चिदुक्तम् । यदुक्तं तत्सर्वमुद्धरणेन तदाकरादिनिर्देशसहितेन युक्तया च समर्थितम् । अतो यत्राऽयं ग्रन्थः शोधार्थिनामुत्तमो निश्चप्रचं मार्गदर्शको जिज्ञासूनां जिज्ञासापूरकश्च तत्रास्य महामूल्यमेव चिन्त्यम् ।

शब्दादिसम्बद्धानां दार्शनिकविचाराणां वैयाकरणैस्तद्भिन्नाचार्यैः प्राचीनैराधुनिकैश्च विहितानां वर्गीकरणसहितं यथायथं प्रस्तुतीकरणं तत्समीक्षणं सिद्धान्तस्थापनञ्चास्य वैशिष्ट्यानि कं न चमत्कुर्वन्ति ? पदे-पदे शास्त्रपरम्परागौरवोन्मग्नो ग्रन्थकारोऽद्धैव शास्त्र - समर्पित - हृदयान् विज्ञान् समाकर्षति सुतराम् ।

अलमत्र कथनविस्तरेण, निर्मल आदर्श इव सर्वं रहस्य-प्रतिबिम्बमयं स्वयं प्रस्तौति पाठकस्य समक्षं गतः । गुणैकपक्षपातिभिः ज्ञानोपासकैश्चास्य समादरोऽवश्यं विधास्यते । अहञ्चास्य सर्वतोभावेन प्रचारप्रसारौ कामये ।

**—डॉ० हर्षनाथमिश्रः**
व्याकरण-साहित्याचार्यः, एम०ए० (सं० हिं०), पी-एच०डी०,
नवदिल्लीस्थ-श्री ला०ब०शा० केन्द्रीय संस्कृत
विद्यापीठाचार्यः, शास्त्रचूडामणिः

# पाणिनेः अष्टाध्याय्यामुपवर्णिता आचार्याः

डॉ० जीतसिंहः 'खोखरः'
प्राध्यापकः, राजकीय संस्कृत महाविद्यालयः, नाभा (पं०)

वेदाङ्गेषु[1] व्याकरणं प्रधानम्। 'व्याकरणं वेद - पुरुषस्य मुखम्' इति कथयन्ति[2] तथा च व्याकरणक्षेत्रे आचार्यपाणिनेः स्थानमक्षुण्णम्। महर्षिः पाणिनिः ४००० सूत्रैः संस्कृतस्य वैज्ञानिकव्याकरणग्रन्थं रचयित्वा सर्वेषां विदुषां कृते आश्चर्यपूर्णं कार्यं चकार। संसारे एतादृशं सर्वांगपूर्णं व्याकरणं न अन्यत्र लभ्यते। ग्रन्थोऽयमष्टस्वध्यायेषु विभक्तः, अतः 'अष्टाध्यायी'-नाम्ना प्रसिद्धः। अत्र महर्षिः पाणिनिः दशप्राचीन-व्याकरणाऽऽचार्याणां वर्णनं चकार।

## (१) आपिशलिः[3]—

'वा सुप्यापिशलेः' इति सूत्रे आपिशलेः आचार्यस्य मतमुद्धृतम्। केषुचित् स्थलेषु 'आपिशल'इत्यपि लभ्यते। भृगुवंशीय-आपिशलेराचार्यस्य समयः ३००० वि० पूर्वम्। अयं वाराणसी-वास्तव्य आसीत्। आपिशलेः व्याकरणे सर्वेभ्यः व्याकरणाचार्येभ्योऽत्यधिकानि सूत्राणि[4] सन्ति। आपिशलेः धातुपाठः, गणपाठः, उणादिसूत्राणि, शिक्षा, कोशः, अक्षरतन्त्रम्, सामप्रातिशाख्यम् इति अन्येऽपि ग्रन्था: सन्ति।

## (२) काश्यपः[5]—

३००० वि० पू० काश्यप-आचार्यस्य मूलपुरुषस्य नाम कश्यपो वर्तते यतः काश्यपशब्दो गोत्रप्रत्ययान्तोऽस्ति। काश्यपव्याकरणस्य न किमपि सूत्रं लभ्यते। अतः अस्मिन् विषये न किमपि कथयितुं शक्यते। काश्यपस्य

---

१. शिक्षा, कल्पः, व्याकरणं, निरुक्तं, छन्दः ज्योतिषं चेति वेदाङ्गानि।

२. मुखं व्याकरणं स्मृतम्।

३. वा सुप्यापिशलेः। अष्टाध्यायी, ६. १. ९२.

४. कतिपयानि सूत्राणि यथा—करोतेश्च, धेनोरञ्, विभक्त्यन्तं पदम्, मिदेश्च, अमङ्गणनम्—इत्यादयः।

५. तृषिमृषिकृषेः काश्यपस्य। अष्टा०, १.२.२५। ७.४.६७;

कल्पः, छन्दःशास्त्रम्, शिल्पशास्त्रम्, अलंकारशास्त्रम्— इत्यादयः ग्रन्था अपि विद्यन्ते ।

(३) गार्ग्यः—

पाणिनेरष्टाध्याय्यां गार्ग्यस्य त्रिवारम् उल्लेखोऽस्ति[६] । अस्य मूलपुरुषस्य नाम गर्गः आसीत् । गर्गः वैयाकरणस्य भारद्वाजस्य सुत आसीत् । यास्कोऽपि निरुक्ते अस्य वर्णनं करोति[७] । प्रश्नोपनिषदि हरिवंशे च अपि गार्ग्यस्य उल्लेखः परञ्च अयं व्याकरणस्य आचार्यात् विभिन्नः[८] । गार्ग्यस्य काल आलोचकैः ३१०० वि० पूर्वः स्वीकृतः । गार्ग्यस्य व्याकरणं सर्वाङ्गपूर्णमासीत् । प्राचीनवाङ्मये गार्ग्यस्य निरुक्तम्, सामवेदपदपाठः, भूवर्णनम्, तक्षशास्त्रम्, लोकायतशास्त्रम्, देवर्षिचरितम्, सामतन्त्रम्[९] इति इमे ग्रन्थाः मिलन्ति ।

(४) गालवः—

आचार्यगालवस्योल्लेखः अष्टाध्याय्यां चतुर्षु स्थानेषु विद्यते[१०] । गालवस्य पिता गलवः गलुः वा आसीत् इति तद्धितप्रत्ययान्तगालवशब्देन अनुमीयते । गालवस्य निरुक्ते अपि उल्लेखः । गालवस्य देशः पञ्चालः । स धन्वन्तरेश्च शिष्य आसीत् ।[११] अस्य कालोऽपि ३१०० वि० पू० आसीत् । गालवस्य व्याकरणानुसारं 'दध्यत्र', 'मध्वत्र' च स्थाने 'दधियत्र', 'मधुवत्र' च अपि साधु[१२] । अस्य आचार्यस्य ग्रन्थे नवग्रन्थाः, संहिता, ब्राह्मणम्,

---

६. ओतो गार्ग्यस्य । अष्टा०, ७. ३ २० ; अङ् गार्ग्यगालवयोः, ७.३.९९ ; नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्, ७.४.६७.

७. तत्र नामानि सर्वाण्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च । न सर्वाणीति गार्ग्यो वैयाकरणानां चैके । (निरुक्त, १.१२)

८. युधिष्ठर-मीमांसक-कृत संस्कृत-व्याकरण-शास्त्र का इतिहास, पृ० १४९ ।

९. तत्रैव ।

१०. इको ह्रस्वोऽङ्यो गालवस्य । अष्टा०, ६.३.६१ ; तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य, ७.१.७४ ; दृश्यताम्—उपरि ६.

११. संस्कृत व्याकरण शास्त्र का इतिहास, पृष्ठ १५३.

१२. इकां यण् याभिर्व्यवधानं व्याडिगालवयोरिति वक्तव्यम् । दधियत्र, दध्यत्र, मधुवत्र, मध्वत्र ।

क्रमपाठः, शिक्षा, निरुक्तम्, दैवतग्रन्थः, शालक्यतन्त्रम्, कामसूत्रम्, भूवर्णनम् इति सन्ति[13]।

(५) चाक्रवर्मा[14]—

चाक्रवर्मणः पिता चक्रवर्मा आसीत्। चाक्रवर्मा काश्यपस्य पौत्र आसीत्। अस्य आचार्यस्य समयः ३००० वि० पू० आसीत्। प्रतीयते यदेष आचार्य आपिशलेः पूर्वं बभूव। चाक्रवर्मणः व्याकरणानुसारं द्वयपदस्य सर्वनामसंज्ञा स्यात्। चाक्रवर्मणः न कोऽपि ग्रन्थ उपलभ्यते।

(६) भारद्वाजः[15]—

भारद्वाजस्य कालोऽपि ३००० वि० पू० आसीत्। अस्य पूर्वपुरुषस्य नाम भरद्वाज आसीत्। जयन्तेन भारद्वाजः चतुर्वेदाध्यायी घोषितः[16]। भारद्वाज-नामकाः अनेके पुरुषाः लभ्यन्ते परञ्च अयं भारद्वाजः इन्द्रस्य शिष्य आसीत्[17]। आचार्य-भारद्वाजेन भारद्वाजव्याकरणाद् अतिरिक्तं पाणिनेः अष्टाध्यायीमधिकृत्य वार्तिका अपि रचिताः। आयुर्वेदसंहिता अर्थशास्त्रम् च अस्य आचार्यस्य अन्यौ ग्रन्थौ स्तः।

(७) शाकटायनः—

आचार्य-शाकटायनस्योल्लेखः पाणिनेः अष्टाध्याय्यां त्रिवारं विद्यते[18]। पतञ्जलिना शाकटायनः व्याकरणस्य प्रवक्ता घोषितः। अस्य पितुः नाम शकट आसीत्[19]। शाकटायनः काण्ववंशीयः तथा च स काण्वस्य शिष्य आसीत्। अस्य वंशशिष्ययोः विषये विविधानि मतानि सन्ति परञ्च सकलम् अज्ञातमेव वर्तते। शाकटायनस्य कालः ३००० वि० पू० अवश्यं वर्तते। शाकटायनस्य व्याकरणस्य समक्षं सकलाः व्याकरणग्रन्थाः महत्त्वहीना आसन्[20]। प्रतीयते यत् शकटायनेन स्व-व्याकरणग्रन्थे सर्वेषां शब्दानां

---

१३. दृश्यताम् उपरि ११.

१४. ई चाक्रवर्मणस्य। अष्टा०, ६.१.१३०.

१५. ऋतो भारद्वाजः। अष्टा०, ७.२.६३.

१६. न्यायमञ्जरी, पृष्ठ २५९ (चतुर्वेदाध्यायी भारद्वाज इति)।

१७. संस्कृत व्याकरण शास्त्र का इतिहास, पृ० १५.

१८. लङः शाकटायनस्य ३.४.१११ ; त्रिप्रभृतिषु शाकटायनस्य, ७.४.५० व्योर्लघुप्रयत्नतरः शाकटायनस्य ७.६.१८.

१९. पश्यताम्—१७, पृष्ठ १६०।

२०. अनुशाकटायनं वैयाकरणाः। काशिका, १.४.८६.

व्युत्पत्ति: धातुभ्य: वर्णिता। अस्मात् कारणात् शाकटायन: वैयाकरणेषु श्रेष्ठः। आचार्य-शाकटायनस्य, अन्ये ग्रन्था अपि विद्यन्ते। यथा—दैवतग्रन्थ:, निरुक्तम्, कोष:, ऋक्तन्त्रम्, लघु ऋक्तन्त्रम्, साम्रतन्त्रम्-इत्यादय: ॥

(८) शाकल्य:—

आचार्य-शाकल्यस्य उल्लेख: अष्टाध्याय्यां चतुर्वारं वर्तते[२१]। कुत्रचित् 'शकल' इति संज्ञा अपि लभ्यते। शकलपदं गर्गादिगणे विद्यते। शाकल्यपदं तद्धित-प्रत्ययान्त:, अत: शाकल्य: शकलस्य पुत्र आसीत्। संस्कृतसाहित्ये अनेके शाकल्या: सन्ति। यथा—शाकल्य:, स्थविरशाकल्य:, विदग्धशाकल्य:, वेदमित्र-शाकल्य:। पाणिने: सूत्रपाठे स्मृत: शाकल्य: (वेदमित्र-शाकल्य:) एक एव पुरुषोऽस्ति।

शाकल्यव्याकरणे लौकिकानां वैदिकानां च उभयविधानां शब्दानामन्वाख्यानमस्ति। पाणिनिना अपि शाकल्यस्य मतानि उद्धृतानि। यथा—इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च, ६.१.१२७; शाकल्येन शाकल-चरणम्, पदपाठ:, माध्यन्दिन-पदपाठश्च ग्रन्था अपि रचिता:।

(९) सेनक:—

आचार्य-सेनकस्य काल: २९५० वि० पू० आसीत्। अस्य आचार्यस्य विषये न कुत्रापि उल्लेख: लभ्यते। अत: अस्मिन् विषये न किमपि वक्तुं शक्नुम:। अष्टाध्याय्यामपि केवलं एकं सूत्रं विद्यते[२२]।

(१०) स्फोटायन:[२३]—

आचार्य-स्फोटायन: वैज्ञानिक आचार्य आसीत्। तस्य वास्तविकं नाम 'औदुम्बरायण:' आसीत्। अस्य पूर्वपुरुषस्य नाम 'स्फोट:' तथा च अस्य नाम स्फोटायन एव सर्वसम्मतं वर्तते न तु स्फौटायन: ॥ स्फोटायन: वैयाकरणाचार्येषु प्रसिद्ध: 'स्फोट-तत्त्वस्य' उपज्ञाता आसीत्। अत: स्फोटायन: इति नाम्ना प्रसिद्ध: बभूव। स्फोटायनस्य विषये आचार्य-भारद्वाज: कथयति—'स्फोटायन: विमानशास्त्रस्य विशेषज्ञरूपेण प्रादुरभूत्।' अस्य काल: २९५० वि० पू० आसीत्।

उपसंहाररूपेण वक्तुं शक्यते यत् पाणिने: अष्टाध्याय्यां दशव्याकरणाचार्याणामुपवर्णनं विद्यते येषां व्याकरणक्षेत्रे महत्त्वपूर्णं स्थानं वर्तते।

---

२१. सम्बुद्धौ शाकल्यस्येतावनार्षे, १.१.१६ इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च, ६.१.१२७; लोप: शाकल्यस्य, ७.३.१९, सर्वत्र शाकल्यस्य, ७.४.५१.

२२. गिरेश्च सेनकस्य, ५.४.११.

२३. अवङ् स्फोटायनस्य, ६.१.१२३

# स्फोटतत्त्वसमीक्षा

श्री नरेन्द्र कुमार दाश:

संस्कृत-विभाग:, विश्वभारती-विश्वविद्यालय: शान्तिनिकेतनम्,
(पश्चिम-बंगाल) — ७३१ २३५

अस्मिन् लेखे अहं, व्याकरण-सम्मतं नयायिकैश्च खण्डितं यत् स्फोटतत्त्वं, तद्विषये कानिचित् मतानि आलोच्य तत्प्रामाण्यस्थापनानुकूलान् युक्तिविशेषान् प्रदर्शयिष्यामि।

सर्वोऽप्ययं जीवलोक: शब्देनैवाधिगतहेयोपादेयविवेकं जहाति जिहासित-मुपादत्ते चोपादित्सितमिति सर्वजनीनमेतत्। किं बहुना; शब्दाभावे न धर्माधर्मव्यवस्था, न चाप्युत्तमाधमर्णव्यवहारादिकमिति सर्वमेवेदं जगज्जनुषान्ध-मिव प्रत्यस्तमिति निखिलव्यापारमसत्कल्पतामापद्यते। इदमेव अवलोक्य भगवान् महाभाष्यकारस्तु आह—अथ शब्दानुशासनम् इति।[1]

तत्र शब्दनिर्णयप्रसङ्गे गौरित्यत्र क: शब्द इति प्रश्नं समुत्थाप्य येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्द:[2] इति उच्चरितं पतञ्जलिना।

ननु घटमानयेति वाक्योच्चारणवेलायां ये घकार-टकारादयो वर्णा: कण्ठमूर्द्धादिस्थानेषु तत्तत्प्रयत्नैर्वायुसंयोगेनोत्पद्यमाना: श्रोत्रगोचरा भवन्ति, ते वर्णा: तृतीयक्षणे विनश्यन्त्येव[3]। स एव शब्द:, स च कम्बुग्रीवादिमद्-व्यक्ते: वाचक:। न तु तदतिरिक्त कश्चनान्य: शब्द: अस्तीति तार्किकाणां सिद्धान्त:।

---

१. महाभाष्यम्; नवाह्निकरूपं प्रथमखण्डम्; निर्णयसागर प्रेस:, १९३८, पृ० ६.

२. तदेव; पृ० १६.

३. द्रष्टव्य:; न्यायसूत्रम्; २.२.१३-१८.

वैयाकरणास्तु अत्र न्यायमतं नाङ्गीकुर्वन्ति। तेषां मते नायं शब्द:, किन्तु शब्दस्याभिव्यञ्जको ध्वनि:। स:[४] एव च एतेन ध्वनिना अभिव्यज्यमान एव शब्द:। स एव कम्बुग्रीवादिमद्-वस्तुविशेषस्य घटव्यक्तेर्वाचक:, स च नित्य:, उत्पत्तिविनाशरहितश्च। अयमेव, स्फोट: शब्दब्रह्मेत्यादिनामभिर्व्यवह्रियते[५]। तादृशस्फोटात्मकस्याभिव्यञ्जको यो ध्वनि: स तु अनर्थकोऽनित्यश्च। इति वैयाकरणा: स्वीकुर्वन्ति।

स्फुट्यते (अभिव्यज्यते), स्फुटति (अभिव्यक्तीभवति) अर्थ: अस्मादिति वा स्फोट:, अर्थप्रत्यायक: इति स्फोटशब्दव्युत्पत्त्या वर्णाभिव्यङ्ग्यत्वे सति अर्थप्रत्यायकत्वं स्फोटत्वमिति लक्षणमनुसंधीयते।

नायं स्फोट: प्रमाणविषयतामर्हति इति नैयायिका:। तथाहि— इन्द्रियसन्निकर्षाभावान्नास्य प्रत्यक्षविषयता, व्याप्तिविशिष्टपक्षधर्मताऽऽधानाभावाच्च नास्य अनुमानविषयता न चात्याप्तोपदेशरूपवेदविषयतेति चेन्न, सर्वप्रमाणाभ्यर्हित-प्रत्यक्ष-प्रमाणस्यैवात्र जागरूकत्वादिति। तथाहि—एकं पदमेकं वाक्यमित्येकत्वावगाहिनी सर्वजनप्रसिद्धा प्रतीतिर्भवति। एतच्चैकत्वं वर्णानां नानात्वान्नैव वर्णनिष्ठम्। अतस्तादृशैकत्वाश्रयीभूतं वर्णपदसमूहाभिव्यङ्ग्यमन्यदेव किञ्चिदनुसन्धेयम्; यद् स्फोटरूपेण प्रख्यातम्।

पदार्थप्रतीति: अन्यथानुपपत्तिलिङ्गेनापि स्फोटोऽनुमातव्य:। यदि वर्णाभिव्यङ्ग्य: कश्चन स्फोटात्मक: शब्दो न स्यात् तदा वर्णानां स्वोत्तरवर्त्तिवर्णनाश्यत्वाद् अन्तिमवर्णपर्यन्तं पूर्ववर्णानाम् अभावान्नार्थबोध: कथमपि स्यात्? परं भवति हि नैयायिकानामपि अर्थबोध:। अतो अनुमीयते वर्णातिरिक्त: वर्णाभिव्यङ्ग्य: कश्चन स्फोटात्मक: शब्द इति।

वर्णा एव श्रोत्रेन्द्रियविषयतामापन्ना अर्थं बोधयन्तीति वक्तुं न शक्यम्। वर्णानां प्रत्येकं वाचकत्वे प्रथमवर्णेनैवार्थाभिव्यक्तौ सत्यामितरवर्णोच्चारणस्य वैयर्थ्यापत्ते:। एकवर्णोच्चारणेनार्थ-बोधादर्शनाच्च।

---

४. द्रष्टव्य:;

द्वावुपादान-शब्देषु शब्दौ शब्दविदो विदु:।
एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते॥

वाक्यपदीयम्; वाराणसी, १९६१, पृ० ६०.

५. द्रष्टव्य:;

अनादिनिधनं ब्रह्मशब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यत:॥ तदेव; पृ० २.

तत्रापि एकस्मिन् पदे यावन्तो वर्णास्तावत्संख्याकानामर्थानां प्रतीतेः वर्णा न भिन्नार्थकाः, पदान्तर्गतसर्ववर्णानां पर्यायतापत्तेश्च न एकार्थका वा। अतः वर्णसमूहानां न वाचकत्वमभ्युपगम्यतामिति वर्णानां तृतीयक्षणविनाशित्वेन स्वोत्तरवर्णनाश्यत्वाच्चरम-वर्णोच्चारणकाले पूर्ववर्णसमूहस्य च वाचकत्वे निरस्ते अर्थप्रत्ययोपपत्त्यर्थं तदभिव्यङ्ग्यो नित्यः, अर्थप्रत्यायकः वर्णातिरिक्तः स्फोटः सर्वैरपि स्वीकार्य एवेति।

उक्तञ्च महाभाष्यकारेण पतञ्जलिना—चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥[६] अत्र तुरीयनादस्य वैखरीरूपस्य मनुष्यमात्र-व्यवहार्यत्वेऽपि परा-पश्यन्ती-मध्यमा-रूपस्य वाक्त्रयस्य गुहानिहितत्वेन अर्थात् मूलाधार-नाभि-हृदयनिहितत्वेन सर्वसाधारणागम्यत्वं मनीषिमात्रगम्यत्वं च व्यवस्थापितम्। अनित्यस्य वर्णमात्रस्य बोधकत्वे तु तस्य साधारणागम्यत्वेन गुहानिहितत्वस्य मनीषिमात्रगम्यत्वस्य च व्यवस्थापनं कथमपि नैव युक्तं स्यात् अत्रापि चत्वारि शृङ्गाः ··· ···[७] इत्यादि श्रुतिः प्रमाणं भवति। भगवता पतञ्जलिना अत्र महता यत्नेन सह उक्तं यत्—··· ··· द्वे शीर्षे। द्वौ शब्दात्मानौ नित्यः कार्यश्च[८]। अत्र व्यञ्जको वैखर्याकृतो ध्वनिरूपोऽनित्यः, ध्वनि-व्यङ्ग्यस्तु आन्तरः प्रणवात्मकः स्फोटरूपो नित्यः शब्दः। स च एकोऽपि मूलाधारादि-नाना-उपाधिभेदेन परा-पश्यन्ती-मध्यमा रूपेण व्यवह्रियमाणः सकलशब्दब्रह्माण्डनिदानमिति। तस्मात् स्फोटः सर्वप्रमाणसिद्ध इति सर्वैरभ्युगन्तव्यमिति।

अत्र मीमांसकाः—किं तर्हि स्फोटः, अभिव्यक्तं अर्थं प्रत्याययति अनभिव्यक्तं वा? अनभिव्यक्तस्यार्थप्रत्यायकत्वे सर्वदा अर्थबोधापत्तिः स्यात्। अभिव्यक्तपक्षे, वर्णाः प्रत्येकं स्फोटमभिव्यञ्जन्ति सम्भूय वा। न आद्यः, एकैकवर्णोच्चारणे तस्मात्स्फोटाभिव्यक्तेरदर्शनात्। नापि द्वितीयः, वर्णानां स्वोत्तरवर्तिवर्णनाश्यत्वाभ्युपगमेन समूहासंभवादिति।

एवं रीत्या वैयाकरणैः ये दोषाः वाचकत्वपक्षे दर्शिताः ते दोषाः पुनरपि वैयाकरणानां शिरस्यापतन्ति तदुक्तं कुमारिलभट्टेन—

---

६. महाभाष्यम् ; पृ० ३९.

७. तदेव। पृ० ३७.

८. तदेव ; पृ० ३७.

यस्यानवयवः स्फोटो व्यज्यते वर्णबुद्धिभिः ।
सोऽपि पर्यनुयोगेन नैकेनापि विमुच्यते ॥[९]

अस्या कारिकाया अयमभिप्रायः—अनवयवो निरवयवो वा वाचकः स्फोटः वर्णज्ञानेनाभिव्यज्यत इति यस्य स्फोटवादिनो वैयाकरणस्य मतं, स वैयाकरणोऽपि यान् विकल्पान् प्रतिवादिनं प्रति प्रदर्शितवान्, तेषु विकल्पेषु एकेनापि विकल्पेन वैयाकरणोऽपि नैव विमुच्यत इति ।

यदि स्फोटस्य सावयवत्वं स्वीक्रियते तर्हि एकैकेन वर्णेन अवयवशः स्फोटाभिव्यक्तिः वक्तुं शक्येत । परन्तु स्फोटवादी स्फोटस्य निरवयवत्वं मन्यते । अतस्तैः प्रदर्शिता दोषास्तन्मतेऽपि उपज्ञातुं शक्यन्त इति भावः ।

तथा च सुप्तिङन्तं पद[१०]मिति सूत्रेण महर्षिपाणिनिना, ते विभक्त्यन्ताः पदमिति[११] गौतमेन च विभक्त्यन्तेषु वर्णेषु एव पदसंज्ञा कृता, तस्मात् वर्णेष्वेव पदबुद्धिर्व्याख्येति ।

वर्णानां तृतीयक्षणविध्वंसित्वेन समूहासंभवत्वात् यद्यपि पदबुद्धेरसंभवः, तथापि संकेतग्रहपूर्वकमेकार्थप्रत्यायकत्वदर्शनेन विनाशिभिरपि वर्णैरुत्तरोत्तर-मनुग्रहो भवत्येव इति अनुभवबलात् स्वीकर्त्तव्यमेव । एवं रीत्या समूहकल्पनया पदबुद्धेरुपपत्तौ नातिरिक्त-स्फोटकल्पनाया आवश्यकता अस्ति ।

अत्र आशङ्का जायते यत्—पदप्रत्ययालम्बनं किं वर्णमात्रं वर्णसमूहो वेति ? आद्ये परस्पर-विलक्षण-वर्णमालायामभिन्नं निमित्तं विना एकं पदमिति बोधो न जायते, पुष्पेषु सूत्रं विना मालाप्रत्ययाभाववदिति । नापि द्वितीयः, उच्चरित-प्रध्वस्त-वर्णानां समूहाऽसंभवत्वादिति ।

स्फोटवादिनां मते, समूहासंभवादेव स्फोटस्याभिव्यक्तिः न वर्णसमूहेन एकपदे एव भवति, किन्तु क्रमेणैव भवतीति पूर्वकरीत्या वर्णेषु काल्पनिकः समूह एव कल्प्यतामिति न वाच्यम्, परस्पराश्रयदोषयुक्तत्वाद् । स्फोटवादि-

९. श्लोकवार्तिक व्याख्या (तात्पर्य टीका) ; मद्रपुरी विश्वविद्यालयः, १९४०, पृ० ४६३.

१०. पा०, १. ४. १४.

११. न्यायसूत्रम्, २. २. ६० ; न्यायदर्शने (वात्स्यायनभाष्यम्) भाग-१। वाराणसी, १९२५, पृ० ४१६.

भिस्तु एकार्थप्रत्यायकत्वं पदत्वञ्चेति द्वितयमपि स्फोटस्यैव स्वीक्रियते न तु वर्णसमूहस्य । अतः तेषां मते समूहकल्पनाया आवश्यकता नास्तीति ।

स्फोटमनभ्युपगच्छद्भिस्तु एकार्थप्रत्यायकत्वं पदत्वं च वर्णेष्वेव वर्णसमूहं कल्पयित्वा साधयितव्यम् । तच्चान्योन्याश्रयदोषग्रस्तत्वात् प्रेक्षावद्भिरुपेक्ष्यमेव ।

एतस्मात् कारणात् वर्णानां वाचकत्वासंभवात् स्फोटः सर्वैरेवावश्यमेवाभ्युपगन्तव्य इति ।

तत्र अभिव्यञ्जकः प्रथमो ध्वनिः अस्फुटं स्फोटमभिव्यनक्ति । उत्तरोत्तराभिव्यञ्जकक्रमेण स्फुटं स्फुटतरं स्फुटतमं च स्फोटमभिव्यनक्ति इति । अन्त्येन ध्वनिना सह उच्चार्यमाणैः सकलैरपि पूर्वपूर्ववर्णैराहितबीजायां पूर्वपूर्वसंस्कारसहकृतसंस्काराऽऽवृत्त्या प्राप्तयोग्यता - विशेषायां बुद्धौ शब्दः निश्चीयते । तदाह भर्तृहरिः—

> नादैराहित - बीजायामन्त्येन ध्वनिना सह ।
> आवृत्तिपरिपाकायां बुद्धौ शब्दोऽवधार्यते ॥[१२] इति ।

कत्व-गत्वादिधर्मवन्तो वर्णरूपा ध्वनयः एवार्थप्रत्यायकं कालत्रयाबाधितं शब्दब्रह्मैव व्यञ्जयन्ति । तदेव शब्दब्रह्म स्फोट इति कथ्यते । स एव स्फोटः तत्तदर्थं निरूपयति तत्तच्छक्तिमानिति । एवं च अन्तिमवर्णाभिव्यक्तः सम्यक्-प्रतीतः स्फोट एवार्थबोधं जनयति इति दिक् । एवं रीत्या न्याय-व्याकरण-मीमांसाशास्त्रे स्फोटतत्त्वं सम्यग् रूपेण आलोचितम् तथा च नैयायिकानां यद्यपि स्फोटस्य आवश्यकता नास्ति तथापि व्याकरणशास्त्रे स्फोटः श्रेष्ठस्थान-मर्हति । अस्य ज्ञाने सम्यक्तया जाते सति जीवनान्मुक्तिर्भवत्येव । यतः स्फोटः ब्रह्मपरकः प्रणवश्च तस्य वाचक इति वैयाकरणानां सिद्धान्त इतिदिक् ।



# निरुक्तस्य प्रामाण्यम्

डॉ० धर्मानन्दशर्मा
पंजाब-विश्वविद्यालयः, होश्यारपुरम्

निरुक्तमन्तरा सुदुष्करं वेदार्थाविष्करणम्। वेदो नाम चतुर्दश-विद्यास्थानम्। यथोक्तं मुनिना याज्ञवल्क्येन—

पुराण-न्याय-मीमांसा-धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्यास्य चतुर्दश ॥

वेदोक्तविद्यानां जीवनतत्त्वानामाध्यात्मिकविषयाणां च याथातथ्येन ज्ञानं निरुक्तेनैव सम्भवम्। निरुक्तं नाम न केवलं शब्दनिर्वचनमात्रमेव। वस्तुतस्तत्राध्यात्मिकेन मनोवैज्ञानिकेन भौतिकेन चानुसन्धानेन विषयजातं परीक्ष्यते। यास्कसमये हि नूनमेषा विवेचनपरम्परा सततमुपचीयमाना दृश्यते। स्वपक्षानुमोदाय परपक्षक्षोदाय वा निरुक्तग्रन्थे यास्क 'इति नैरुक्ता' इति पदमसकृत् प्रयुङ्क्ते। निरुक्तं खलु शब्दार्थरहस्यविज्ञानं यद्भाषा-विषयिणीं जिज्ञासूनां जिज्ञासां विविधज्ञानप्रयोजनमनुलक्ष्य व्यासेधयति। इदमेव वैज्ञानिकं प्रयोजनं निरुक्तशास्त्रस्य।

वेदशब्दो वैदिकप्रज्ञोपासकानां सुदीर्घसाधनयाऽधिगतचिन्तनातिशयस्य प्रकृष्टः परिणामः। आसीत् स कालो यदा मुमुक्षुत्वमेव जीवनस्य चरमं लक्ष्यं शान्तिश्चातिशया परमा सिद्धिः। साधनविरलं हि तत्र जीवभूतां जीवनम्। यथाऽऽह यास्कः—बिल्मग्रहणाय इमं ग्रन्थं समाम्नासिषुः इति। बिल्मो नामार्थज्ञानं ज्ञानार्जनं वा। बिल्मश्च भिल्मशब्देनापि गृह्यते यं हि भाष्यकाराः वेदानां भेदने व्यास इति व्याचक्षाणाः तस्य विस्तरत्वमाख्यापयन्ति। सम्बन्धः परम्परा च शब्दार्थविज्ञानजिज्ञासायाः यास्ककाले परां समृद्धि-मुपगतेति निरुक्ते निर्वचनाय संगृहीतेन १७७० शब्दव्यूहेन पुष्यते। तेषु च यास्केन ६५९ शब्दानां विहितं निर्वचनम्। निर्वचनं हि तेषां मनोवैज्ञानिकी-माध्यात्मिकीमैतिहासिकीं च दृष्टिमवलम्बते। अकूपारो हि वैदिको वाङ्मयः। प्राणिनामपचयाभिमुखीं शक्तिं समीक्ष्य निरुक्तकृता कृतस्तस्य सारसंक्षेपः। गोष्पदशब्दस्तत्रामुमेवार्थमभिप्रैति। प्रयोगप्रकारेणानेन वैदिक-वाङ्मयस्य तात्त्विकं ज्ञानं सुलभं सुकरं च संजातम्। व्याख्याताः आचार्येण

४४० मन्त्राः शब्दमर्मनिर्वचनपुरस्सरम् । निर्वचनं हि तस्य सर्वथा परिपूर्णं वैज्ञानिकं तात्त्विकं च । तात्त्विकार्थ-विवेचनं विज्ञानार्थनिष्पत्तिश्च निरुक्तस्य वैशिष्टयम् ।

अर्थज्ञानं, शब्दसिद्धिः, प्रकृतिप्रत्ययः, संस्कारश्चेति निरुक्तस्य परीक्षानिकषः । निकषेऽत्र परीक्ष्य निरुक्तस्यानुपमत्वमुपपद्यते । यथा कूपात् कौपीनस्य निस्तृणाच्च निस्त्रिंशस्य निष्पत्तिरेकतः प्रकृतिप्रत्ययं व्याकरोति, अपरतश्चार्थविज्ञानमाविष्करोति । व्याकरणनिरुक्तयोरस्ति भूयान् भेदः । व्याकरणस्य दृष्टिः प्रकृतिप्रत्ययप्रधाना शब्दशरीरसंधानपरा भवति । निरुक्तं चार्थस्य विज्ञानं विकासमितिहासं च परीक्षते ।

पदविभागज्ञानं तावन्निरुक्तस्यापरं प्रयोजनम् । नामाख्यातोपसर्ग-निपातदर्शनं प्रथमं निरुक्ते एव दृश्यते चर्चाचरम् । पश्चाच्च मुनिना पाणिनिना सुबन्तं तिङन्तं चेति विहितः पदविभागः । यज्ञविधिनिरूपणमपि निरुक्तेनैव सरूपवम् । काममेव यज्ञविधिः विषयो हि ब्राह्मणस्य, परञ्च यत्र भवति विचिकित्सा देवतानिर्णये तत्र निरुक्तमेव सिद्धान्तं प्रतिष्ठापयति । सन्ति दैवतकाण्डे भूयांसो मन्त्राः यत्र भक्तिसाहचर्यसिद्धान्तसहयोगेन यास्कः तेषां देवतात्वं निर्धारयति ।

किमिह निरुक्ताध्ययनस्य फलमित्यपि प्रतिपादितं तत्र ग्रन्थकृताऽति-विस्पष्टम् । अनतिशङ्कनीयं वचनं यास्कस्य 'अथापीदमन्तरेण मंत्रार्थसंप्रत्ययो न विद्यते' इति । दुरूहार्था हि भवन्ति मंत्राः । नैकतानेन सम्भवति तेषामर्थसंप्रत्ययः । कस्तस्यार्थः किं च प्रयोजनमिति निरुक्तेन शक्यते निश्चेतुम् । शौनकेनापि बृहद्देवताग्रन्थे देवतानिरूपणनिर्णये यास्क एवानुसृतः । शौनकस्य प्रकाशस्तम्भो नूनं निरुक्तमेव । यानि पञ्चकर्माणि निरुक्तं निष्पादयति तानि किल प्रयोगपरीक्षितानि वैज्ञानिकानि च । यथा—

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥

पञ्चविधमेतन्निरुक्तमेव निखिलस्यैव भाषादर्शनस्य मूलम् । भाषाशास्त्रमेतानेव नियमान् शब्दार्थनिरूपणपरम्परायां नियमयति । अनेनैव पञ्चविधलक्षणेन शब्दानुसन्धानमर्थानुशासनं च व्यवस्थाप्यते ।

ये खलु प्राधान्येन चिन्तनचरा विषयाः सन्ति निरुक्तस्य तेषु यथा देवविद्या, यत्र देवानां सामर्थ्यं स्वरूपं स्थानं साहचर्यं च परीक्ष्यते, नूनं तत्रैव

प्रतिष्ठितमुत्तरवर्तिनां शास्त्रकाराणां सकलमेव वैदिकं देवशास्त्रम् । का पुनरियं वैदिकी देवता का च तस्याः स्थितिः वैदिकपरम्परायामिति शङ्कासन्ततिः कथं समाधेयेति सर्वमेवानुसन्धीयते निरुक्ते । अस्ति या रुचिरा उद्भावना निरुक्तस्य विशेषेण कुतूहलाकलिता सा हि देवताविषयकज्ञानस्याहंमन्यता । रहस्यगर्भा हि देवताः । न तासां ज्ञानं सुकरं सर्वासाम् । प्रसिद्धोऽत्र प्रवाद आचार्यस्य शाकपूणेः । एकदा सगर्वं सोऽवोचत्—सर्वाः देवताः जानाम्यहमिति । गर्वोक्तिं तस्याकर्ण्य एका देवता सहसाऽऽविरभवत् । सा चोभयलिङ्गी । सर्वथाऽज्ञातपूर्वां तामवेक्ष्य स तत्याज गर्वं, नूनं सुदुष्करं हि ज्ञानं देवतानामिति मत्वा । दृष्टान्तेनानेन वैदिकदेवताविषयिणी सर्वज्ञता निराक्रियते । पुरा काले हि विद्यासु देवताविद्यैव प्रशस्यते । देवविद्याध्ययनं तत्र परं प्रयोजनं मन्यते । ज्ञानस्येयत्ता देवविद्यैव । सा चैव पराकाष्ठा पाण्डित्यस्य । देवविद्याविषये निरुक्तं विशिष्यते प्रशस्यते च ।

निर्वचनस्य वैज्ञानिकवैलक्षण्यं तावदपरं प्रयोजनं निरुक्तस्य । चतुर्विधा तस्य निर्वचनसरणिः । सा चाश्चार्योपपाविकी, आधिदैविकी, ऐतिहासिकी, आध्यात्मिकी च । अर्थनिर्वचनं शब्दनिर्वचनं च तत्र द्विविधो विचारप्रकारः । अर्थनिर्वचने ह्यर्थस्य यत्नेन विश्लेषणं विधीयते परीक्ष्य चार्थं कोऽपि निश्चितः सिद्धान्त उपस्थाप्यते । शब्दनिर्वचने च धातुप्रत्ययादिरूपसंघटनमनुसन्धीयते पुनश्च निश्चीयते तत्स्वरूपम् । सामाजिकी, ऐतिहासिकी, आधिदैविकी आध्यात्मिकी च तस्य दृष्टिः नूनं निर्वचनप्रक्रियामुपसाधयति । अथ चोपकरोति देवविद्यां शब्दसंस्कारञ्च । अनेनैव व्यावहारिकेणाभिनवप्रयोगेण निरुक्तस्यानुपमत्वं वैशिष्ट्यञ्चोपपद्यते ।

# ऋणम्

श्री विश्वनाथमुखोपाध्यायः
संस्कृत-विभागः, वर्धमान विश्वविद्यालयः, वर्धवान् (प० बंगाल)

ऋणु गताविति धातोरयमृणशब्दः। स्यादृणं पर्य्युदञ्चनमित्यमरः। परमृणपर्यायत्वेऽपि पर्य्युदञ्चनशब्दस्य नास्ति ऋणशब्दवद् व्यवहारः। ऋग्वेदे ऋणशब्दस्य यथा गत्यर्थे तथा प्रदेयरूपार्थे च प्रयोगः दृश्यते। ऋणविषये तैत्तिरीय-संहितायामुक्तम्— "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी' (तै०सं० ६.३.१०.१३)। अत्रेदमवधेयम्—ब्राह्मणस्यावश्यकरणीयं यत् कर्म तदेवात्र ऋणपरिशोधे निमित्तं भवतीति। ननु यज्वभिः प्रदेयमवदानं यद्यपि ऋणशोधनिमित्तकं तथापि तदेव देवा ऋणं मन्यन्ते अर्थाद् अवश्यप्रत्यर्पणीयं मन्यमाना यजमानस्याभीष्टं पूरयन्ति तथा च शतपथे—यावतीभ्यो ह वै देवताभ्यो हवींषि गृह्यन्तऽऋणमु हैव तास्तेन मन्यन्ते यदस्मै तं कामं समर्धयेयुर्यत्काम्या गृह्णाति—[शतपथब्राह्मणम्, २. २. २. २९] सत्यं देवाः स्वत एव दानादिगुणयुक्तास्तथापि यदा प्रार्थिता भवन्ति तदाचिरादेव यजमानाभीष्टं साधयन्ति। अतएव 'ऋणिवति' शब्दव्याख्याने सायणाचार्येण प्रयच्छतीत्यर्थो दर्भितः—(भगो न वारमृणवति ; ऋ० ५.२६.२)। लौकिके च ऋणार्थे धारयतेः प्रयोगे भट्टोजिदीक्षितपादेन भक्ताय धारयति मोक्षं हरिरित्युदाहृतम् [धारेरुत्तमर्णः ; पा० २.४.३५]। ननु ऋणुधातोस्तावत् व्याप्त्यर्थे कुत्रापि प्राप्त्यर्थे वा प्रयोगो दृश्यते—[ऋग्वेद २. ३५. ९; ७. ८. ३] तर्हि किं नाम ऋणम्? ऋणम् व्यापनं प्रापणं वा नाम। वैदिके काले यथा यजमाना देवान् स्तुत्या हविषा वा समर्धयन्ति स्म तथा देवाश्चापि यजमानान् दाक्षिण्येन। इत्थमन्योन्यसमृद्धिप्रदानपरा रीतिरासीत् देवेषु यजमानेषु च।

सत्यं ऋणशब्दस्य गत्यर्थे सति एवमायाति यत्—ऋणमचिरादेव परिशोध्यं नैतत् कालमपेक्षते—अन्यथा कालापेक्षायामस्यास्ति पापजनकता पापरूपता वा। तस्मादृणापाकरणे देवेभ्यः प्रार्थनं विहितमस्ति। कुत्र च ऋणमोचने सूक्तजपस्यापि विधानं दृश्यते। तथाहि—वरुणमुद्दिश्य—

परं ऋणा सावीरध मत् कृतानि माहं राजन्नन्यकृतेन भोजम्।
(ऋ०, २. २८. ९) इति।

यथा सोमस्तया चेन्द्रोऽपि ऋणया इति कथ्यते, यथा—

द्विषस्तुरध्यो॑ ऋणया न॑ ईयसे। (ऋ०, ९. ११०. १)

ऋणा चि॒द्यत्र॑ ऋणया न॑ उग्रो दू॒रे अज्ञा॑ता उषसो॑ बबाधे।

(ऋ०, ४. २३. ७)

ऋणस्य यापयिता नाशयिता वा ब्रह्मणस्पतिरपि स च ऋणचिदित्यपि कथ्यते। स्तोतृकाममृणमिव चिनोतीति ऋणचित् (ऋ०, २.२३.२७)। एवमन्यत्रापि। ऋग्वेदस्य द्वितीयमण्डलगताष्टाविंशतितमस्य सूक्तस्य विनियोगवेलायामुक्तम् यत्—अत्र केचिदाहुः—इदमेकादश च नु वारुणं भयपापनुत्। ऋणदारिद्र्य-दुःस्वप्ननाशनं चेति शुश्रुम। इति।

# महावैयाकरणो भर्तृहरिः

**एस्० पांडुरङ्ग विट्ठलः**

संस्कृत विभाग; एस०वी० यूनिवर्सिटी, तिरुपति (आन्ध्रप्रदेश)

**१. परिचयः**—विपश्चिदपश्चिमस्तत्रभवान् भर्तृहरिः महावैयाकरणः, शब्दब्रह्मतत्त्वज्ञः सर्वशास्त्रपारीणश्चेति निश्चप्रचम् । विशिष्टस्यास्य व्याकरण-शास्त्रज्ञानमद्वितीयं चिरस्मरणीयञ्च । अस्य हेतोः 'महावैयाकरण' इत्यन्वर्थ-नाम लब्धवानयं लब्धवर्णः भर्तृहरिः । महावैयाकरण इति कथने इदमेव प्रमाणम्—

इति श्रीमद्भगवद्भर्तृहरिवृषभ' महावैयाकरण"-विरचिते ।

अपि च—

इति श्रीमद्भगवद्भर्तृहरिवृषभ-महावैयाकरणपाद-विरचिते वाक्यपदीये । इति वाक्यपदीयकाण्डान्ते दरीदृश्यते । अयं शब्दब्रह्मतत्त्वज्ञः सर्वशास्त्रपारङ्गत-श्चेति वाक्यपदीयं बोधयति । पुण्यदम्पत्योः सिन्धुमती-श्रीधरसेनयोर्गर्भशुक्ति-मुक्ताफलमयं भर्तृहरिः । अयं वीरसेनायाः पतिरिति अर्वाचीनकोशाद् ज्ञायते । वीरसेनायाः अनङ्गसेनेति नामान्तरम् । अयं राज्ञः विक्रमादित्यस्य ज्येष्ठभ्राता । अत्रेदं प्रमाणम्—

राजा भर्तृहरिश्च विक्रमनृपः क्षत्रात्मजायामभूत् ।

भर्तृहरेः नामान्तरं 'हरि'रिति । अस्मिन् विषये बहूनि प्रमाणानि विद्यन्ते यथा—

तथाऽपि हरिबद्धेन सारेण ग्रन्थसेतुना ।

महामहोपाध्यायानां व्याकरणशास्त्रे कृतभूरिपरिश्रमाणां चारु-वाग्भाषिणां तत्र भवतां प्रो० चारुदेवशास्त्रिणां वचनमिदम्—

हरिरेव कर्तेत्यभ्युपेयते ।

इति । अपि च वाक्यपदीयव्याख्याने तत्रभवान् हेलराजोऽपि एवमाचचक्षे—

तस्मै समस्तविद्याश्रीकान्ताय हरये नमः ।

लघुमञ्जूषायामपि नागेशभट्टपादैः 'तदुक्तं हरिणा' इत्युक्तत्वात् भर्तृहरेः 'हरि'रिति नामान्तरं सिद्धयति। 'नामैकदेशे नामग्रहणम्' इति लोकान्यायेन यथा—सत्यभामा भाम इतिवद् भर्तृहरिः हरिरिति जेगीयते। भर्तृहरेः गुरुचरणाः 'वसुरात' महाशयाः इति वाक्यपदीय-टीकाकारः पुण्यराजः प्रावोचत्—

वसुरातो भर्तृहरेरुपाध्यायः।

भर्तृहरिः प्रच्छन्नबौद्ध इति केचन विमर्शकाः अभिप्रयन्ति। तदयुक्तं, अप्रमाणं अनादरणीयञ्च। तत्कथमिति चेत्—हरेः कृतिषु यत्र कुत्राऽपि वा बौद्धमतद्योतकपदानि विषयाः वा न स्पृष्टाः। इदं केवलं चीनायात्रिकस्य इत्सिङ्गस्य मतमेवेति विपश्चिदपश्चिमाः जानन्तीति पुनर्न वक्तव्यम्। इत्सिङ्मतं दुष्टं, अप्रमाणं, संशयग्रस्तमिति प्रो० चारुदेवशास्त्रिपादाः एवं खण्डयन्ति —

इत्सिङ्गेन मृषोमितं वा तेनैव मीमांस्यं तद्वचः प्रमाणकोटिमाटीकते।
इत्सिङ्गो हि नाप्तः। अतः इत्सिङ्गस्य लपितं संशयितं निर्णयसव्यपेक्षम्।

भर्तृहरिरयं अद्वैतवेदान्ती आस्तिकवरेण्यः। अयं विषयः उपसंहारे चर्च्यते। केचन बौद्धमतानुयायिनः विमर्शकाः एवं भावयन्ति यत्—भर्तृहरिः सप्तवारं संन्यस्तवान्।

Bhartṛhari became seven times a Priest,
seven times returned to the laity.

अयम् ऊह एव। अथवा स्वप्रियायाः दौष्टयं दृष्ट्वा संन्यस्तवान् स्यात्।

२. भर्तृहरेः कालः—कदाऽयं सम्बभूवेति नाऽस्माभिः स्पष्टं ज्ञायते। कुत इति चेत्—भर्तृहरिः स्वग्रन्थेषु यत्र कुत्राऽपि वा स्वदेशकालादिविषये नाऽलिखत्। पाश्चात्यविद्वान् विमर्शकश्च प्रो० ए० बी० कीथ् महाशयः भर्तृहरेः कालविषये एवमभिप्रैति यद् भर्तृहरेः कालः क्रीस्तोः परं सप्तमशताब्दीति। संस्कृतव्याकरणेतिहासप्रणेता युधिष्ठिरमीमांसकमहाशयस्तु क्रीस्तोः परं चतुश्चत्वारिंशदुत्तर-चतुश्शततमे वत्सरे (440 A.D.) हरेः काल इत्याचचक्षे। चीनायात्रिकः इत्सिङ् महाभागः क्रीस्तोः परं एकपञ्चाशदुत्तरषट्शततमे वत्सरे ( 651 A.D. ) हरेः काल इत्यभिप्रैति। इत्सिङ्मतं अप्रमाणं संशयग्रस्तमिति मत्वा प्रो० चारुदेवशास्त्रिपादाः निरस्यन्ति।

भर्तृहरिः राज्ञः विक्रमादित्यस्य ज्येष्ठभ्रातेति चरित्रका सङ्गिरन्ति। विक्रमादित्यस्य कालः क्रीस्तोः परं प्रथमशताब्दी (100 A.D.)। भर्तृहरेः कालनिर्णयविषये प्रायः राज्ञः विक्रमादित्यस्य कालमनुसृत्यैव (भर्तृहरेः कालः) निर्णेतव्यः भवति। राजा विक्रमादित्यः भर्तृहरिः सहोदरावितिकथने इदं प्रमाणम्—

राजा भर्तृहरिश्च विक्रमनृपः क्षत्रात्मजायामभूत्।

अपि च तैलङ्महाशयः, प्रो० पाण्डुरङ्ग वामन काणे महाशयश्च भर्तृहरेः कालः क्रीस्तोः परं प्रथमद्वितीयशताब्द्योः मध्यकाल इति अमुमेवाऽभिप्रायं प्रकटितवन्तौ। भर्तृहरेः कालः क्रीस्तोः परं प्रथमशताब्द्याः अन्ते आसीदिति ममाभिप्रायः।

३. भर्तृहरेः देशः—भर्तृहरिः उज्जयिनी-वास्तव्यः इति केचन विमर्शकाः, अपरे वाराणसी-निवासीति, अन्ये वलभीदेशीय इति आमनन्ति। यथार्थस्तु उज्जयिनी-निवासीति। राजा विक्रमादित्यः उज्जयिनीपालकः। विक्रमादित्यस्तु भर्तृहरेः अनुजः (अग्रजः)। तस्मात् उज्जयिनी-निवासीति स्पष्टम्। उज्जयिन्यां भर्तृहरेः एका गुहा वर्तत इति तज्ज्ञाः कथयन्ति।

४. भर्तृहरेः रचनाः—भगवता भर्तृहरिणा बहवो ग्रन्थाः, व्याख्यानानि, शतकानि च प्रणीतानि विभ्राजन्ते। ते च ग्रन्थाः— १. वाक्यपदीयम्; २. शतकत्रयम्; ३. भागवृत्तिः—ग्रन्थोऽयं भगवतः पाणिनेः अष्टाध्याय्याः वृत्तिरूप एव। ४. शब्दधातुसमीक्षा; ५. मीमांसासूत्रवृत्तिः; ६. वेदान्तसूत्रवृत्तिश्चेति भर्तृहरेः स्वतन्त्रग्रन्थाः। एतेषु सर्वेषु हरिग्रन्थेषु वाक्यपदीयमेवाऽग्रस्थानं भजते।

एतावता ग्रन्थनिर्माणेन नाऽयं सन्तुष्टोऽभूत्। किन्तु महाभाष्योपरि एकां व्याख्यां निर्ममे। तस्याः व्याख्यायाः नाम 'महाभाष्यदीपिका' इति। अत्रेदं प्रमाणम्—

भर्तृहरिः वाक्यपदीयप्रकीर्णयोः कर्ता महाभाष्यत्रिपाद्या व्याख्याता चेति।

विपश्चिदपश्चिमस्य, विमर्शकाग्रणेः प्रो० मोक्षमूलर-महाशयस्याऽपि मतमिदं सम्मतं भवति। भारतदेशविमर्शकशिरोमणिः प्रो० दासगुप्तमहाशयोऽपि एवमवोचत्—

We know that the grammarian Bhartṛhari wrote a Commentary on Patanjali's Mahābhāṣya.

"भट्टिकाव्यमपि" भर्तृहरिणा प्रणीतमिति केचन विमर्शकाः कथयन्ति। अपरे नाऽङ्गीकुर्वन्ति । अयं विषयः संशयग्रस्तः एव ।

४.१. वाक्यपदीयम्—महावैयाकरण-भर्तृहरिग्रन्थेषु वाक्यपदीयमेव प्रथमं गणनीयं व्याकरणग्रन्थरत्नम् । वाक्यं च पदं च वाक्यपदे, वाक्यपदे अधिकृत्य कृतोऽयं ग्रन्थः वाक्यपदीयम् । ग्रन्थोऽयं अनुष्टुभ्-छन्दसि निबद्धः । अस्मिन् त्रयः काण्डाः ( 1974 कारिकाश्च ) विभ्राजन्ते । ते च—१. आगमकाण्डः ( अथवा ब्रह्मकाण्डः ) २. वाक्यकाण्डः ३. पदकाण्डः (आहोस्वित् प्रकीर्णकाण्डश्चेति) चेति त्रयः काण्डः । प्रथमकाण्डे स्फोट-वाक्ययोः तादात्म्यं (अभेदत्वं) प्रतिपादितम् । तादात्म्यं नाम—तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम् । अर्थात् स्फोटशब्दयोः भेदः नास्तीति भावः । अद्वितीये द्वितीयकाण्डे वाक्यविचारः कृतः । तृतीयकाण्डे शब्दस्वरूप-विभक्ति-संख्या - लिङ्ग - द्रव्य - वृत्ति - जात्यादि-विषयान् विपुलतया विवृणोति सः । भगवान् भर्तृहरिः स्वयमेव भणति यत्—महर्षिव्याडेः 'श्लोकसङ्ग्रहः' इति लक्षश्लोकात्मकग्रन्थस्य व्याख्यानमेवेदं वाक्यपदीयमिति । अमुं विषयं मनसिकृत्य प्रो० चारुदेवशास्त्रिणः स्वसम्पादित-वाक्यपदीयोपोद्घाते इदं मतं स्थापयामासुः ।

वाक्यपदीयग्रन्थेऽस्मिन् यद्यपि भाषाशास्त्र (Linguistics) - मधिकृत्य बहवो विषयाः उक्ताः तथाऽपि विशिष्य शब्दब्रह्माख्यं स्फोटवादमधिकृत्य सम्यक् न्यरूपि । स्फोटवादनिरूपणार्थमेव ग्रन्थोऽयं प्रणीत इति कथने न कस्याऽपि विप्रतिपत्तिः । स्फोटवादनिरूपणग्रन्थेषु इदं वाक्यपदीयं अग्र-स्थानं लभते ।

४.१.१. शब्दब्रह्म—भर्तृहरेः मताऽनुसारं शब्द एव ब्रह्म । शब्दस्य व्यक्तरूपमेव खलु वेदवाणी । भर्तृहरेः किं, सर्वेषां वैयाकरणानां च मते शब्द एव ब्रह्म । जगत्सर्वं शब्दादेवाऽवभासते । शब्दज्ञानेन किमस्माकं प्रयोजनं (प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते इति खलु लोकन्यायः) इति चेत्—शब्द एव मोक्षदायकः, ब्रह्मसायुज्यं करोतीति भर्तृहरिः समाधत्ते—

इदमाद्यं पदस्थानं सिद्धिस्सोपानपर्वणाम् ।
इयं सा मोक्षमाणानाम् अजिह्मा राजपद्धतिः ।।
तस्माद्यः शब्दसंस्कारः सा सिद्धेः परमात्मनः ।
तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्माऽमृतमश्नुते ।।

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥
तथेदममृतं ब्रह्म निर्विकारमविद्यया ।

अर्थात् शब्दज्ञाननिपुणः नूनममृतत्वमेतीत्यनेन स्पष्टम् । यः शब्दब्रह्मणि निष्णातः स ध्रुवं परमात्मानमधिगच्छतीति पञ्चमवेदे भगवता बादरायणेन कण्ठरवेणोक्तम्—

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥

शब्दब्रह्मज्ञानादेव मुक्तिः करतलामलकं, शब्दब्रह्मज्ञः परलोके भगवान् भवतीति भागवतवचनम्—

शब्दब्रह्मणि निष्णातः परस्मिन् भगवान् खलु ।

इति । इदं शब्दस्य मुख्यप्रयोजनम् । शब्दस्याऽऽनुषङ्गिप्रयोजनं तु स्वर्गप्राप्तिरेवेति भगवतः पतञ्जलेः मतम्—

एकश्शब्दः सम्यक्ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति ।

इति । यदि शब्दः न भवति तर्हि प्रपञ्चगमनं न भवति । अर्थात् शब्दे एव सर्वं प्रतिष्ठितमिति ज्ञायते । अस्मिन् विषये महावैयाकरणस्य भर्तृहरेः अभिमतमिदम्—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥

अपि चान्यत्र—

शब्देष्वेवाश्रिता शक्तिः विश्वस्याऽस्य निबन्धनी ।

वागनुसृत्यैव जगत्प्रवर्तत इति महाकविना दण्डिना युक्तमुक्तम्—

वाचामेव प्रसादेन लोकयात्रा प्रवर्तते ॥
इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिः आससारं न दीप्यते ॥

शब्द एव ब्रह्मेति न केवलं वैयाकरणानां मतम्, किन्तु सहृदयाणामालङ्कारिकाणामपि सम्मतमेवेति (दण्डिनः महाकवेः) उपरितन - श्लोकेभ्यः अवगम्यते ।

४.१.२. स्फोटस्वरूपम्—शब्दः (स्फोटः) एव ब्रह्मेति भगवान् पतञ्जलिरपि अङ्गीचकार—'स्फोटः शब्दः ध्वनिः शब्दगुणः' इति। भर्तृहरिः—

स्फोटः शब्दः ध्वनिः तस्य व्यायामाद् जायते ।

इत्यब्रवीत् । वेदेषु, ब्राह्मणेषु, आरण्यकेषु, उपनिषत्सु महाभारत-इतिहासेषु, पुराणेषु, व्याकरणशास्त्र - मीमांसाविशास्त्रेषु च शब्दमधिकृत्य शोभनं प्रतिपादितम् । ऐतरेयब्राह्मणं वाक् एव ब्रह्मेत्युद्घोषयति— 'वागेव ब्रह्म'। अमुमेव विषयं बृहदारण्यकोपनिषदपि द्रढयत्येवम्—'वाग्वै ब्रह्म'।

शब्दज्ञाननिपुणस्य वैयाकरणस्य आनन्दः अवर्णनीयः। यदुक्तं ऋग्वेदे—

उत त्वः पश्यन् न ददर्श वाचं उत त्वः शृण्वन् न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं विवृणुते जायेव पत्य उशती: सुवासा: ॥

अत्र वाचः (शब्दस्य) परब्रह्मणः अभेदत्वं प्रतिपादितमिति न विस्मरणीयम् । मण्डनमिश्राः अपि स्वब्रह्मसिद्धौ स्पष्टीकरोत्येवम्—

वागेव विश्वा भुवनानि जज्ञे वागेवेदं बभुजे वागुवाच ।

४.१.३. वाक्स्वरूपम्—वाक् चतुर्धा विभक्ता ऋग्वेदे—१. परा २. पश्यन्ती ३. मध्यमा ४. वैखरी भेदात् । 'चत्वारि वाक्परिमिता पदानि'। एतासु वाक्षु परा वागेव (शब्दब्रह्म) मुख्यतमा । परा नाम— (परा वाङ् मूलचक्रस्था) मूलाधारस्था पवनसंस्कारीभूता स्पंदशून्या बिन्दुरूपिणी इत्युच्यते नागेशभट्टपादैः । परावाचः लक्षणमभिधीयते मुण्डकोपनिषदि— 'परा यया तदक्षरमधिगम्यते' । अपि च प्रपञ्चसारे—

मूलाधारात् प्रथममुद्रितो यस्तुभावः पराख्यः।

इति परायाः लक्षणमभिहितम् । अत्र परा वाङ् नाम शब्दब्रह्मैव ।

४.१.४. शब्दनित्यत्वम्—नैयायिकानां मीमांसकानां च मते वर्णाः नित्याः। अत एव 'वर्ण एव शब्दः इति भगवानुपवर्ष' इति सूत्रभाष्ये देवताधिकरणे उक्तम्। परन्तु वैयाकरणानां मते शब्दाः नित्याः। स्फोटवादाख्यं शब्दब्रह्मतत्त्वं बौद्धाः नैयायिकाः मीमांसकाः निरस्यन्ति । शब्दप्रमाणकाः वैयाकरणाः वयं तेषां मतं सहेतुपूर्वकं खण्डशः खण्डयित्वा स्फोटवादं संस्थापयामः । शब्दैरेव वाक्यार्थबोधः जायते, न तु वर्णैः । शब्दार्थस्य

प्राधान्यमिति शाब्दिकाः (वैयाकरणाः)। अतएव वाक्यपदीय-व्याख्याता तत्रभवान् हेलराजः— 'वैयाकरणानां शब्दाऽर्थोऽर्थः न वस्त्वर्थोऽर्थ' इत्याह। महाभाष्यमपि अमुं सिद्धान्तं ध्रुवीचकार—'किमस्माकं वस्तुगतेन विचारेण। अर्थश्चाऽस्माकं यः शब्देनाऽभिधीयते' इति।

शब्दस्य (वाचः) अनादित्वं, नित्यत्वं प्रतिपादयति भगवान् पतञ्जलिः अनादित्वात् नित्यत्वं वाग्व्यवहारस्य सूचयति—

शब्दब्रह्मैव शब्दरूपतया प्रतिभाति।

अत्राऽवश्यं ज्ञेयं यत् शब्दब्रह्मैव शब्दरूपतया भवति।

अयमेवभावः वाक्यपदीयप्रथमकारिकायामेव भगवान् भर्तृहरिः प्रकटीकरोति यत्—शब्दस्य उत्पत्तिविनाशराहित्यं भवतीति। अर्थात् शब्दः शाश्वतः नित्यश्चेति स्पष्टम्। यदुक्तम्—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥

शब्दः द्विविधः—१. ध्वन्यात्मकः (कार्यशब्दः) २. स्फोटात्मक (नित्यशब्द) श्चेति। ध्वन्यात्मको शब्दः श्रोत्रेन्द्रियेण गृह्यते। अयमनित्यः। स्फोटात्मकश्शब्दः श्रोत्रेन्द्रियेण न ग्रहीतुं पार्यते। स्फोटात्मक-शब्दोऽयम् एव नित्यः, विभुः, अक्षरः, चेतनश्च शब्दब्रह्मेत्यभिधीयते। ब्रह्म (शब्दब्रह्म) एकाकी (अद्वितीयः) सर्वबीजमूलकर्ता, स्वतन्त्रः भोक्तृभोक्तव्यभोगरूपेण च स्थितः। यत्—

एकमेव यदाम्नातं भिन्नशक्तिव्यपाश्रयात्।
भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितः॥

इति। अत्र 'शब्द' इति शब्देन न तु लोकव्यवहारे स्थितः डित्थडवित्थादि-शब्दः किन्तु शब्दब्रह्मेति ज्ञेयम्। शब्दप्राधान्यं, शब्दप्राथम्यं, शब्दप्रामाण्यं चाऽस्माभिः वैयाकरणैः सर्वदाऽङ्गीक्रियते। तद्युक्तमुक्तमभियुक्तैः—

वैयाकरणाः शब्दप्रमाणकाः, शब्द एव परमं प्रमाणमस्माकम्।

अर्थात् वैयाकरणानां सर्वस्वं शब्दे विद्यत इति सिद्धान्तः सर्वैरङ्गीकृतः।

४.१.५. शब्दविचारः—अर्थावऽबोधकत्वं शब्दस्य लक्षणमिति वक्तुं शक्यते। महाभाष्ये भगवान् पतञ्जलिः—गौः इत्यत्र कः शब्दः? इति प्रश्नमुत्थाप्य समाधत्ते—

येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः ।

अत्र गो: स्वरूपज्ञानं सम्यक् जायते । अयमेव विषय: मीमांसाभाष्ये एवमभिहितम्—

गौरित्यत्र क: शब्द: ? गकारौकारविसर्जनीया: ।

अनेन मीमांसाभाष्येण 'गौ:' इति केवलं शब्दस्यैव (वर्णज्ञानं) अर्थज्ञानं जायते, न तु पशुरूपत्वं, चतुष्पादत्वं (सास्नादिमत्त्वं हि गोत्वम्) ज्ञातुं शक्यत इति मीमांसाभाष्यं (शबरस्वामिन: मतं) निरस्यते ।

४.१.६. स्फोटशब्दार्थ:—अधुना स्फोटशब्दस्य व्युत्पत्ति: विचार्यते । √स्फुट्=विकसने इति धातो: स्फोटशब्द: निष्पन्न: । स्फुटति=प्रकाशयति अर्थो अस्मादिति स्फोट: इत्येकं विग्रहवाक्यम् । स्फुटति=अभिव्यनक्ति इति स्फोट: इत्यपरं विग्रहवाक्यम् । स्फुटयते=अभि-व्यज्यते वर्णै: य: स स्फोटो वर्णाभिव्यङ्ग्य: इत्यन्यत् विग्रहवाक्यम् । स्फुटयते=आविष्क्रियतेऽर्थ: अनेनेति स्फोट: इत्येकं विग्रहवाक्यम् । भर्तृहरि: स्फोटवादतत्त्वज्ञ: (शब्दब्रह्मोपासक:) इत्युक्तं पूर्वम् ।

४.१.७. स्फोटनिरूपणम्—यद्यपि स्फोटा: द्वात्रिंशत् विलसन्ति तथाऽपि वाक्यपदीये अष्टावेव स्फोटा: अङ्गीकृता: । ते च—१. वर्णस्फोट: २. पदस्फोट: ३. वाक्यस्फोट: ४. अखण्डपदस्फोट: ५. अखण्डवाक्य-स्फोट: ६. वर्णजातिस्फोट: ७. पदजातिस्फोट: ८. वाक्यजातिस्फोट-श्चेति । एतेष्वष्टस्वपि स्फोटेषु वाक्यस्फोटस्यैव अर्थाऽवबोध: जायत इति (हरे: अभिमतं) सर्वसम्मत: पक्ष: ।

भर्तृहरिमते स्फोटो नाम 'वाक्यस्फोटवाद' एवेति न विस्मरणीय: । अतएव स्वग्रन्थस्य 'वाक्यपदीयम्' इति नाम चक्रे । वाक्यस्फोटस्य प्रामुख्यं बहुभि: प्रतिपादितम् अङ्गीकृतञ्च ।

तत्र वाक्यस्फोटो मुख्य: तस्यैवाऽर्थबोधकत्वात् तेनैवाऽर्थसमाप्तेश्च ।

इति लघुमञ्जूषायां नागेशभट्ट: प्रकटयति । स्वप्रणीते वाक्यपदीये भर्तृहरि-रेवमाह—

वाक्यस्फोटोऽतिनिष्कर्ष: तिष्ठतीति मतिस्थिति: ।

वाक्यकाण्डे एवं स्पष्टीकरोति—यत् वाक्यस्फोटादेव अर्थाऽवबोधकत्वमिति—

एकस्यैवार्थतामाहुः वाक्यस्याऽव्यभिचारिणीम् ।

इति । अर्थसमाप्तिः वाक्येनैव सिद्ध्यतीति नैयायिकानामपि सम्मतमेवाऽस्मिन् विषये । तद्युक्तमुक्तमभियुक्तेन न्यायभाष्यकारेण—'पदसमूहो वाक्यम् अर्थसमाप्तौ' इति ।

पदस्फोटपक्षे पदे वर्णाः न भवन्ति । वर्णस्फोटपक्षे वर्णेषु अवयवाः अपि न सन्ति । वर्णातिरिक्तत्वं वर्णाऽभिव्यङ्ग्यत्वं, अर्थप्रत्यायकत्वं, नित्यत्वम् एव स्फोटत्वम् इति तत्र भवान् माधवाचार्यः सर्वदर्शनसंग्रहे स्पष्टीकरोति—

वर्णाऽतिरिक्तो वर्णाऽभिव्यङ्ग्यो योऽर्थप्रत्यायकः ।
नित्यः शब्दः स्फोट इति तद्विदो वदन्ति ॥

इदं भर्तृहरेः अनुगुणम् । सर्वं केवलं वाक्यस्फोटादेवाऽर्थावबोधः जायत इति भर्तृहरिसिद्धान्तः । स्फोटसिद्धान्त-प्रचारे प्रसारे च हरिः बहुपरिश्रममकरोदिति निर्विवादांशः ।

भर्तृहरेरनन्तरं स्फोटप्रतिपादकाः ग्रन्थाः बहवो निर्मिताः । ते च—आपदेवस्य स्फोटनिरूपणम् ; कौण्डभट्टस्य स्फोटवादः, श्रीकृष्णभट्टस्य स्फोटचन्द्रिका ; शेषकृष्णस्य स्फोटतत्त्वनिरूपणम् ; नागेशभट्टस्य स्फोटवादः इत्यादयः । स्फोटवादमधिकृत्य यद्यपि इमे ग्रन्थाः प्रवृत्ताः तथाऽपि भगवतः भर्तृहरेः (वाक्यपदीयं) स्फोटवादस्यैव अग्रस्थानं वर्तते ।

४.१८. वाक्यपदीय-व्याख्यानानि— वाक्यपदीयस्य बहवो व्याख्यातारः वर्तन्ते । तेषु एकादशशतकीयौ हेलराज-पुण्यराजौ । इमौ काश्मीरदेशीयौ । हेलराजस्य व्याख्यायाः नाम 'प्रकीर्णप्रकाशः', इति । पुण्यराजस्य 'प्रकाश' इति । भर्तृहरिणाऽपि स्वयमेव वाक्यपदीय-टीकानिर्मितेत्यनेन ज्ञायते—

अमुमेव विषयं चारुभाषिणः प्रो० चारुदेवशास्त्रिणः लिखन्त्येवम्—

भर्तृहरिणा स्ववाक्यपदीयकारिकाणां भाष्यं स्वयमेव व्यरचि ।

भर्तृहरेः वाक्यपदीयव्याख्यायाः नाम 'सेतुः' इति । इयं व्याख्या दुरदृष्टवशात् लुप्ता । काश्मीरदेशीयः फुल्लराजोऽपि तृतीयकाण्डस्य व्याख्यां

निर्ममे। वृषभदेवोऽपि 'पद्धतिः' इति व्याख्याम् अलिखत्। इयं व्याख्यैव प्राचीनतमा। इयमपि नोपलभ्यते। धनपालोऽपि वाक्यपदीयोपरि व्याख्यां निर्मितवान्।

४.२. शतकत्रयम्—'शतकत्रयं' महावैयाकरणेन भर्तृहरिणा प्रणीतम्। अत्र वर्तमानाः श्लोकाः सुलभशैल्यां विरचिताः अवलोक्यन्ते। 'शतकत्रयस्यैव' नामान्तरं 'सुभाषितत्रिशती'ति। तानि च— १. नीतिशतकम् २. भृङ्गारशतकम् ३. वैराग्यशतकञ्चेति। शतकत्रयपठनेनाऽयमलङ्कारशास्त्रे निपुण इति ज्ञातुं शक्यते। अत एवाऽयं श्लोकः सहृदयसमाजे श्रूयते—

महान्तः कवयस्सन्तु महान्तः पण्डितास्तथा।
महाकविर्महाविद्वान् एकोभर्तृहरिर्मतः॥

इति। वाक्यपदीयप्रणेता भर्तृहरिः शतकत्रयकर्ता भर्तृहरिः एक एवेति बहूनां विदुषां विमर्शकानां चाऽऽशयः। अवलोकयन्तु प्रो० चारुदेवशास्त्रिणामाशयः—

वाक्यपदीयप्रकीर्णयोः नीत्यादिविषयिण्याः।
शतकत्रय्याः हरिरेव कर्तेत्यभ्युपेयते॥

इति।

४.२.१. नीतिशतकम्—दण्डोपायेनाऽपि असाध्यं कार्यम् अनायासेन नीत्या बोधयितुं शक्यते। अत एव भर्तृहरिः नीत्या आदौ नीतिशतकमारेभे। नीतिशतकं शैशवोपयोगि। अस्य हितोक्तयः संस्कृतसाहित्यक्षेत्रे मूर्धन्यभूताः, समादरणीयाः, चिरस्मरणीयाः, शाश्वतिकाः, नीतिबोधकाः, ज्ञानप्रबोधकाश्च विभ्राजन्ते। भर्तृहरेः गीर्वाणवाणी मनोहारिणी, रमणीया च दिने दिने परिवर्धते।

४.२.२. भृङ्गारशतकम्—सर्वे मानवाः सुखमिच्छन्ति। भृङ्गारोऽपि मनुष्यस्याऽऽनन्ददायकम्। सर्वेषु रसेषु भृङ्गाररस एव श्रेष्ठतम इति कविकल्पभूतो भोजः मनुते। भृङ्गारः मधुर इति ध्वनिकारः आनन्दवर्धनाचार्यः अभिप्रैति। यत्—

भृङ्गार एव मधुरः परः प्रह्लादनो रसः।
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति॥

इति। कवि यदि नीरसो भवति तत् कृतिरपि नीरसा भवति। तन्निन्द्यमित्यालङ्कारिकाः शतककर्ता भर्तृहरिः शतकेऽस्मिन् भृङ्गाररसं अद्वितीयेन

मार्गेण परिपोषितवान्। अत्र संभोगवर्णनं, कामिनीगर्हणं, ऋतुवर्णनपद्धतिः इत्यादयः पद्धतयः यथायथं निपुणतया निरूपिताः। शतकमिदं यौवनोपयोगि।

४.२.३. वैराग्यशतकम्—वैराग्यशतकपठनेन ज्ञायते यद्भर्तृहरिः ज्ञाननिधिरिति। नो चेदेवं नाऽकथयिष्यत्। कीदृशं वेदान्तरहस्यं बोधयत्यत्राऽवलोकयन्तु—

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती रोगाश्च शत्रव इव प्रहरन्ति देहम्।
आयुः परिस्रवति भिन्नघटादिवाम्भः लोकस्तथाप्यहितमाचरतीति चित्रम्॥

भर्तृहरिः स्वाऽनुभवमपि तत्र तत्र मिश्रीकृत्य शतकत्रयं प्रणिनायेति ज्ञायते।

एतानि त्रीणि शतकानि आन्ध्राऽऽङ्ग्ल-फ्रेंच्-डच्-भाषासु परिवर्तितानि। शतकत्रयस्य बहवो व्याख्यातारः भवन्ति। ते च व्याख्याकाराः रामचन्द्रबुधेन्द्रः, महाबलः, धनसारः, रामर्षिः, गुणविनयः, मीननाथादयः।

५. भर्तृहरिप्रशंसा—महाभाष्यप्रदीपव्याख्याता कैयटः, वाक्यपदीयव्याख्याकारः हेलराजः पुण्यराजश्च भर्तृहरिं बहुधा प्रशंसन्ति। कैयटः महावैयाकरणं भर्तृहरिमेवं प्रगुणयति—

भाष्याब्धिः क्वाऽतिगम्भीरः क्वाऽहं मन्दमतिस्ततः।
तथाऽपि हरिबद्धेन सारेण ग्रन्थसेतुना।
क्रममाणः शनैः पारं तस्य प्राप्तोऽस्मि पङ्गुवत्॥

वाक्यपदीयव्याख्यातृशिरोमणिः हेलराजः भगवन्तं भर्तृहरिमेवं प्रस्तौति—

त्रैलोक्यगामिनी येन त्रिकाण्डी त्रिपदी कृता।
तस्मै समस्तविद्या-श्रीकान्ताय हरये नमः॥
सूक्तिश्रियः स्फुटा एता जयन्ति जगतां हरेः।
हरिर्भाष्याब्धिपीयूषच्छटाच्छुरितविग्रहः॥

शब्दब्रह्मविदं भर्तृहरिं वाक्यपदीय-व्याख्यातृचक्रवर्ती पुण्यराजः (भर्तृहरिं) गुरुरिति भावयित्वा गुरुवाक्यमनुसरामीत्युक्त्वा एवं प्रशंसति—

गुरवे भर्तृहरये शब्दब्रह्मविदे ... ...।
सर्वसिद्धान्तसन्दोह-सारामृत-मयाय च॥

अन्ये वैयाकरणाः नागेशभट्टादयः भर्तृहरिं बहुधा प्रशंसितवन्तः। किं बहुना—

महान्तः कवयस्सन्तु महान्तः पण्डितास्तथा ।
महाकविर्महाविद्वान् एको भर्तृहरिर्मतः ।। इति ।

६. उपसंहारः—भर्तृहरिः राज्ञः विक्रमादित्यस्य ज्येष्ठभ्राता । अयं हरिः बौद्ध इति केचन विमर्शकाः कथयन्ति । तन्न । अयमास्तिक इति कथने इदं प्रमाणम्—

स्मृतयो बहुरूपाश्च दृष्टाऽदृष्ट - प्रयोजनाः ।
तमेवाश्रित्य लिङ्गेभ्यो वेदविद्भिः प्रकल्पिताः ।।

अपि च— ब्रह्मध्यानाभ्यसनविधिना । इति ।

यदि भर्तृहरिः बौद्धः स्यात् तर्हि स्वकृतीनां प्रणयनानन्तरमेव बौद्धोऽभूदिति ऊहयितुं शक्यते ।

शब्दब्रह्मवित् महावैयाकरणोऽयं भर्तृहरिः वाक्यपदीयप्रणयनात्, महाभाष्यदीपिका-निर्माणाच्च महावैयाकरण इति प्रसिद्धेः बहुधा अर्हं इति विद्वज्जनप्रसिद्धिः । महाभाष्यव्याख्याता भर्तृहरिः इति प्रो० चारुदेवशास्त्रिणां, प्रो० मोक्षमूलर् - महाशयानां च अभिप्रायः । वी० स्वामिनाथन् - महाशयः काशीविश्वविद्यालय - साहाय्यात् हरेः महाभाष्यदीपिकां सम्पादितवान् । के० वि० अभ्यंकर तथा वी० पि० लिमये महाशयौ B.O.R.I. साहाय्यात् हरिभाष्यदीपिकां सम्पादितवन्तौ । केचन वाक्यपदीयकर्ता भर्तृहरिः एकः, शतकत्रयकर्ता महाभाष्यदीपिकायाः व्याख्याता चान्यः इति कथयन्ति ।

बहूनां पाश्चात्य-भारतीय-पण्डितानां विमर्शकानाम् आशयस्तु अयमेवेति ज्ञेयम् । व्याकरणशास्त्रे महाभाष्यं क्लेशमयम् । तस्य व्याख्यानं अत्यन्तक्लिष्टम् । एतादृशं बहुकठिन-व्याख्याननिर्माणात्, वाक्यपदीय-प्रणयनात्, भागवृत्ति - शब्दधातुसमीक्षादि - व्याकरणग्रन्थ - विरचनाद् भर्तृहरिः 'महावैयाकरण' इति निर्विवादांशः ।

# यण्-सन्धे रागम-रूपत्वम्

डॉ० घनश्याम उनियालः
साधु-आश्रमः, होश्यारपुरम्

संस्कृतभाषायाः सत्स्वप्यनेकेषु व्याकरणेषु तेषु पाणिनीय-व्याकरणमेव सर्वोत्कर्षेण वर्त्तते । व्याकरणमिदं लौकिकालौकिकसकलशब्दव्युत्पादकं संक्षिप्तं सरलं सूक्ष्मं वैज्ञानिकं च विद्यते ।

व्याकरणं नाम शब्दानुशासनशास्त्रम् । पाणिनीयं च शब्दानुशासनमष्टाध्यायीति नाम्नोच्यते । अत्र संस्कृतभाषाविषयकाणां विविधनियमानां निर्देशो विद्यते । परमस्याः कतिपयसूत्रेषु केचन प्रयोगाः स्वनियमविरुद्धा अपि दृश्यन्ते । पाणिनिसदृशस्य वैयाकरणस्य स्वनियमविरुद्धप्रयोगाणां प्रदर्शने केनापि कारणेन भाव्यम् । तत्कारणं च विद्यते नियमान्नियमान्तरकल्पनमेव । क्वचित्तूत्सर्गापवादशास्त्रयोर्मूलभूतमन्तरं दृष्ट्वापि नियमान्तरं कल्प्यते । अस्य नियमान्तरस्य व्यापकदृष्ट्या सूक्ष्मेक्षिकया चावलोकनेन असाधुत्वेनोच्यमानानां प्रकारान्तरेण च व्युत्पादितानां प्रयोगाणामपि साधुत्वमुपपद्यते । नियमान्तरकल्पनेन तत्तत्स्थलेषु 'छन्दोवत् कवयः कुर्वन्ति', 'छन्दोवत् सूत्राणि भवन्ति', 'सौत्रोऽयं प्रयोगः', 'आर्षत्वात् साधुः', 'बाहुलकात् सिद्धम्' इत्यादिकथनमपि नापेक्ष्यते । नियमान्तरमिदं मुख्यरूपेण पञ्चविधं कल्प्यते—

(१) सन्धिविषयकम्
(२) विभक्तिविषयकम्
(३) समासविषयकम्
(४) लिङ्गविषयकम्
(५) उक्तार्थप्रयोगविषयकं च ।

अस्मिन् लघुकायात्मकनिबन्धे सन्धिविषयकनियमान्तरान्तर्गतं 'यण्सन्धेरागमरूपत्वम्' प्रतिपाद्यते ।

'वर्णमात्रनिमित्तको वार्णो विकारः सन्धि'[1] रित्युच्यते । अयं विकारश्च आदेशरूपः ।[2] पाणिनीयव्याकरणे 'छे च', 'आङ्माङोश्च',

१. हरि० व्या० १. ४५.
२. महा० हयवरडिति सू० ।

'दीर्घात्' 'पदान्ताद्वा' इति चतुर्विधिसूत्राणि[3] परित्यज्य अन्यत्र सर्वत्र सन्धिकार्यमादेशरूपमेव मन्यते। तथात्र मध्वत्रेत्यादिप्रयोगेष्वपि यण्कार्यमादेशरूपमेव। 'इको यणची'[4]ति पाणिनीयं सूत्रं यणादेशविधायकमस्ति। सूत्रमिदमव्यवहितेऽचि इक: स्थाने यणादेशं निर्दिशति। तदनुसारेण भू+आदय इत्यत्र भ्वादय इति प्रयोगेण भवितव्यम्। भ्वादिप्रकरणमित्यत्र भ्वादिशब्द: प्रयुक्तोऽपि वर्त्तते। परं 'भूवादयो धातव'[5] इति पाणिनीयसूत्र एव 'भूवादय' इत्यत्र वकार आगमरूपेण दर्शितो न त्वादेशरूपेण। अत्र यण्कार्यस्यागमरूपेण दर्शनमेव 'इको यणची'ति नियमविरुद्धम्। एतत् स्वनियमविरुद्धप्रयोगप्रदर्शनमेव नियमान्तरसाधकम्। नियमान्तरस्वरूपं चैतत्—'अचि इक: परे यण्व्यवधानं भवती'ति। तेन यण्सन्धेरागमरूपत्वमपि सिद्ध्यति।

नियमान्तरमिदं न केवलं कपोलकल्पितमपितु पाणिनीयव्याकरणस्य प्राचीनवृत्तिष्वपि लभ्यते। भाषावृत्तिकार: पुरुषोत्तमदेव: 'इकां यण्भिर्व्यवधानं व्याडिगालवयो'रिति वचनमुद्धृत्य दधियत्र, मधुवत्रेत्यादियण्व्यवायिप्रयोगाणां साधुत्वं दर्शयति[6]। 'इकां यण्भिर्व्यवधानमेकेषामिति संग्रह'[7] इत्युक्त्वा जैनेन्द्रव्याकरणव्याख्याता अभयनन्दी यण्व्यवधानपक्षस्य सत्तां दर्शयति। 'केचित्त्विवर्णादिभ्य: परान् यरलवानिच्छन्ति। दधियत्र, तिरियङ्, मधुवत्र, भूवादय'[8] इति स्वोपज्ञबृहद्वृत्तिकारहेमचन्द्रवचनमप्युक्तार्थे प्रमाणम्। अमोघवृत्तिकारपाल्यकीर्त्तिरपि 'इको यण्भिर्व्यवधानमित्येके। दधियत्र, मधुवत्रे'[9] त्युक्त्वा यण्व्यवधानपक्षं द्रढयति। पं० क्षितीशचन्द्रचटर्जीमहोदयोऽपि 'टेकनीकल टर्म्स आफ संस्कृतग्रामर' नामकग्रन्थे यण्व्यवधानपक्षमेव प्रमाणयति—

भूवादीनां वकारोऽयं लक्षणार्थ: प्रयुज्यते।
व्यवधानमिको यण्भिर्वायुवम्बरयोरिव ॥[10] इति।

---

३. पा० ६. १. ७३-७६.
४. पा० ६. १. ७७.
५. पा० १. ३. १.
६. पुरु० भा० वृ० ६. १. ७७.
७. जैनेन्द्रमहावृत्ति: १. २. १.
८. हैमव्याकरणम् १. २. २१.
९. अमोघावृत्ति: पृ० १५.
१०. टे० ट० सं० ग्रा० पृ० ७१, टिप्पणी।

'भूवादय' इत्यत्र वकारविषयेऽस्त्याऽऽचार्याणां विप्रतिपत्तिः। 'भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते'[11] इति भाष्यवचनानुसारेणात्रत्यो वकारो वकारागमरूप एव। स च निपातनाद् भवति। किञ्चायं वकारागम मङ्गलार्थः प्रयुज्यते ?

अर्वाचीनवैयाकरणास्तु भूश्च वाश्च भूवौ। आदिश्च आदिश्च आदी। भूवौ आदी येषां ते भूवादय इति विगृह्य भू-प्रभृतयो वा-सदृशा ये, ते धातु-संज्ञका भवन्तीति सूत्रं व्याख्याय वासादृश्यत्वं क्रियावाचित्वेन गृह्णन्ति। तेन क्रियावाचिनां भूप्रभृतीनामेव धातुसंज्ञा जायते। तथा सति क्रियावाचिनो वा गतिगन्धनयोरित्यस्यैव धातुसंज्ञा भवति, न तु विकल्पार्थकनिपातस्य वाशब्दस्य, तस्य क्रियावाचित्वाभावा'[12] दिति।

वस्तुतस्तूक्तविधक्लिष्टकल्पनापेक्षया यण्व्यवधानपक्ष एवाङ्गीकरणीयः। तथाङ्गीकारेऽन्येऽप्युक्त - विधप्रयोगाः सिद्धयन्ति। तैत्तिरीयशाखासु त्वेता-दृशानां प्रयोगाणां बाहुल्यं वर्त्तते। 'प्राण इति द्वे अक्षरे, अपान इति त्रीणि, व्यान इति त्रीणि, तदष्टौ सम्पद्यन्ते'[13] इति जैमिनिब्राह्मणपाठः। अत्र 'व्यान' इत्यपपाठः, 'वियान' इति तेन भवितव्यम्। तदैव तत्र त्रित्वं सम्भवति। तथाङ्गीकारे च यण्व्यवधानपक्षस्यैव पुष्टिर्जायते। बौधायनगृह्ये 'त्र्यहे' इति स्थाने 'त्रियहे'[14] इति पाठ उपलभ्यते। कैवल्योपनिषदि च स्त्रीयन्न-पानादिविचित्रभोगैं'[15]रित्यत्र स्त्रीयन्नशब्दप्रयोगो यण्व्यवधानपक्षस्य सत्तां प्रमाणयति। अत्र स्त्रियन्नपानादिरिति पाठान्तरमपि लभ्यते।

केचन प्राचीनवैयाकरणा अपि ऐजागमस्थले यण्व्यवधानात्मकप्रकृति-माश्रयन्ति स्मेति महाभाष्योद्धृतेन 'य्वोरचि वृद्धिप्रसङ्गे इयुवौ भवत'[16] इति प्राचीनसूत्रेणाप्यवगम्यते। एतत्सूत्रानुसारेण सति ताद्धितेऽण्प्रत्यये वि+आकरण+अण्, सु+अश्व+अण् इत्यवस्थायां वृद्धेः पूर्वं प्राप्तं

---

११. महा० १. ३. १.

१२. बा० सि० कौ० सूत्र, १८, पा० १. ३. १.

१३. जै० ब्रा० १. ११२.

१४. बौ० गृह्यमेघः, ५. २, पृ० ३६२.

१५. कै० उ० १. १२.

१६. महा० १. ४. २.

यणादेशं प्रबाध्य इयुवादेशौ भवतः। तदनन्तरं च तयोरादिवृद्धिर्जायते। तदेवं वैयाकरण इत्यस्य प्रकृतिः वियाकरण इति विद्यते सौवश्व इत्यस्य च सुवश्व इति। एतेनापि यण्व्यवायिपक्षस्य पुष्टिर्जायते।

कात्यायनस्तु 'इयङादिप्रकरणे तन्वादीनां छन्दसि बहुलम्'[१७] इति वार्त्तिकं विरच्य तनुवं पुषेम, विषुवं पश्य, सुवर्गं लोकम्, त्रियम्बकं यजामहे इत्यनेकान् वैदिकप्रयोगानियङुवङादेशाभ्यां साधयति। तदेवं यण्व्यवायिपक्षोऽपि द्विविधः—आदेशरूप आगमरूपश्च। तत्रेयङुवङादेशरूपयण्व्यवायिपक्षाऽङ्गीकारे नेष्टसिद्धिर्भवति। अतः आगमरूपयण्व्यवायिपक्ष एवाङ्गीकरणीयः। तत्र हेतवः—

(क) इयङुवङादेशरूपयण्व्यवायिपक्षाङ्गीकारे, भूवादयः, स्त्रीयन्नपानादिरित्यादिप्रयोगा न सिद्ध्यन्ति। तत्र दीर्घेकारोकारयोरेव दर्शनात्। आगमरूपयण्व्यवायिपक्षे तु नोक्तदोषः।

(ख) कात्यायनः केवलं छन्दस्येव इयङुवङादेशाभ्यां यण्व्यवायिपक्षमङ्गीकरोति, परन्तु लौकिकसाहित्येऽप्येवंविधाः प्रयोगा उपलभ्यन्ते। अत्र 'त्रियम्बको विश्वरूप'[१८] इति महाभारतीयमेव वचः प्रमाणम्। कालिदासोऽपि 'त्रियम्बकं संयमिनं ददर्श' इत्यत्र त्रियम्बकमिति पदं प्रयुज्य लौकिकसाहित्येऽपि यण्व्यवायिपक्षस्य सत्तां दर्शयति। तद्धि आगमरूप एव यण् सम्भवति।

(ग) महाभाष्ये केषाञ्चित् प्राचीनवैयाकरणानामनुसारेण वियाकरणसुवश्वेति प्रातिपदिकाभ्यां वैयाकरणः, सौवश्व इति प्रयोगौ साधितौ। नैतौ छान्दसौ। अतोऽनयोरपि साधुत्वाय, अन्यवैयाकरणैः सह सामञ्जस्याय च यणागमपक्षोऽङ्गीकरणीयः।

(घ) पुरुषोत्तमदेवाऽभयनन्दि-हेमचन्द्र-पाल्यकीर्त्तिप्रभृतिभिर्वैयाकरणैर्यण्व्यवायिप्रयोगेषु यण् आगमरूपेणैव दर्शितः। तेन च वैदिकानां लौकिकानां च समेषां यण्व्यवायिप्रयोगाणां सिद्धिर्जायते।

तदेवमार्षवाङ्मये लौकिकसाहित्ये च यण्व्यवायिप्रयोगाणां दर्शनात् पाणिनीयव्याकरणे च तेषामनिर्देशादेतदेव प्रतीयते यत् प्राचीनकाले यण्व्यवायि-

---

१७. महा० ६. ४. ७७.

१८. महा० स० प० १०. २१, पूना संस्करणम्।

प्रयोगा लोकभाषायां प्रयुक्ता आसन्, परञ्च कालान्तरे ते लोपमुपागताः। अतएव पाणिनिना न साक्षान्निर्दिष्टाः, तथापि 'भूवादयो धातव' इति सूत्रे वकारव्यवधानं निर्दिश्य आगमरूपयण्व्यवायिपक्षोऽपि तेनाङ्गीकृतः।

वध्यत्र, मध्वत्रेत्यादिप्रयोगाणां साधुत्वाय यण आदेशरूपता, भूवादय इत्यादिप्रयोगाणां चान्वाख्यानाय यण आगमरूपता अपेक्षिता। तदर्थं च इको यणचीति सूत्रस्य द्विविधं व्याख्यानमपेक्षितमस्ति। तद् व्याख्यानस्वरूपं चैतत्— 'इकः स्थाने यण् भवति', इकः परे यण्भवती'ति च। अत्र यणादेशपक्षे 'इकः' इति षष्ठी विभक्तिर्मन्यते आगमपक्षे च 'इकः' इति पञ्चमी विभक्तिरिति। अस्य सूत्रस्य द्विविधार्थकल्पने पाणिनेर्भूवादय इति प्रयोग एव प्रमाणम्। तदेवमेकस्मान्नियमान्नियमान्तरकल्पनमपि पाणिनेरिष्टमित्यवगम्यते।



# उपसर्गविषयकोऽद्भुतो ग्रन्थः

प्रो० कृष्णलालः

आचार्यः, संस्कृत-विभागः, दिल्ली विश्वविद्यालयः, दिल्ली-७

यद्यपि यास्काचार्येण भाषाविभागं कुर्वता भाषायाश्चतुर्षु प्रमुखतत्त्वेषूपसर्गाः निर्दिष्टास्तथाऽपि संख्याऽल्पतयाऽऽकार-लघुतया च ते नातिमहत्त्वपूर्णाः, न च प्रायोऽध्ययनविषयतां भजन्ते। तथा सत्यप्यभिनवपाणिनिना पं० चारुदेवशास्त्रिणा पञ्चखण्डात्मकः "उपसर्गार्थचन्द्रिका" इत्यद्भुतो ग्रन्थः प्रणीतः। केवलमुपसर्गान् आधारीकृत्यापि तथाविधो बृहद् - ग्रन्थः प्रणेतुं शक्यते कदाचिद् इत्येतदनुमातुमपि दुःशकम्।

पण्डितप्रवरेण भूयसा प्रयत्नेन महता परिश्रमेण च विशालं संस्कृतवाङ्मयपारावारं मथित्वा विविधेष्वर्थेषु प्रयुक्तानुपसर्गान् वाक्यान्तर्गतानुद्धृत्य तदर्थान् विशदीकृत्याऽस्मिन् महति ग्रन्थे समस्तवाङ्मयाभिप्रायः प्रकाशितः। उदाहरणक्षेत्रविस्तरः, उदाहरणसमृद्धिः, उद्धृतवाक्यवैचित्र्यं चास्य ग्रन्थस्य वैशिष्ट्यम्। ग्रन्थमेतमधीत्य विपश्चिद् वैदिकवाङ्मयस्य, रामायणमहाभारतपुराणानाम्, अन्यसर्वस्य संस्कृतसाहित्यस्य च विशिष्टवाक्यैः परिचयं प्राप्नोति।

उपसर्गार्थान् विवेचयताऽनेन पाणिनिमार्गमनुसरता प्राज्ञवरेण उपसर्गाणां न त्वाकारादिक्रमोऽङ्गीकृतोऽपितु पाणिनिक्रमः प्राविरेवानुसृतः। अनेन पाणिनिं प्रति तस्य भक्तिरेव स्पष्टीभवति। धातवस्त्वकारादिक्रमेणानुक्रान्ताः। एकैकेनोपसर्गेण सह सकलवाङ्मये यः कश्चिद् धातुर्युज्यते तस्य तस्य सोपसर्गधातुप्रयोगस्यानेकान्युदाहरणानि दत्त्वा न केवलं तस्यानेके प्रयोगा निर्दिष्टा अपि तु तेषु तेषु स्थानेषु उपसर्गसंयोगेन ये विविधा अर्थाः सम्भवन्ति तेऽपि स्पष्टीकृताः। ग्रन्थमिममधीत्य जन उपसर्गप्रयोगविषये निःशङ्को जायते तस्य वाक्प्रसरश्च सुगमतामेति।

ग्रन्थगतेनैकेनोदाहरणेन सुस्पष्टमेतद् भविष्यति। उपसर्गार्थचन्द्रिकायाः प्रथमभागस्य द्विचत्वारिंशत्त्रिचत्वारिंशपृष्ठयोः प्र-उपसर्गप्रसङ्गे वच् - (परिभाषणे)-धातुना सह संयोगेन अनेकेष्वर्थेषु साहित्ये तस्य प्रयोगा दृश्यन्ते,

पण्डितमहोदयेन त एवं निर्दिष्टाः—प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट। (ऋ० ८. ९०. १५) इत्यत्र प्रवोचम् इत्ययं प्रयोगः उपदिशामि अनुशास्मि वेत्यर्थं निर्दिशति। तं प्रवक्ष्यामि भारतीम्। (रामायणे, २. ६४. ३७) इत्यस्मिन् वाक्ये पुनः सोपसर्गोऽपि धातुः स्वमूलार्थे वक्ष्यामीत्यर्थ एव प्रयुक्तः। यो मा प्रावोचः (तै०सं० २. ६. ६. १) इत्यस्य यो मद्रहस्यमन्यस्मा आख्यद् इत्ययमर्थो निर्दिष्टः। मा नो अग्ने दुर्भृतये प्रवोचः (ऋ० ७. १. २२) इत्यत्राशयोऽस्ति—मा नः परस्मै रीरध इत्याह। प्रपूर्वकस्य वच्धातोरर्थः कीर्तनं प्रख्यापनमित्यपि विद्यते यथा प्र च दातारममृतेषु वोचः (मै० सं० ४. १३. ७) इत्यस्मिन् वाक्ये दृश्यते—दातारं कीर्तय इति। संज्ञप्तः पशुरिति प्रोक्ते (का० श्री० ६. ५. २३) इत्यत्र प्रोक्ते इत्यस्यार्थः प्रकर्षेणोक्ते अथवा उच्चैर्व्याहृते इत्येवं द्योत्यते। प्रवचनमित्यस्यार्थ उच्चारणमपि भवति यथा महाभाष्ये दृश्यते, न हि पाणिनिना शब्दाः प्रोक्ताः, किन्तर्हि सूत्रम् अर्थात् शब्दाः नोच्चरिताः। तस्मै हाप्रोच्यैव प्रवासाञ्चक्रे (छान्दोग्योपनिषदि ४. १०. २) इत्यस्याभिप्रायोऽस्ति यद् अनिवेद्य अनामन्त्र्यैव प्रवासार्थं गतः। आचार्यवर्यस्यात्र टिप्पणी वर्तते—इहापि प्रशब्दो विशेषकृन्न। अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च (मनु० ३. १०४) इत्यत्र प्रवचनम् इत्यस्यार्थः वेदाङ्गानि अस्ति यैः वेदार्थः प्रकर्षेणोच्यते व्याख्यायते वा।

एवमुपसर्गाणामर्थक्षेत्रविस्तारोऽनुमातुं शक्यते। अत एव कथयितुं शक्यते यत् लघ्वाकारा वा अल्पसंख्याका वोपसर्गाः संस्कृते कथमपि गुणभावं नापद्यन्ते। उपसर्गाः खलु संस्कृतस्य महती शक्तिः। अनेकार्थानामनेकेषां शब्दानां निर्माणं प्रयोगश्चैभिरेव सुशकम्।

उपसर्गार्थनिर्णये यद्यपि पण्डितचारुदेवशास्त्रिणा टीकाकाराणां साहाय्यं गृहीतं तथापि टीकाः सम्यगालोच्य टीकाकारैः कृतानि कानिचिद् असाधूनि विवरणानि निराकृतानि, एवं विधेषु स्थानेषु च पुष्कला युक्तयः पुरतः स्थापिताः।

अस्य ग्रन्थस्योपोद्घातो विदुषां महत आह्लादाय कल्पते। तत्राभिनवपाणिनिरस्य प्रणेता प्रथममेवोपसर्गप्रयोगविषये सर्वानिवम् अवहितान् करोति—परं नहि यः कश्चिदुपसर्गो येन केन शक्यो धातुना योक्तुम्। कश्चिदेव तु केनचिदर्हति योगम्। प्रतिनियत-विषयाः शब्दा भवन्तीति नात्र प्रायोक्त्री विवक्षा प्रभवति।

शब्दप्रयोक्तॄणां कृतेऽत्रोपसर्गप्रकृतिरेवं स्पष्टीकृता—केचिदुपसर्गाः कृति प्रत्यये यमर्थमाहुर्न तं तिङि—प्रश्रित इत्यादृतो विनीतो वा भवति, प्रश्रयत इति तु प्रतिश्रयणपूर्वकं निषदनमाचष्टे प्रायेण। कुडचं संश्रित्य निषीदतीत्यर्थः।

उपोद्घाते चोपसर्गाणां द्योतकत्ववाचकत्वविषये विस्तरशः विचारः कृतः। सर्वेऽपि पक्षा युक्तिपूर्वकमुपन्यस्ताः। सर्वप्रथममुपसर्गा द्योतका इत्यस्मिन् विषयेऽनेकान्युदाहरणानि दत्त्वा प्रतिपादितं यद् यद्यपि धातुपाठे प्रायेणैकस्य धातोरेकैक एवार्थो निर्दिष्टः सौकर्यार्थं तथापि धातवोऽनेकार्थाः सन्ति तथा च बहुष्वर्थेषु तेषां प्रयोगाः साहित्ये दृश्यन्ते, उपसर्गाः केवलमेतेषामन्तर्हितानामर्थानामेव द्योतका भवन्ति। स सोऽर्थो धातुषु पूर्वमेव विद्यमानोऽस्ति। तथैव धातूनां वाचकत्वविषयेऽपि बह्व्यो युक्तयः सोदाहरणं स्थापिताः तत्रोच्यते यत् सर्वेषामेव धातूनामनेकेऽर्था न विद्यन्ते, बहूनां धातूनां साहित्य एकस्मिन्नेवार्थे प्रयोगो दृश्यते। यद्युपसर्गा वाचका न स्युस्तर्हि एतेषां धातूनामुपसर्गयोगैरर्थान्तराणि कथं सम्भवेयुः? तदनु केषांचिदेतदपि मतं सोदाहरणं प्रतिपादितं यत् केचिदुपसर्गा अनर्थका अपि भवन्ति। तेषां योगेन धात्वर्थे किमपि परिवर्तनं न लक्ष्यते। धातूपसर्गयोः सम्भूय धातुत्वं भवति इत्येतदप्येकं मतम् उपन्यस्तम्।

उपोद्घातगता अन्ये विशिष्टविषयाः सन्ति। वेदे धातूपसर्गयोगः, उपसर्गवशाद् धातूनां सकर्मकत्वाकर्मकत्वे अर्थविकासक्रमः इति। वेदविषये प्रणेत्रा प्रतिपाद्यते यद् वेदे उपसर्गाणां यथा प्रचुरप्रयोगा दृश्यन्ते, न तथा लौकिकसाहित्ये। उपसर्गवशाद् धात्वर्थे कीदृशो विकासः कथं भवतीत्ययं रोचको विषयः। अत्रैकमुदाहरणं पर्याप्तं स्यात्—धारणपोषणार्थो धा-धातुः अभिपूर्वः कथनार्थे वर्तते। तद्विषये वैदिकैरुदाहरणैरभिपूर्वस्य धा-धातोर्बन्धनार्थं स्पष्टीकृत्योच्यते—अभिधानं च शब्दैरर्थानां निबन्धनमेवेत्यभिदधातिः कथनमर्थान्तरं सङ्क्रान्तः कालेन।

एवमनेन ग्रन्थेन पण्डितचारुदेवशास्त्रिणां भाषां जिज्ञासमानेभ्योऽस्मादृशेभ्यो महदुपकृतम्।

# अव्ययानि तेषां स्वराश्च

श्री प्रेमलालः शर्मा
साधु-आश्रमः, होश्यारपुरम्

संस्कृतवाङ्मयेऽव्ययशब्दा इतरशब्दानां नामादीनामपेक्षया न्यूनमेव विभक्ताः परिदृश्यन्ते । प्रायेणैषु कानिचिदव्ययपदानि एतादृंशि आसन् यानि पुरा देशादिवाचीनि सन्त्यपि क्रियाविशेषार्थंवाचकरूपेण प्रयुज्यन्ते स्म । कालानन्तरञ्च तानि पदानि शनैश्शनैः विशिष्टां विभक्ति प्रदर्शयन्ति क्रियापदैः सह संयुक्तान्यभवन् । एषु प्रादीनि अव्ययानि क्रियाभियोगे 'उपसर्गा' इत्युच्यमानानि निदर्शनत्वेन द्रष्टव्यानि सन्ति ।

अपरेऽव्ययशब्दाश्च ते ये क्रियायोगे नावलोक्यन्ते, याथार्थ्येनैते केवलं नामपदानां विभक्तीनामवधारणे साहाय्यं कुर्वन्तोऽवलोक्यन्ते । यथा—'सूक्तस्य पुरस्ताद्' इत्यादौ पुरस्तादित्यव्ययं सूक्तेति नामपदस्य विभक्ति-निर्धारणे साहायकं भवति । अपि च छन्दोबद्धेषु मन्त्रेषु पादपूर्त्यर्थमप्य-व्ययानां प्रयोगः बाहुल्येन दृश्यते वैदिके साहित्ये ।

एतादृक्षु अव्ययेषु सुबादिप्रत्ययेन निष्पन्नतायाः कोऽपि लेशो न दृश्यते । तथा चोक्तम्—

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥
(सिद्धान्तकौमुदी, सू० ६०८)

संस्कृतसाहित्ये कानि सन्ति तान्यव्ययपदानीति प्रश्ने त्वाह पाणिनिः—

स्वरादिनिपातमव्ययम् । (पा० १. १. ३७)

स्वरादिगणपठिताः शब्दाः चादिगणपठिताश्चादयः प्रादयश्च निपातसंज्ञायाम-व्ययसंज्ञका भवन्ति । निपतन्ति उच्चावचेष्वर्थेष्विति निपाताः । अद्रव्यार्थ एवैषां प्रादीनां निपातत्वमभिधीयते न तु द्रव्यार्थे । सत्त्ववाचकत्वं नाम द्रव्यवाचकत्वम् । लिङ्गसंख्यान्वितञ्च द्रव्यं भवति । तद्विरोधि अद्रव्यम् । एतस्माद्धेतोश्चादिषु निपातसंज्ञकेषु स्वरादयो न पठिताः । अन्यथा स्वस्ति

वाचयति, स्व: पश्यति, इत्यादौ कर्मादिकारकयोगेन सत्त्ववाचकत्वान्निपातसंज्ञापत्ति: स्यात् । चादीनां ह्यसत्त्ववाचकत्वे निपातत्वं भवति न तु सत्त्ववाचकत्वे । तथा हि—लोध्रं नयन्ति पशु मन्यमाना: इत्यस्मिन् वाक्ये पशु इति सम्यगर्थे प्रयुक्तत्वान्निपातसंज्ञको निगद्यते । परमत्र पशु: छाग: इत्यादौ पशुशब्दस्य जीवविशेषद्रव्यवाचकत्वान्न निपातत्वं स्वीक्रियते । एवमेव अ: विष्णु:, इ: काम: इत्यादिषु स्थलेषु अकारेकारयोर्निपातत्वं नाभिधीयते द्रव्यवाचकत्वात् । तेन, स्वरादीनां शब्दानान्तु सत्त्ववाचकत्वेऽसत्त्ववाचकत्वे चाव्ययसंज्ञेष्यत इति प्रदर्शनार्थमुक्तसूत्रे निपातेषु चादिषु स्वरादयो न पठिता इति ज्ञाप्यते ।

स्वरादयश्चादयश्च गणपठिता: सर्वेऽव्ययसंज्ञका भवन्तीति उक्त्वाऽन्ये के के च ते शब्दा येऽव्ययत्वमाप्नुवन्तीति उच्यते—

तद्धितश्चासर्वविभक्ति: । (पा० १. १. ३८)

असर्वविभक्तिकस्तद्धितप्रत्ययान्त: शब्दोऽव्ययसंज्ञक उच्यते । यथा—यथा, तथा, एतर्हि, यत्र, तत्र, अधस्तात् प्रभृतय: ।

कृन्मेजन्त: । (पा० १. १. ३९)

कृद्ये मान्ता एजन्ताश्च शब्दास्तेऽव्ययसंज्ञका भवन्तीत्यर्थ: । अत्र 'मेजन्त' इति पठितत्वात् कृत एव विशेषणत्वमापन्नं न तु कृदन्तस्यापठितस्य । अन्यथा प्रतामौ प्रताम इत्यादिषु स्थलेषु अव्ययसंज्ञापत्ति: स्यात् । तेन, स्मारं स्मारं जीवसे पिबध्यै इत्यादीनां मेजन्तानामेवाव्ययत्वमापन्नं भवति । अपि च—

क्त्वातोसुन्कसुन: । (पा० १. १. ४०)

क्त्वादिप्रत्ययान्ता: शब्दा अपि अव्ययसंज्ञका भवन्तीति भाव: । तथाहि—कृत्वा, उदेतो विसृप: इति विक् ।

अव्ययीभावश्च । (पा० १. १. ४१)

अव्ययीभावश्चाव्ययसंज्ञ: स्यात् । अस्मिन् सूत्रे लुकि मुखस्वरोपचारयोर्निवृत्तौ चेति परिगणनं कर्त्तव्यम् । परिगणनस्य को लाभश्चेदुच्यते—प्रथमं लुग्युदाहरणं द्रष्टव्यम्—

लुकि उदाहरणम्—

अव्ययीभावसमासस्यानव्ययसंज्ञायाम् अधिहरि, उपाग्नि इत्यादौ अव्ययादाप्सुपः (पा० २. ४. ४२) इत्यनेन सुपो लुगनापत्तिः स्यात् ।

मुखस्वरनिवृत्तावुदाहरणम्—

उपाग्निमुखः प्रत्यग्निमुख इत्यादौ मुखं स्वाङ्गम् (पा० ६. २. १६७) इति सूत्रेणोत्तरपदान्तोदात्तत्वे प्राप्ते नाव्ययदिक्शब्द० (पा० ६. २. १६८) इत्यनेन प्रतिषिद्धम् । तथा च सति बहुव्रीहौ प्रकृत्या पूर्वपदम् (पा० ६. २. १) इति सूत्रेण पूर्वशब्दप्रकृतिस्वर एव भवति, पूर्वपदञ्चात्र उपाग्नि इति समासस्वरेणान्तोदात्त एव निष्पन्नः ।

उपचारनिवृत्तावुदाहरणम्—

विसर्गस्थानिकस्य सकारस्य उपचार इति प्राचां संज्ञा । उपपयः कारः इत्यादौ अतः कृकमिकंस ··· ··· अनव्ययस्य (पा० ८. ३. ४६) इति सूत्रेण विसर्गस्य सत्वे प्रसक्तेऽपि अव्यय-संज्ञकत्वात् पर्युदस्यते ।

वैदिकवाङ्मये उदात्तानुदात्तस्वरितस्वराणां महद्-वैशिष्टचमस्तीति नास्त्यगोचरं विद्वच्चणानाम् । एषां न केवलम् आकारादिस्वराणां ध्वनि-रूपेणोच्चारणे महत्त्वमपि तु अर्थप्रत्यायनेऽपि मन्तव्यम् । अत एव स्थूलपृषती इत्यादौ पूर्वपदप्रकृतिस्वरश्चेत्तर्हि बहुव्रीहिसमासात् स्थूलानि पृषन्ती यस्याः इत्यर्थः स्यात् । बहुव्रीहौ हि पूर्वपदप्रकृतिस्वरो भवति बहुव्रीहौ प्रकृत्या पूर्वपदम् (पा० ६. २. १) इति सूत्रात् । यदि चात्र समासस्य (पा० ६. १. २२३) इति सूत्रेणान्तोदात्तः स्यात्तर्हि तत्पुरुषसमासत्वात् स्थूला चासौ पृषती इत्यर्थः स्यात् । एवमेवाव्ययस्वराणामपि वैशिष्ठ्यं ज्ञेयम् ।

अव्ययानां स्वरव्यवस्था—

महर्षिणा पाणिनिना समेषामव्ययशब्दसमूहानां स्वरावधारणे अत्यल्प-मेवोक्तम् । कानिचिदेव सूत्राण्येतेषां विषये सूत्रितानि सन्ति । यत् किञ्च पाणिनीयसूत्रेषु नावलोक्यते तत् फिट्सूत्रकारेण फिट्सूत्राणि विरच्य वैदिक-व्याकरणं परिवृढमिति । एतेन, ये केचन तद्धिताविप्रत्ययान्ता अव्ययशब्दास्तेषां स्वरव्यवस्थायां पाणिनीयसूत्राणि बाहुल्येनोपलब्धानि सन्ति । तेषां स्वराणां निदर्शनन्तु नास्माकमभिमतम् । अस्पष्टस्वराणामव्ययानां स्वरप्रदर्शन एवायमुपक्रमोऽवगन्तव्यः ।

स्वरादीनामव्ययानामुदात्तादिव्यवस्था तु गणपाठ एव द्रष्टव्या, तेषां स्वरादीनामुदात्तादिरूपेण परिगणितत्वात् । अत्र तु केवलं निपातादीनामेव स्वरविषये यत् किञ्चिद् वक्तव्यमवज्ञेयम् ।

**आद्युदात्तानि निपातसंज्ञकान्यव्ययानि—**

'निपाता आद्युदाता:', (फिट् ४. १२) निपाता आद्युदात्ता भवन्तीति सूत्रार्थः ।

अङ्ग, शश्वत्, चेत्, हन्त, माकिं, माकीम्, नाकिं, नाकीम्, मा, यावत्, तावत्, श्रौषट्, वौषट्, हन्त, स्वाहा, नञ्, वषट्, ओम्, अथो, अथ, सु, आ, उकम्, है, अहो, यथा, अह, तथाहि, तु, नु, इति, शम्, हिकम्, जातु, पशु, सह, अये, अरे, वै, अधस्, अलम्, अरम्, हिरुक्, प्रति, ईम्, किल, कम्, खलु, ननु, नाम, नेत्, चेत्, कु इति दिक् ।

प्रादय उपसर्गा अपि आद्युदात्ता एव पठयन्ते । परं, अभि उपसर्गस्तु अन्तोदात्त एवोच्चार्यते । यथोक्तम्—

उपसर्गश्चाभिवर्जम् (फिट् ४. १३)

अपि च यथा इति निपातः पादान्ते पठितत्वात् सर्वानुदात्तो भवति । यथा चाह—

यथेति पादान्ते (फिट् ४. १७)

कम् इति निपातोऽनुदात्तोऽपि उपलभ्यते । आद्युदात्तस्तु वेदेषु ब्राह्मणेषु चोच्चार्यते । प्रायेण अनुदात्तस्तु ऋग्वेद एव उपलभ्यते ।

नञ् इति निपातस्तत्पुरुषसमासे आद्युदात्त एव पठचते न तु समासस्य (पा० ६. १. २२३) इति सूत्रेण तत्पुरुषसमासस्य अन्तोदात्तनियमादन्तोदात्त इति । यथा—अनग्निदग्धा: (ऋ० १०. १५. ४) इति पूर्वपदप्रकृतिस्वरात् निषेधार्थे विशेष आग्रहो दृश्यते । बहुव्रीहिसमासे नञ् इति निपातयोगेऽन्तोदात्तप्रकृतिस्वरोऽपि भवति । यथा—अनपत्यानि (ऋ० ३. ५४. १८) इत्यादौ ।

**अन्तोदात्तानि निपातसंज्ञकान्यव्ययानि—**

एवादीनामन्तः (फिट् ४. २४)

एवादीनां निपातानामन्तोदात्तः स्वरो भवति। के च त इति प्रश्न एते परिगण्यन्ते। तथाहि—

एव, एवम्, नूनम्, कुवित्, स्वधा, पुरा, अद्धा, मन्ये, मिथ्या, चन, नहि, इह, सत्यम्, श्रद्धा, इद्धा, उत, उतो, द्विता इति दिक्।

## सर्वानुदात्तसंज्ञकान्यव्ययानि—

चादयोऽनुदात्ताः (फिट्० ४. १६)

चादयो निपाताः सर्वानुदात्ताः पठ्यन्त इति भावः। तथाहि—

च, वा, ह, सूपत्, कूपत्, कच्चित्, अकारादयो नव स्वराः, धिक्, हाहा, प्याट्, पाट्, आम्, इव, ईम्, सुकम्, सुधा, ईहा, आहोस्वित्, चटु, चाटु, सिम्, सीम्, चित्, स्म, स्वित्, ह इति दिक्।

परं, सिम् इत्यव्ययन्तु अथर्ववेदेऽन्तोदात्तः पठ्यते। तथा चोक्तम्—

सिमस्याथर्वणेऽन्तोदात्तः (फिट्० ४. ११) इति।

# आङ्ग्लभाषायां संस्कृत-तद्धिताः

श्री लक्ष्मणसिंहः अग्रवालः
५४/१ सिंही गेट, वल्लभगढ़ (हरियाणा) - १२१ ००४

आङ्ग्लभाषा देववाणी चेति भाषाद्वयं भाषाविज्ञान-दृष्टचा भारोपीय-भाषा-परिवारस्य सदस्यत्वं भजते। तत्र देववाणी परिवारस्यास्य प्राचीनतमेषु सदस्येषु गण्यते। आङ्ग्लभाषा तु जर्मनतः निःसृत्य लैटिन-फ्रेंच-ग्रीकाऽऽदिभ्यो यूरोपीयभाषाभ्यः शब्दान् गृहीत्वा स्वशब्दकोषं सम्पन्नं कृतवतीति सर्वसम्मतः सिद्धान्तः। फलतः द्वेऽपि इमे भाषे ध्वनि-शब्द-रूप-रचना-वाक्यार्थ-विषयेषु सामान्यप्राचुर्यं प्रत्यक्षमेव दर्शयतः। तत्र धातूनां कृदन्तानां च प्रयोगसमानता तु लेखकेन धातुविवर्ते नाम ग्रन्थे विस्तरशो विशदीकृता। अत्र आङ्ग्लभाषायां संस्कृत-तद्धितानां प्रयोगमधिकृत्य किमपि विचार्यते।

संस्कृतभाषायां तद्धितप्रयोगैर्नाम निपातशब्देभ्यः शब्दान्तराणि-निर्मीयन्ते। निर्मिताः शब्दाः प्रायशो भाव-वाचकसंज्ञा-विशेषण-क्रिया-विशेषण-पूर्णसंख्या-बोधकाश्च भवन्ति। एतेषां तद्धितानामपभ्रंशा आङ्ग्लभाषायां वैपुल्येन प्राप्यन्ते। कतिपयानाञ्च प्रयोगे महदाश्चर्यं दृष्टिपथमवतरति।

देववाण्यां तल्, त्व, ष्यन् इति प्रत्ययत्रयं भाववाचकसंज्ञां निर्मिमीते। तल्—प्रत्ययस्य च 'ता' इत्यादेशो भवति। आङ्ग्लभाषायां तस्य प्रत्ययस्य ty, th, इत्यपरूपा प्राचुर्येण प्रयुज्यन्ते, यथा— Purity=पवित्रता, Sanity=ज्ञानता, Width=व्यात्तता चेति। आश्चर्यमिदं यत् स्वयं 'तल्' शब्दांशोऽपि ture, tude इति रूपयोः सम्प्रयुज्यते। यथा—Literatue (Letter+तल्), Magnitude=महान् (महत्+तल्>ता=महत्ता)। त्वं—Dom इति दृश्यते। यथा—Martyrdom (मर्तृत्वम्)।

यत्र तत्र 'त्व'स्य th अपि प्राप्यते, यथा truth (ध्रुवत्वं)। ष्यन्—प्रत्ययः संस्कृतभाषायां चातुर्यं, चातुरी; माधुर्यं, माधुरी; इत्यादि शब्दान् जनयति। आङ्ग्लभाषायां तस्य y, ism, age इति रूपत्रयं प्रयुज्यते। यथा—gluttony (गार्धनी), courage (शौर्य>सौरज—'धीरज सौ रज तेहि रथ चाका') heroism (शौर्यम्)। यदा कदा y प्रत्ययस्य यथा तातु

तासु प्राकृतासु लोपोऽपि सञ्जातः दृश्यते, यथा—Dirt=दारिद्र्य>दारिद—"दीन दयाल दुसह दुःख दारिद" इत्यत्रोपलक्षणमात्रेण निदर्शनम् ।

एवमेव ठक्—प्रत्ययस्यापि चमत्कारपूर्णः प्रयोगो दृश्यते । देववाण्यां तस्य इकादेशो भवति । आंग्लभाषायां स इक् सञ्जातः, यथा—concyclic (सांचक्रिक), tragic (दौर्जातिक) । परं स्वयं ठक् प्रत्ययोऽपि Tic रूपे वर्तते यथा—Phonetic (भाणी+ठक्), Romantic (रमण+ठक्) ; वतुप् प्रत्ययस्य ous, uous अपभ्रंशो दृश्यते यथा—Virtuous (वृत्तवत्) grievous (क्लैव्यवत्) । एवमेव यत्-प्रत्ययः y इति रूपं प्राप्तः । यथा—cloudy, watery, airy प्रभृति शब्देषु स्पष्टमेव । Sudden शब्दे तुडागमपूर्वकः टयु प्रत्ययः (सद्यः+तन) एवमेव pristine (प्राक्तन) अपि तथाभूतः शब्दः ।

देववाण्यां तरप्, तमप्, ईयसुन्, इष्टन् इति प्रत्ययाः तुलनावाचकविशेषणशब्दान् प्रकुर्वन्ति । पाश्चात्यभाषायां पुनः er, est इति प्रत्ययौ क्रमशः तरस्य इष्ठस्य च विकृते रूपे । यथा—greater, (गरिष्ठतर, श्रेष्ठतरवत्) Best (वरिष्ठ) Less (लघीयस्) Lest (लघिष्ठ), fatter (पृथुतर) Fattest (प्रथिष्ठ) तथैव here (अत्र=इदं+त्रल्) there (तत्र>तत्+त्रल्), Where (कुत्र<किम्+त्रल्) इत्यत्र त्रल्-प्रत्ययः । About (अभि+तः), Forth (पुरतः) इत्यत्र तः प्रत्ययः स्पष्टमेव प्रतिभाति ।

इदानीं पूर्णसंख्याप्रत्ययाः द्रष्टव्याः ।

First=पौरस्त्य (पुरस्+त्यक्) । अमरकोशे पौरस्त्यशब्दः प्रथमार्थे पठितः । संस्कृतस्य तृतीयः शब्दः लैटिनभाषायां tertio विवेच्यभाषायां च Third इति जातः । आचातुर्थाद् दशमावधि वैदिक्यां मट्-थट्-प्रत्ययौ विकल्पेन प्रयुज्येते । लौकिक्यां थट् प्रत्ययः चतुर्थं षष्ठं चेति शब्दद्वयमेव साधयति । आङ्ग्लभाषा मट्-प्रत्ययं त्यक्त्वा केवलं थट्-प्रत्ययमेव प्रयुङ्क्ते । यथा—fourth, fifth, tenth, twentieth, इत्यादौ वर्णनीयः । सरलीकरण-पद्धतिं भजमाना भाषा अन्यान् सर्वानपि पूर्णसंख्याप्रत्ययान् हित्वा th-प्रत्ययनैव कार्यं करोति । इयं प्रवृत्तिस्तां भाषां वैदिकीं प्रति नेदयतितराम् ।

एवं संस्कृतस्य तद्धितप्रत्ययानां विशदा परम्परा आङ्ग्ल-भाषायां स्पष्टमेव लक्ष्यते । अन्येऽपि बहवस्तथाविधाः प्रत्ययाः यत्र तत्र शब्देषु पदे पदे प्राप्यन्ते । विस्तरभयादत्र विषयोऽयं समासेनैव निबन्धेऽस्मिन् विचारितः । कियदत्र सत्यं कियद् वा न स्वीकरणीयमित्यत्र पण्डिता एव प्रमाणम् ।

# विश्रामशब्दस्य साधुत्वासाधुत्वविचारः

डॉ० अभिमन्युः
प्रवाचकः (रीडर), संस्कृत-विभागः, पंजाबी-विश्वविद्यालयः,
पटियाला - १४७ ००२.

कामपि भाषामवबोद्धुं व्याकरणस्य ज्ञानं निश्चप्रचमेव, यतो हि व्याकरणमाश्रित्यैव शब्दानां साधुत्वासाधुत्वविचारविषये प्रतिपत्तिर्भवितुमर्हति, नान्यथा। शिष्टैः साधुशब्दा एव प्रयोक्तव्याः न त्वसाधवः। उच्यते चात्र—'एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवतीति।' अतः शब्दानां सम्यग् ज्ञानाय व्याकरणमेव शरणम्। संस्कृतव्याकरणे पाणिनेराचार्यस्य मूर्धाभिषिक्तं स्थानं वर्तते। संस्कृतभाषायाः शब्दानां प्रयोग-विचारविषये पाणिनिमनुवर्तन्ते सर्वे विद्वांसः। तैश्च वैदिक-लौकिकोभयविधशब्दानां साधुत्वं पाणिनीयाष्टाध्यायीमाश्रित्यैवान्वाख्यायते। परन्तु सन्ति बहवः एतादृशाः शब्दा येषां साधुत्वविषये महाकवयः पाणिनिव्याकरणं नाश्रयन्ते, अत एव ते चिन्त्याः भवन्ति। एतादृशेषु शब्देषु 'विश्राम'-शब्दोऽपि विद्यते। संस्कृतभाषायां निबद्धास्वनेकासु रचनासु 'विश्राम'-शब्दस्य प्रयोगः समुपलभ्यते। तद्यथा—

(क) स्वमेव भवनं शौरिर्विश्रामार्थं जगाम ह।
(महाभारतम्, ५. १४७. २)

(ख) विश्रामं लभताम्। (अभिज्ञानशाकुन्तलम्, २.६)

(ग) विश्रामो हृदयस्य यत्र। (उत्तररामचरितम्, १. ३९)

मुरारिकविना वत्सराजेन चापि निजरूपकेषु विश्रामशब्दस्य प्रयोगो विहितः। कविभिः प्रयुक्तोऽयं विश्रामशब्दः टीकाकारैः प्रामादिक एव प्रतिपादितः। वैयाकरणैश्चायमपाणिनीय एव स्वीकृतः[1]। परं

---

१. (क) 'विश्राममित्यपाणिनीयः पाठः।' विश्रान्तिमिति पठनीयम्। अभिज्ञानशाकुन्तलम्, राघवभट्टविरचितार्थद्योतनिकासमेतम्, पृ० ६७. (ख) 'विश्रामं भजतां' इति, 'विश्रामशाखिनं' इति च कालिदास-मुरारिप्रयोगवदमुष्य कवेः विश्राम इति प्रयोगः प्रामादिक इति प्रामाणिकाः। उत्तररामचरितम्, घनश्यामपण्डित-विरचित-संजीवनाख्यटिप्पणम्, पृ० २५. (ग) विश्राम इति त्वपाणिनीयम्। (सिद्धान्तकौमुदी, पृ० ३१३, सूत्रम्, ३१८४)

तत्त्वबोधिनीकारस्त्वेकं पद्यमुदाहरन् विश्रामशब्दस्य साधुत्वमेव स्वीकरोति। तथ्द्या—

रोगी चिरप्रवासी परान्नभोजी परावसथशायी।
यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्राम: ॥

इत्यादि कविप्रयोगा: साधव एवेति बोध्यम्।

विश्रामशब्दस्य साधुत्वासाधुत्वविषये मतभेदमवलोक्यैवात्र विचारणा प्रवर्तते।

पाणिनीयव्याकरणदृष्ट्या शब्दोऽयमापाततोऽसाधु: प्रतीयते। यतो हि वि+श्रम्+घञ् इत्यवस्थायां, घञ् - प्रत्ययस्य ञित्वमाश्रित्य "अत उपाधाया:[2]" इति सूत्रेण प्राप्ताया वृद्धया "नोदात्तो पदेशस्य मान्तस्याना चमे: ।[3]" इति प्रयुक्तेन निषेधेन भाव्यम्। अत एव विभिन्नैर्व्याख्याकारैरयं विश्रामशब्दप्रयोगोऽपाणिनीय:, प्रामादिक इति यावत्, समुद्घोषित:।

किन्तु यदा शब्दस्यास्य प्रामाण्यं विचार्यते तदा धैर्यावलम्बनमेव न्याय्यम्। यतो हि विश्राम - शब्दे 'नोदात्तोपदेश० —' इति वृद्धि - निषेधे प्राप्ते सत्यपि शिष्टै: प्रयुक्तत्वादेतस्य व्याकरणसम्मतता कर्तव्यावश्यकी भवतीति। शिष्टपरिज्ञानार्थं चैवाष्टाध्यायी। शिष्टप्रयुक्तानां चेवमन्वाख्यानं व्याकरणं नाम। अतोऽस्य संसिद्धिरनिवार्या जायते। साऽपि च नातिदुष्करा सविशेषप्रयास-साध्या वा।

विश्राम-शब्द-सिद्धौ महती समस्या वृद्धिनिषेधप्राप्तिरूपाऽऽपतति। सा चेत् येन केनाऽप्युपायेन प्रतिषिद्धा भवेत् तर्हि शब्दोऽयं सुगमतया साधु-शब्दकोटौ परिगणितुं शक्यते। अस्ति चासौ सम्भव:। भूयांसि परिहारा-न्तराणि प्रस्तोतुं शक्यानि तद्-वृद्धि-निषेधस्य। तद्यथा—

(१) आचार्य: पाणिनिर्वृद्धिनिषेधप्रसङ्गे नोदात्तोपदेशेति सूत्रेण केवलमाङ्पूर्वकं चम् धातुमेव वर्जयति—अनाचमेरित्युक्ते:। उक्तसूत्रस्योपरि वार्तिककार: कात्यायन: अधिकलक्ष्यदर्शित्वात् पाणिनिमतिशय्य पाणिन्युक्ते-नानाचमीति सूत्रांशेन सहैव कम् वम् धातू अपि तत्र स्वीकरोति 'अनाचमि-

२. पाणिनीयाष्टाध्यायी, ७. २. ११६.

३. तदेव ७. ३. ३४.

कमिवमीनामित्युक्तेः ।'[४] अर्थात् वृद्धिनिषेधे प्राप्ते वार्तिककारानुसारं आङ्-पूर्वकेन चम् धातुना सह कम् वम् धातू अपि वृद्धिनिषेधविषयौ न भवतः इत्यर्थः । अत्रेदं निवेद्यते यदिमं विश्रामशब्दप्रयोगमपि सुसंगतं व्याकरण-सम्मतं च कर्तुं 'अनाचमिकमिवमीनामिति पूर्वोक्त-वार्तिके एव विपूर्वकः श्रम् धातुरपि परिगणयितव्यः । एतेन यथा पूर्वोक्तास्त्रयो धातवः वृद्धिनिषेध-बहिर्भूतत्वात् वृद्धिविषया जायन्ते । परिणामतः आचामः, कामः, वामः, इत्येते त्रयः प्रयोगाः साधवः स्वीक्रियन्ते, तथैव विश्राम शब्दप्रयोगोऽपि पूर्वोक्तवार्तिकपठितत्वेन वृद्धिविषयत्वात् साधुः । अथवा केचिद् वैयाकरणा उक्तवार्तिके कम् धातोः स्थाने श्रमधातुं पठन्ति । तेनाप्ययमभिप्रायः पुष्यति ।[५] अस्तु, यद्यप्यत्र शङ्केयं समुत्पद्यते यदुक्तवार्तिकेन प्रस्तावितयोः कम्-वम्-इत्येतयोर्द्वयोर्धात्वोर्ग्रहणं तु शक्यमन्यथासिद्धं विधातुम् वामदेवाड्ड्यड्ड्यौ, धनहिरण्यात् कामे इति सूत्रयोः कामवामशब्दयोः पठितत्वात् वृद्धिदर्शनेन ज्ञापकसिद्धत्वात् । तथापि नैतत् सुष्ठु प्रतीयते । असन्देहार्थञ्चाध्येयं व्याकरणम् । अतः स्पष्टप्रतिपत्तिदृष्ट्या पूर्वोक्तयोर्द्वयोरेव धात्वोर्वार्तिके ग्रहणं न्याय्यम् । विश्रामशब्दप्रयोगोपपत्तये च विपूर्वकः श्रम् धातुरपि तत्र पठितव्यः ।

(२) अथवा द्वितीयं समाधानमिदं सम्भवितुं शक्नोति यत् धुर्यान् विश्रामयन् इत्यादिवत् उक्तविश्रामशब्दोऽपि णिजन्तोऽङ्गीकरणीयः । तदा वि+श्रम्+णिच्+अच् (एरच्) इत्यवस्थायां णित्वात् उपधावृद्धौ णि लोपे च सति भावेऽर्थे एव विश्रामशब्दो व्युत्पद्यते । नन्वत्रापि नोदात्तोपदेशेति वृद्धिनिषेधसूत्रप्रवृत्तिः कथं न स्यादित्युच्येत चेन्न । यतो ह्युक्तं सूत्रं केवलं चिणि ञिति णिति कृत् प्रत्यय एव च वर्तते । स्पष्टं चेदं यण्णिच् प्रत्ययः कृन्नास्ति कृदतिङिति नियमात् ।[७] परिणामतो वृद्धिनिषेधाभावे सति विश्रामशब्दः सङ्गच्छते ।

---

४. पा० ७. ३. ३४ इत्यस्योपरि वार्तिकम्—'अनाचमि कमि-वमीनामिति वक्तव्यम् ।'

५. 'अनाचमिकमिवमीनामित्यत्र केचिच्छ्रमिवमी पठन्तीति रक्षितः । ये तु न पठन्ति तेषां विश्रम इति ।'

दुर्घटवृत्तिः, टी० गणपतिशास्त्रि-सम्पादिता, भारतीयविद्या-प्रकाशन दिल्लीतः प्रकाशिता, सू० ७. ३. ३४, पृ० ११६.

६. रघुवंशम्, १. ५४.

७. पा०, ६. १. ९३.

यदि पुनरप्यत्रेदमुच्यते यत् विश्रामशब्दे णिजन्ते स्वीकृते सति तु— "मितां ह्रस्वः" इत्यनेन ह्रस्वेन भाव्यम् गमयतीत्यादिवदिति। तन्न, यतो हि "मितां ह्रस्वः" इत्युक्तसूत्रे उपरिष्टात् "वा चित्तविरागे" इति पूर्वसूत्राद् वा (विभाषा) इत्यनुवर्तते। सा च विभाषा व्याख्यानात्[८] व्यवस्थितविभाषा मंस्यते। परिणामतो "व्यवस्थितविभाषयापि कार्याणि क्रियन्ते।" इति परिभाषा विज्ञानात्,[९] विश्रामशब्दे 'मितां ह्रस्वः' इति सूत्रप्रयुक्तस्य ह्रस्वस्याभाव एव स्वीकरिष्यते। तेनोक्तप्रयोगो निर्बाधः सम्पद्यते।[१०]

किन्तु पुनरत्र प्रश्नोऽयमुत्पद्यते यदुक्त-प्रयोगे णिच्-प्रत्ययं स्वीकृत्य विश्राम-शब्दे निष्पादितेऽपि अर्थभेदरूपदोषस्तु भवत्येव। अर्थात् णिच्-प्रत्ययस्वीकारेण विश्रामशब्दे निष्पादिते सति योऽसौ णिच्-प्रत्ययस्य प्रयोजकरूपो व्यापारोऽर्थः सोऽपि तत्र संनिविष्टो जायते इति दोषः समुद्भवति। किन्त्वस्योत्तरे अत्रोच्यते यन्नाऽयं कश्चन दोषः। शक्योऽयमपि सुगमतया समाधातुम्। तच्च समाधिरयं यत् विपूर्वात् श्रम्धातोर्णिच्-प्रत्ययः स्वार्थे प्राकृते वाऽर्थे स्वीकर्त्तव्यः। अर्थात् तत्र णिच् - प्रत्ययस्य योऽसौ प्रयोजकव्यापाररूपोऽर्थस्तस्य विवक्षा न कार्या, श्रम्धातोः णिच् - प्रत्ययस्य स्वार्थे विहितत्वात्। तेन विश्रामशब्दे उक्तार्थभेदरूपो दोषः (प्रयोजकव्यापारः) स्वयमेव परिहृतो भवति। प्रयोगश्चायं साधुर्भवितुमर्हति। एवञ्च—

रोगी चिरप्रवासी परान्नभोजी परावसथशायी।
यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः॥

इत्यादिकविप्रयोगाः साधव एवेति बोध्यम्। विषयेऽस्मिन् प्रौढमनोरमाकारः, तत्त्वबोधिनीकारः, शब्दरत्नकारश्चेत्यादयो वैयाकरणाः पूर्णतया सहमताश्चकासति। अथवास्मिन् सन्दर्भे इदमपि वक्तुं शक्यं यद् योऽयं श्रम्-धातुः सम्प्रति दिवादिगणे पठितोऽस्ति सोऽसौ यदि चुरादिगणे पठ्येत तदापि

---

८. "व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्।"
(परि० सं० १)

परिभाषेन्दुशेखरः, सम्पादकः—के० वी० अभ्यङ्करः, भाण्डारकर ओरियण्टल रिसर्च इंस्टिटयूट् पूना।

९. परिभाषा सं० ९९.

१०. "न चैवमत्रापि 'मितां ह्रस्वः' इति ह्रस्वः स्यादिति शङ्क्यम्, वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयेण ह्रस्वाभावसिद्धेः।
(तत्त्वबोधिनी, पृ० ३२४)

विश्रामशब्दः साधयितुं शक्यः । यतो हि तदा श्रम्-धातोरनुदात्तत्वात् नोदात्तोपदेशेति वृद्धिनिषेधसूत्रं न प्रवर्तिष्यते । परिणामतो वृद्धिर्निर्बाधा सम्पत्स्यते । णिचः स्वार्थे जातत्वेनार्थभेदोऽपि न जनिष्यते, इतीष्टं सिद्धं भवति ।

किन्त्वात्राप्येषाऽसंगतिरुपतिष्ठते यत् श्रम्-धातौ चुरादिगणे स्वीकृते सति 'शमामष्टानां दीर्घः श्यनि' इति सूत्रं कथं संगंस्यते । यत इदानीन्तु शमादयोऽष्टौ धातवो दिवादिगणे एकत्र पठिताः । शमामष्टानाम्—इत्यत्र अष्टग्रहणेन ते सर्वेऽपि गृह्यन्ते । श्रम्-धातौ चुरादिगणे पठिते सति कथं तस्य ग्रहणं सेत्स्यति इति चेत्, न । शक्यञ्चायमपि दोषः परिहर्तुम् । श्रम्-धातू द्वौ स्वीकर्तव्यौ । दिवादिगणे तु पठित एव विश्राम्यति इत्येतदर्थम् । भावार्थकविश्रामशब्दसिद्ध्यर्थमपरः श्रम् - धातुश्चुरादिगणे पठितव्यः । स्पष्टञ्चेदं यदस्मात् श्रम्-धातोः णिच्-प्रत्यये स्वीकृते सत्यपि तस्य चुरादिगणे पठितत्वात् अयं णिच्-प्रत्ययः स्वार्थे भविष्यतीत्यर्थभेदरूपो दोषोऽपि न समापतिष्यति वृद्धिश्च निर्बाधा सती स्थानं लप्स्यते नोदात्तोपदेशेति वृद्धि-निषेधविषयबहिर्भूतत्वात् । किन्तु विचारणीया स्थितिर्विशेषरूपेण तदा संजायते यदा साहित्य एवोक्तशब्दमाश्रित्य साम्यमेकरूपता वा नोपलभ्यते । साहित्ये विश्राम-विश्रम इत्युभयोरपि शब्दयोः प्रचुरः प्रयोगः दरीदृश्यते । अतोऽस्य साधुत्वासाधुत्वविचारः नैवातिसुगमः ।

सन्दर्भेऽस्मिन् इयमेव कल्पना समीचीना प्रतिभाति यत् प्रतीयते प्राचीनकाले श्रम्-धातुविषयक उदात्तानुदात्तोपदेशे मतभेद आसीत् । एतस्यां परिस्थितौ उदात्तोपदेशपक्षे विश्रम-शब्दः साधुरस्ति । अनुदात्तोपदेश - पक्षे च विश्राम-शब्द इति । यथा च संकेतितं पूर्वमेव श्रम्-धातोः चुरादिगणे पाठेन । एवमुभावपि शब्दौ साधू प्रसिध्यतः ।

अथवेदमपि उपायान्तरं भवितुमर्हति यदुक्तशब्दः प्रज्ञादिगणे स्वीकर्त्तव्यः । नाप्यसंभवश्चायं प्रज्ञादिगणस्याकृतिगणत्वात् । तदा श्रम-शब्दात् प्रज्ञादिभ्यश्चेति अण्-प्रत्यये विहिते सति तस्य णित्वात् आदिवृद्धौ सत्यां श्राम-शब्दः निष्पद्यते । श्रम एव श्रामः । विगतः श्रमः यस्मिन् स 'विश्रामः' इति ।

इत्थमुपर्युक्तेन विवेचितेन समुचितेन समञ्चितेन प्रपञ्चेनेदमेव समीचीनं प्रतीयते यदुक्तो विश्रामशब्दो नाऽपाणिनीयः । इहेङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रनिबन्धनेनाचार्याणामभिप्रायो लक्ष्यते । अतः शब्दोऽयं सर्वथा साधुरेवेति अभ्युपगन्तव्यः ।

# अलुक्समासप्रकरणे द्वयोर्वार्तिकयोर्विवेचनम्

डॉ० भीमसिंहो वेदालंकारः
संस्कृत-विभागः, पञ्जाबीविश्वविद्यालयः, पटियाला

सामान्येन संस्कृतवाङ्मयस्य प्रायः सर्वेषु ग्रन्थेषु न्यूनाधिकाः प्रक्षेपाः दृग्गोचरीभवन्ति । अतः संस्कृतव्याकरणमपि नास्यापवादोऽस्ति । प्रस्तुत प्रसङ्गेऽहं यं प्रक्षेपं प्रति शेमुषीजुषां विदुषां ध्यानं आक्रष्टुमिच्छामि स खल्वलुक्समासप्रकरणे द्वयोर्वार्तिकयोः शब्दद्वयरूपेण चकास्ति । विषयेऽस्मिन् महाभाष्यानुसारं प्रथमं वार्तिकमिदमस्ति—

देवानाम्प्रिय इति च[1] । इति ।

वार्तिकमिदं षष्ठ्या आक्रोशे[2] इति सूत्रोपरि पठितम् । अस्यायमर्थो यत् 'देवानाम्प्रिय' इत्यत्रापि षष्ठ्या अलुग् भवतीत्युपसंख्यानं कर्तव्यम् । काशिकादिवृत्तिग्रन्थेष्वपि वार्तिकस्यैवमेव स्वरूपं विलसति—

देवानां प्रिय इत्यत्र च षष्ठ्या अलुग् वक्तव्यः[3] । इति ।

किन्तु महत आश्चर्यस्यायं विषयो यत् सिद्धान्तकौमुदीकारो भट्टोजिदीक्षितो वार्तिकस्यास्य स्वरूपं भाष्यकारसम्मतमस्वीकृत्याधोलिखितमङ्गीकरोति—

देवानाम्प्रिय इति च मूर्खे[4] । इति ।

अत्रेदं विचारणीयं यद् भट्टोजिदीक्षितेन वार्तिकेऽस्मिन्नयं 'मूर्ख' शब्दः केन प्रमाणेन प्रक्षिप्तः । सन्दर्भेऽस्मिन् परिशीलनेन प्रतीयते यत् प्रदीपकारस्य कैयटस्य प्रामाण्यमाश्रित्य भट्टोजिदीक्षितः 'मूर्ख' शब्दमुक्तवार्तिके सन्निवेशितवान् । यतः—प्राप्तिज्ञो देवानाम्प्रियो न त्विष्टज्ञः[5] । इति अत्रत्ये भाष्ये 'देवानाम्प्रिय' शब्दस्य व्याख्यायां कैयटो ब्रूते—

---

१. महाभाष्यम्, (प्रदीपोद्योतसहितम्) (महा०) सू० ६.३.२०.
२. पाणिनीयाष्टाध्यायी, सू० ६. ३. २०.
३. काशिका, सू० ६. ३. २०.
४. वैयाकरणसिद्धान्तकौमुदी, सू० ९७९.
५. महा० सू० २. ४. ५६.

देव-शब्दो मूर्ख-वाची । मूर्खस्य मूर्खा एव प्रिया भवन्ति[६] । इत्यादि ।

परमत्र भाष्यकारोक्तस्य 'देवानाम्प्रिय' शब्दस्य व्याख्यायां कैयटेन यः देव-शब्दो मूर्खवाची निगदितः सोऽसौ चिन्त्यः प्रतीयते । अस्योपरि किंचिद् गहनतरं विवेचनम् अपेक्ष्यते । अनुमीयते यद् 'देवानाम्प्रिय' शब्दस्यार्थः प्रारम्भादेव परिवर्तनशीलोऽवर्तत । प्रारम्भे शब्दोऽयं सम्भवतः तेषां जनानां कृते प्रयुज्यते स्म ये खलु यज्ञे पशुबलिप्रदानेन देवान् प्रीणयन्ति स्म । इत्थं ते देवानाम्प्रिया अभिधीयन्ते स्म । यतः—वैदिकी हिंसा हिंसा न भवति इत्येतत् स्वकल्पितं वाक्यं ते आप्तप्रमाणत्वेन गृह्णन्ति स्म । अतः देवनिमित्तां पशुहिंसामप्येते जना हिंसां न मन्यन्ते स्म ।

किन्त्वेतस्यां स्थितौ शङ्केयमुत्पद्यते यद्येवं स्यात् तर्हि सम्राजा अशोकेन एतादृशं मूर्खतापूर्णं हिंसासूचकमभिधानमुपाधिरूपेणात्मने किमर्थं प्रचारितम् । अत्रावधेयं यद् 'देवानाम्प्रिय' शब्दः सम्राजे अशोकाय रूढिरूपेण प्रयुज्यते । शङ्काया अस्या उत्तरमन्वेष्टुमस्माभिरितिहासस्यातीतानि पृष्ठान्यवलोकनीयानि । भाषाविज्ञानस्यार्थविकास - प्रक्रियायाश्चाश्रय आश्रयणीयः । प्राचीनेतिहासानुसारं ज्ञायते यदुक्तं 'देवानाम्प्रिय' इति विशेषणं सम्राजोऽशोकस्यासीत् । कलिङ्ग - प्रदेशविजयानन्तरं यदाऽशोको युद्धाद् अजुगुप्सत तदा स बौद्धधर्ममशिश्रियत् । आत्मने चाऽऽग्रहवशाद् इदमेव कर्मकाण्ड-परकमभिधानमधारयत् यन्नाम कर्मकाण्डिनो ब्राह्मणाः यज्ञनिमित्तं पशुवधं कर्तृभ्यः जनेभ्यः प्रददति स्म । एतस्य मूले, मन्ये, सम्भवतोऽशोकस्यायमाशयः आसीद् यत् ते जना 'देवानाम्प्रिया' न सन्ति ये खलु यज्ञे पशुम् आलभन्ते प्रत्युताहमेव देवानाम्प्रियोऽस्मि । यतोऽहमहिंसकोऽस्मि । अत्रेदं स्मरणीयम् यत् कलिङ्ग-विजयोत्तरमशोको युद्धं सर्वथात्याक्षीत् । किं च स्वयं बौद्धधर्मोऽप्यहिंसावादी वर्तते ।

किन्तु कालोऽयं आर्यानार्यसंस्कृत्योः संक्रमणकालोऽवर्तत । ब्राह्मण-धर्मगतविविधजटिलकर्मकाण्डस्य विरोधे जैनबौद्धधर्माभ्युदयं लभेते स्म । सम्प्रत्यशोकस्य बौद्धत्वात् निश्चयेन स ब्राह्मणानां सम्मानपात्रं नावर्तत । परिणामतः ते अशोकेन स्वयं प्रयुक्तं 'देवानाम्प्रिय' शब्दमपशब्दरूपेण प्रयोक्तुं आरेभिरे अर्थाद् अशोके बौद्धे संजाते तात्कालिका ब्राह्मणा देवानाम्प्रियसदृशं

---

६. महाभाष्यप्रदीपः, सू० २. ४. ५६.

शुद्धं सात्त्विकमहिंसकशब्दमप्यवहेलनया प्रयोक्तुं आरप्सत । शनैः शनैः किंचित् कालानन्तरं शब्दोऽयं जनसामान्ये साक्षाद् अप शब्द एव संजातः ।

किन्त्वर्थगतमामूलचूलमिदं परिवर्तनं सहसैव न संजातम् । अशोकस्य पर्याप्तकालान्तरमप्युक्तशब्दस्यार्थं मूर्खो नासीत् । भाष्यकारोऽत्र प्रमाणम् । तद् यथा —

प्राप्तिज्ञो देवानाम्प्रियो न त्विष्टज्ञः । इति ।

अत्र 'देवानाम्प्रिय' शब्दस्य अयमाशयः प्रतीयते यद् यस्य मनुष्यस्य ज्ञानं स्वल्पं वर्तते अथवा योऽल्पश्रुतो वर्तते स 'देवानाम्प्रिय' इति व्यपदेशेन व्यपदिश्यते । उक्ते सन्दर्भे भाष्यकारस्यायं भावः प्रतिभाति यद् भवांस्त्वत्यन्तं सरलो वर्तते । भवांस्तु केवलमिदमेव विजानाति यदत्र सूत्रस्य प्राप्तिर्वर्तते । नेदं भवान् जानाति यत् प्रयोगोऽयं इष्टो न वेति । शब्दान्तरेण भवान् केवलं सूत्रपाठस्यैव परिचितोऽस्ति । तत् सूत्रेषु या इष्टयः सन्ति ता भवान् न वेद । इत्थमत्र 'देवानाम्प्रिय' इति शब्देन अल्पश्रुतस्यैव भावः प्रतीयते न तु मूर्खस्य ।

किन्तु गुप्तकालोत्तरं कैयटं यावत् 'देवानाम्प्रिय' शब्दस्यार्थः मूर्खत्वेन प्रसिद्धः संजातः । अत एवोदीरयति गिरामुदारं मधुधारां कैयटः —देव शब्दो मूर्खवाची । मूर्खस्य मूर्खा एव प्रिया भवन्ति इत्यादि । अर्थात् देवशब्दो मूर्खवाची वर्तते । मूर्खाणां च मूर्खा एव प्रिया भवन्ति । इममेवार्थं पाणिनिव्याकरणस्यान्ये टीकाकाराः स्वस्वग्रन्थेषु स्पष्टतरं कृतवन्तः।[७] तेषामयं भावो यद् यो जनो यज्ञे देवनिमित्तं पशुमालभते स 'देवानाम्प्रियः' अर्थात् मूर्खो भवति । यतः ब्रह्मज्ञानी विद्वांस्त्वेतेषां यागाद्यनुष्ठानानामतिक्रान्तत्वात् पशुबलिं न ददाति । अतः नासौ मूर्खो भवति । परिणामतः नाऽसौ 'देवानाम्प्रियः' शब्देनाभिधीयते । एतत् प्रतीयते यद् एतेषु टीकाकारेषु पौराणिककालस्य पर्याप्तः प्रभावः समवर्तत । अत एवैते खलु 'देवानाम्प्रिय' शब्दस्य वस्तुभूतमर्थमनभिधाय तस्य रूढमर्थमेव संकेतयन्ति । किन्तु नैतत् सुष्ठु । अनुमीयते यद् 'देवानाम्प्रिय' शब्दस्य मूलार्थस्तु अल्पश्रुतः एवासीत् । किन्तु पौराणिक-कालेऽस्य सम्बन्धः पशुबलिं कुर्वद्भिः सहापि समजनि ।

---

७. विषयेऽस्मिन् विशेषाध्ययनाय प्रौढमनोरमायास्तत्त्वबोधिन्याश्च सम्बद्धं स्थलमवलोकनीयम् ।

अतिक्रान्ते काले कर्मकाण्डिनो ब्राह्मणा: पशुबलिं कुर्वद्भि: सहेमं शब्दं मूर्खार्थाभिधायकमपि अकुर्वन् । यत ब्राह्मणवर्गे तु पशुबलिरूपदक्षिणयैव य: कोपि जन: 'देवानाम्प्रियो' भवितुं शक्नोति स्म[८]। बौद्धधर्मे तु अहिंसयैव य: कोऽपि 'देवानाम्प्रियो' भवितुं शक्नोति । अतो महतीयं सम्भावना यत् ब्राह्मणधर्मस्यानया संकीर्णतयैव अशोक उक्तं विशेषणमात्मने प्रायुक्षत् ।

अस्तु अत्रास्माकीनोऽयं भावो यत् प्राचीनसंस्कृतव्याकरणा 'देवानाम्प्रिय' शब्दस्य व्याख्यायां तन्मूले अन्तर्हितमुक्तं वैमनस्य - पूर्णं कारणमप्रकटय्य व्याख्यान्तरेण मूर्खमर्थं प्रदर्शितवन्त: । किन्तु नैतत् समीचीनं प्रतिभाति । प्रसङ्गेस्मिन्नधो निर्दिष्टा अनेके एतादृशा अन्येपि शब्दा: सन्ति येषामर्थ-परिवर्तनस्य मूले विभिन्नजातिधर्मसंस्कृतीनां विरोध: अन्तर्हितो वर्तते । तद् यथा—लुञ्चन=लुच्चा, बुद्ध=बुद्धू । प्रियदर्शनी, यथाजात, तथागत इत्यादि । उक्ता: सर्वेऽपि शब्दा: एकस्मिन् सम्प्रदाये मूलत: प्रशंसापरका सन्तोऽपि विरोधिभि: कुत्सितेष्वर्थेषु प्रयुक्ता: ।

परन्त्वस्माकं मूल: प्रश्नस्त्वत्रायं वर्तते यद् भट्टोजिदीक्षितेनोक्तवार्तिके 'मूर्ख' शब्दस्य सन्निवेश: न कर्त्तव्य: आसीत् । एतेन वार्तिकपाठस्याक्षुण्णता पवित्रता वा न संभवति । अतश्चाप्ययं प्रक्षेपश्चिन्तनीय: यद् य: प्रक्षेप: प्रक्षेपकरणे कुशलेन काशिकाकारेणापि वार्तिके न कृत: । सोऽसौ कथं भट्टोजिदीक्षितेन कृत: प्रशस्य: स्यात् ।

अस्मिन्नेव प्रसङ्गेऽहमेकमन्यदधोनिर्दिष्टं वार्तिकं प्रस्तौमि—

पुंसानुज: जनुषान्ध: विकृताक्ष: इति च । इति ।

---

८. तुलनीयम्, यजुर्वेदे २६. २—"प्रियो देवानां दक्षिणायै दातु:" इति मन्त्रेऽस्मिन् मन्त्रद्रष्टा ऋषिर्दक्षिणाप्रदानेनात्मानं देवानां प्रियं भवितुं घोषयति । दक्षिणायामस्यां पशुबलिसम्बन्धस्तात्कालिकैर्ब्राह्मणै: संस्थापित: सम्भाव्यते । यद्यप्यत्रेदमपि ध्यातव्यं यदुक्तमन्त्रे 'देवानाम्प्रिय' शब्द: समस्तो नास्ति । अतोऽसौ नास्य सूत्रस्य विषय: तथाप्युक्तपशुबलिरूप-दक्षिणा-प्रदानेन याऽत्रेयं कामना—प्रियोऽहं देवानां स्यामिति तत्सम्बन्धेन मन्त्रोऽयमुद्धृत: ।

वार्तिकमिदं ओजः सहोम्भस्तमसस्तृतीया[९] इति सूत्रोपरि पठितम्। अस्यायमर्थो यद् उक्तेषु त्रिषु प्रयोगेषु तृतीया-समासे सत्यपि तृतीया-विभक्तेरलुग् भवतीतिवक्तव्यम्। अत्रेदं विवेक्तव्यं यत् प्रथमोपात्ते पुन्सानुजः जनुषान्धः इतीमे उदाहरणे तु साधुनी वर्तेते अर्थात् अत्र तु तृतीयाया अलुक् स्पष्टमकष्टं दृग्गोचरी भवति। किन्तु 'विकृताक्षः' इत्येतद् उदाहरणं नोपपन्नं भवति। यतो 'विकृताक्षः' इत्यत्र यदि तृतीया समासः स्वीक्रियेत, यथा भाष्यवार्तिककाराभ्यां स्वीकृतः एव, तर्हि 'विकृत' शब्दस्य तृतीयाविभक्तिरेक-वचने 'विकृतेन' इति रूपं भवति। तेन अलुक् समासे सति 'विकृतेनाक्षः' इति प्रयोगः साधुत्वमर्हति। अतोऽत्रेदं प्रतिभाति यत् प्रारम्भे वार्तिकमिदं केवलं पुन्सानुजः जनुषान्धः इति च इत्येतावद् एव आसीत्। अतिक्रान्ते काले भाष्यवार्तिकपाठस्य संकलनं कुर्वत। लेखकेन प्रमादवशात् 'विकृताक्षः' इत्यपपाठोऽपि प्रक्षिप्तः। अत्र हेतुरयं संभवति यत् कस्मिंश्चित् प्राचीने कोषे 'जनुषान्ध' शब्द व्याख्यावसरे 'विकृताक्षः' इति शब्दस्तत् पर्यायवाचि-त्वेनावश्यं प्रयुक्त आसीत्। भाष्यवार्तिकपाठस्य संकलनसमये लेखकप्रमादात् 'जनुषान्धेन सहैव तत् पर्यायवाची 'विकृताक्षोऽपि' सहैव समाविष्टो यः खलु न बुद्धिपथमृच्छति। 'विकृताक्ष' शब्दास्यास्य नात्र कापि प्रासङ्गिकता व्याकरणसम्मतता वा चकास्ति। उद्द्योतकारेण नागेशेनाप्येवंविधः संकेतः प्रादायि—

जनुषान्धो विकृताक्ष इति क्वाचित्कप्रयोगस्य वार्तिके उपादानम्।[१०] इति।

यद्यप्येते टीकाकाराः "परे तु" इत्यादि कथनैर् भाष्यकारं प्रति श्रद्धाबुद्धिं प्रकटयन्त उक्तं विकृतं पाठमपि सङ्गतं साधयन्तः कथयन्ति यत् 'विकृताक्षः' इति प्रयोगोऽपि साधुर्भवितुमर्हति। यतो 'वि' पूर्वात् 'कृ' धातोः भावे 'क्विप्' प्रत्यये तुगागमे च सति 'विकृत्' इति हलन्ते—शब्दः सम्पद्यते। तस्य तृतीया विभक्त्येकवचने 'विकृता' इति निर्देशः सम्भवितुमर्हति। तदा तृतीयाया अलुकि सति 'विकृता+अक्ष=विकृताक्षः' इति प्रयोगः शक्यो भवितुम्। अर्थोऽप्यस्याभीष्ट एव सेत्स्यति विकारयुक्तं अक्षियस्येति[११]।

---

९. पा० ६. ३. ३.

१०. महाभाष्यप्रदीपोद्योते, सू० ६. ३. ३.

११. महाभाष्यप्रदीपोद्योते, सू० ६. ३. ३—"परे तु विकृदिति भावे क्विबन्तं तेन तृतीयान्तेन विकारयुक्तमक्षि यस्येत्यर्थे समास इत्याहुः"।

सन्दर्भेऽस्मिन् 'क्विप्' प्रत्ययस्य भावे उपलब्धानि निम्नानि निदर्शनान्यपि निदर्शनीयानि—"व्यवहारविदे"[12], "अर्थकृते" इत्यादि ।

अस्तु, अयं तु टीकाकाराणां भाष्यकारं प्रति भक्ति-अतिशय एव समुल्लसति ये खलु प्रातिस्विकदृष्ट्या येन केन प्रकारेण भाष्यवार्तिकपाठस्य सङ्गतिं संपादयन्ति, तथापि लेखकस्य तु इयमेव धारणा बलवती विद्यते यत् विकृताक्ष' शब्दो 'जनुषान्धशब्दस्य' व्याख्यारूपेण प्रयुक्तत्वात् तस्यात्र पाठः अपपाठः एव स्वीकरणीय इति । संभवतोऽत एव भट्टोजिदीक्षितेनापि वार्तिकेऽस्मिन् विकृताक्षशब्दोऽत्याजि ।।



१२. काव्यप्रकाशे प्रथमोल्लासे, कारिका सं० २.

# निर्विकल्पकविचारे शाब्दिकानामाशयः

श्रीमती ललिता चक्रवर्ती
संस्कृत-विभागः, विश्वभारती-विश्वविद्यालयः,
शान्ति-निकेतनम्, पिन - ७३१ २३५

वैयाकरणाः शाब्दिका इति कथ्यन्ते। शब्दश्च ब्रह्मरूपेण तैः वर्णितः। वैयाकरणैश्च शब्दातिरिक्तं प्रत्यक्षमनुमानञ्चेति स्वीकृतमिति स्पष्टमेव भर्तृहरिणाऽपीदं स्वीकृतं वाक्यपदीये। मीमांसकाः न्यायवैशेषिकाश्च प्रत्यक्षमिति प्रमाणं, निर्विकल्पकसविकल्पकभेदाभ्यां द्विधा विभजयन्ते, किन्तु मीमांसा-न्याय-वैशेषिकसम्मतं यद् निर्विकल्पकज्ञानं तद् शाब्दिकैः नाङ्गीक्रियते। अस्मिन् लेखे अहं, वैयाकरणानां निर्विकल्पकखण्डनविषये कानिचित् मतानि आलोचयामीति।

निर्विकल्पकञ्च प्रकारताशून्यं ज्ञानमिति[1]। विकल्पो हि प्रकारता। विषयेन सह चक्षुरिन्द्रियसन्निकर्षानन्तरं वस्तु-स्वरूपमात्रावगाहि यत् ज्ञानं तत् निर्विकल्पकम्। विकल्पश्च भेदको धर्मः जात्यादिः। निर्गतो विकल्पो यस्मात् तत् निर्विकल्पकमिति। इदं च ज्ञानमशाब्दमव्यपदेश्यं वेति दर्शनान्तरे स्वीकृतम्।[2] तत्र व्यपदेश्यं च विशेषणविशिष्ट-विशेष्यमिति। यत्र विशेषण-विशिष्ट-विशेष्यविषयकं किन्तु वस्तुस्वरूपमात्रावगाहि ज्ञानं तत् निर्विकल्पकम्।

अत्र शाब्दिकानां युक्तिः—शब्दासंसृष्टार्थज्ञानस्यासम्भवात् ज्ञानमात्रं सविकल्पकमिति[3]। यावदर्थं वै नामधेयशब्दाः, अर्थसंप्रत्ययाच्च व्यवहार इति

---

१. निष्प्रकारकं ज्ञानं निर्विकल्पकम्; तर्कसंग्रहः, सं० सत्कारिशर्मा, वाराणसी, १९६९, पृ० ४२-४३.

२. ... ... तत्राविकल्पिकायाः पदमव्यपदेश्यमिति ... ... ... न्यायवार्तिक तात्पर्य टीका, राजेश्वर शास्त्री, वाराणसी, १९२५, पृ० १२५.

३. द्रष्टव्यम्—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥

वाक्यपदीये कारिका नं० १२३ (ब्रह्मकाण्डम्)। वाराणसी, १९६१। पृ० १३१.

वैयाकरणानामभिमतम् । अत अशाब्दत्वात् अव्यपदेश्यत्वाच्च, संज्ञावाचक-नाम्ना वा निर्विकल्पकस्य प्रकाशत्वासंभवात् तस्यास्तित्वमप्रामाणिकमिति ।

अस्माकं भावप्रकाशोपायभूता भाषा शब्दसंश्रिता । शब्दोच्चारणेनैव भावविनिमयवशान् मनुष्या ऐक्यसूत्राबद्धाः भवन्ति । अस्य ऐक्यसूत्रस्य शक्तिरेव शब्दव्यापारः । किं बहुना, शब्दं विना कोऽपि किमपि कस्मिंश्चिदपि व्यवहारे प्रवर्तितुं न शक्नोतीति सर्वो व्यवहारः शब्दमूल एवेति । तत्र पूर्वजन्ममार्जितः शब्दविषयकः संस्कारः वर्तमानवत् भविष्यज्जन्मनि विद्यते । यदवलम्ब्य अव्युत्पन्नो बालकः, जातमात्रशिशुरपि अभीष्टसिद्धौ समर्थो भवति । उक्तञ्चात्र आचार्यभर्तृहरिणा—

इति कर्त्तव्यता लोके सर्वा शब्दव्यपाश्रया ।
यां पूर्वाहितसंस्कारो बालोऽपि प्रतिपद्यते ॥ (का० ६-१२१) इति ।

इदं विश्वभुवनं छन्दोभ्य एव व्यवर्तत इति वैदिकानामाशयः । अत्र आचार्यभर्तृहरिः—

शब्दस्य परिणामोऽयमित्यम्नायविदो विदुः ।
छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्त्तत[४] ॥ (का० १२०) इति ।

शब्द एव जगतः समस्तानां प्रक्रियाणां कारणीभूतः । विश्वस्याभि-प्रायप्रकाशनव्यापारः शब्दाश्रितः, यदन्तरेण विश्वस्य स्थितिः निरर्थकवत् प्रतिपद्यते । यथा—

वागेवार्थं पश्यति वाग् ब्रवीति वागेवार्थं निहितं सन्तनोति ।
वाच्येव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुङ्क्ते ॥
(ऋग्वेदः, १. १६४. ३९) इति ।

---

४. यद्यपि उपादान-समसत्ताककार्यापत्तिः परिणामः । यथा दुग्धस्य दधिभवनम् उभयोरपि व्यावहारिकसत्त्वात्, उपादान - विषमसत्ता-ककार्यापत्तिविवर्तः । यथा शुक्तिके रजतभवनम् । शुक्तिकाया व्यावहारिकसत्त्वाद्रजतस्य च प्रातिभासिकसत्त्वात् । तथापि "शब्दस्य परिणामोऽयम्" इति उपक्रम्य—"विश्वं व्यवर्त्तत" इति उपसंहारात् ज्ञायते—पूर्ववर्तिकाले परिणामविवर्तयोः पर्यायत्वमासीदिति ।

जागरणकाले सुषुप्तेः पूर्वदशायाञ्च यद् ज्ञानं जायते तद् शब्दभावनां विना नैव उत्पद्यते । ज्ञानस्य स्वरूपमेव वाग्रूपमात्रम् । अचेतनावस्थायामपि वस्तुनिचयेन सह इन्द्रियाणां सम्पर्कभावदशायामपि यद् ज्ञानं जायते तदेव सूक्ष्मवाग्धर्ममनुसरतीति वैयाकरणाः ।[५]

तत्र अन्तर्निहितभावधारयाः परिचायकाः विद्या-शिल्प-कलादयः वागात्मकबुद्धौ निबद्धा निर्मितवस्तूनां प्रयोज्य-प्रयोजकानामुपदेशसमीहादयः वाग्रूपतानुसारेण प्रकल्प्यन्ते[६] ।

शाब्दिकमतानुसारेण चैतन्यवत्—जीवस्य शब्दानुगमशून्यम् न किमपि ज्ञानं संभवति । तेजः-पुञ्जेन यथा जागतिकवस्तुनिचयाः प्रकाशन्ते—तथैव तत्तदर्थस्य वाचकः तत्तद् शब्देनैव वस्तूनां विशदावभासः संभवति । तदुक्तं दण्डिना—

इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारान्न दीप्यते[७] ।।
(श्लोक नं० ४) इति ।

आलोकवत् शब्दः स्व - स्व - निर्दिष्टार्थ - प्रतिपादनसामर्थ्यवशात् जागतिकानां वस्तूनां ज्ञानमुत्पादयति ।

---

५. द्रष्टव्यम्—
वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ।।

वाक्यपदीये कारिका नं०—१२४ (ब्रह्मकाण्डम्) ; वाराणसी, १६६१, पृ० १३४.

६. द्रष्टव्यम्
सा सर्वविद्याशिल्पानां कलानां चोपबन्धनी ।
तद्वशादभिनिष्पन्नं सर्वं वस्तु विभज्यते ।।
तदेव ; का० नं० १२५ ; पृ० १३५.

७. काव्यादर्शः ; श्लोक ४ ; सं०—रंगाचार्यः, मद्रास, १६१० पृ० ४.

शास्त्रसमुदायाः शब्दमयाः; तेषां पाठेन च गुरुशिष्यपरम्परायां ज्ञानप्रवाहो निरन्तरं प्रवहति। शास्त्रेषु वर्णितानां जीवस्य-कल्याणनिर्देशकानां विधिवाक्यानामनुसारेण कर्मानुष्ठानादिद्वारा कल्याणमयं वाक्यमनुसृत्य वा जीवा इहलौकिकं तथा पारलौकिकं निखिलमभ्युदयं लभन्ते।[८]

अतः शब्दासंश्रितनिर्विकल्पकज्ञानेन वास्तवजगति व्यवहारासंभवात्, पारलौकिकजगति उपयोगिताया भावाच्च तस्य अस्तित्वस्वीकारमनर्थक-मिति दिक्।



---

८. द्रष्टव्यम्—

इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा।
वाचामेव प्रसादेन लोकयात्रा प्रवर्तते॥ इति।

(तदेव; श्लोक नं० ३, पृ० ३)

# संस्कृत - व्याकरणे पद - विभागः

श्री वीरेन्द्रकुमारः विद्यालङ्कारः
संस्कृत-विभागः, कुरुक्षेत्र विश्वविद्यालयः, कुरुक्षेत्रम्

संस्कृत-व्याकरणशास्त्रे वाक्यस्यैव पारमार्थिकी सत्ता तथापि व्यावहारिक - दृष्ट्या पदानां सत्ताऽपि स्वीकार्यैव । यद्यपि पदविभागः काल्पनिकस्तथापि तेन काल्पनिकविभागेन तथ्यं ज्ञायते ।[1] अतः प्रकृति-प्रत्यय-विभागकल्पनाऽपि समीचीनेति वैयाकरणाः ।

सार्थकपदानां (शब्दानां) समूहः वाक्यम् ।[2] सार्थकध्वनिश्च शब्द उच्यते पतञ्जलिना ।[3]

मीमांसकमते च वर्णसंघात एव पदम् ।[4] भगवानुपवर्षः[5] संग्रहकार[6]-श्चास्यैव मतस्य समर्थकौ । आचार्य विश्वनाथमते[7] अनन्विता एकार्थबोधकाः प्रयोगार्हा वर्णा एव पदम् । इत्थमनेकप्रकारैः पदं विवेचितम् ।

---

१. द्र० उपाया: शिक्षामाणानां बालानामपलापनाः ।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ।।
(वाक्यपदीय २. २. ३८)

२. द्र० पदसमूहो व वाक्यमर्थसमाप्तौ ।
(न्याय सूत्र, वात्स्यायन भाष्य ११५) परमलघुमञ्जूषा पृ० ५.

३. द्र० प्रतीतपदार्थको लोके ध्वनिः शब्दः इत्युच्यते ।
(महाभाष्ये प्रथमाह्निकम्)

४. द्र० (क) अतो न तेभ्यो व्यतिरिक्तमन्यत् पदं नामेति ।
(मीमांसाशास्त्रम्, १. १. ५)
(ख) तस्मादक्षराण्येव पदम् । (मीमांसा १. १. ५)

५. द्र० वर्णा एव तु शब्द इति भगवानुपवर्षः ।
(ब्रह्मसूत्रशाङ्करभाष्यम्, १. ३. २८)

६. द्र० वर्णसंघातजं पदम् (संग्रहकारः)—संस्कृत-व्याकरण दर्शन,
(रामसुरेश त्रिपाठी) पृ० ३३८)

७. द्र० वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः ।
(साहित्यदर्पणम् २. २)

संस्कृतभाषायां पदमेव प्रयोगार्हम्, नैव प्रातिपादिकम्[८]। पदविभागस्य विविधता मनीषिभिर्दीर्घकालादेव व्यचारि। पदविभागस्य प्रमुखा आधारा व्यवस्थिततरूपेणैवं प्रस्तोतुं शक्यते[९]—

(क) अर्थबोधकतामधिकृत्य (ख) व्युत्पत्तिमधिकृत्य
(ग) प्रवृत्तिनिमित्ततामधिकृत्य (घ) व्याकरणमधिकृत्य
(ङ) रूपरचनामधिकृत्य (च) आधुनिकं वर्गीकरणञ्चाधिकृत्य।

व्याकरणमधिकृत्य पदविभागस्य विविधा: पक्षा: विवेचिता: इति भर्तृहरिकारिका समर्थयति—

द्विधा कैश्चित्पदं भिन्नं चतुर्धा पञ्चधाऽपि वा।
अपोद्धृत्यैव वाक्येभ्य: प्रकृतिप्रत्ययादिवत्॥
(वा० प० ३. १. १)

**एकधा पक्ष:—**

इन्द्रादय: प्राचीना वैयाकरणा: शब्दस्यैकविधत्वमङ्गीकुर्वन्ति। शब्दानामेकरूपताऽर्थकत्वात्, न तत्र भेद:। अर्थप्रतिपादकशब्दानामेकैव जाति:। अर्थस्यवाचकं पदमित्यभिधीयते। पदस्य लक्षणञ्च—अर्थ: पदमिति[१०]।

**द्विधा पक्ष:—**

अत्र पक्षत्रयम्। प्रथमपक्षस्तु—नामाऽऽख्यातमेव पदम्। उपसर्गाणामन्तर्भावोऽत्रैव[११]। निपाता अपि नैव पृथक्त्वेन सन्तिष्ठन्ते[१२]। एवमेव कर्मप्रवचनीया ज्ञेया:।[१३]

---

८. द्र० नापदं प्रयुञ्जीत इति प्रसिद्धि:।

९. पदपदार्थसमीक्षा (डॉ० बलदेवसिंह:) पृ० १५-१६.

१०. अर्थ: पदमैन्द्राणाम् (निरुक्तदुर्गवृत्ति १. १)।

११. अत एवोपसर्गकर्मप्रवचनीय-पदान्यपि आख्यातपदमेव, साध्यार्थगतविशेषद्योतनात्। —वा०प० (हेलाराज टीका, ३.१.१)

१२. तथाहि सिद्धार्थाभिधायि नामपदमिति तदर्थगतं विशेषं द्योतयन् निपात: तत्रैवान्तर्भवति। ··· ··· ··· ये तु हिरुगादय: क्रियाप्रधानास्तेषामाख्यातेऽन्तर्भाव:। —वा०प० (हेलाराज टीका ३.१.१)

१३. कर्मप्रवचनीयास्तु क्रियाविशेषोपजनितसम्बन्धावच्छेदहेतव इति। सम्बन्ध: विशेषद्योतनद्वारेण क्रियाविशेष-प्रकाशनादुपसर्गेष्वन्तर्भवन्ति। —वा०प० (हेलाराज टीका) ३.१.१.

द्वितीयः पक्षस्तु स्वामिदयानन्दस्य । नित्याऽनित्यभेदेन शब्दस्य द्विविधत्वम्[१४] ।

तृतीयः पक्षस्तु भगवतः पाणिनेः—सुबन्तं तिङन्तं च पदम् ।[१५] सम्भवतोऽत्रैवोपसर्गनिपातादीनामन्तर्भावः आचार्येण मतः ।

## त्रिधा विभागः—

नाम, आख्यातम्, अव्ययञ्चेति त्रिधाविभागः—एवाऽऽचार्यपाणिनेरीप्सित इति पण्डितयुधिष्ठिरमीमांसको मनुते । उपसर्ग-कर्मप्रवचनीयानामन्तर्भावो निपातेषु, निपातानाञ्चाव्ययेषु इति पुष्टिः 'प्राग्रीश्वरान्निपाताः' (पा० १. ४. ५६), 'स्वरादिनिपातमव्ययम्' (पा० १. १. ३७) इति सूत्राभ्यां जायते । अतः त्रिधा-विभाग एव सम्मान्यः ।[१६]

अभिनवभरतश्च नाम-आख्यात-स्वयंस्फुट-रूपाणि त्रीणि पदान्यङ्गीकुरुते । अस्मिन् मते उपसर्गा नैव मन्यन्ते ।[१७]

## चतुर्धा विभागः—

वैदिकविद्वान् निरुक्तकार आचार्यो यास्को 'निरुक्तम्' इति नाम्नि नाम ग्रन्थे चत्वारि पदान्युल्लिखति—

तद्यान्येतानि चत्वारि पदजातानि, नामाख्यातोपसर्गनिपाताश्च ।[१८]

अयं चतुर्धाविभागः लौकिकवैदिकवाङ्मये सुप्रसिद्धः ।

## चतुर्धाविभागस्योपयुक्तता—

यद्यपि विदुषस्वैकमत्यं नैव, तथापि बहुमतं तु चतुर्धाविभागं प्रत्येव । भाष्यकारः पतञ्जलिरपि मतमिदमृग्वेदीयमन्त्राभ्यां महाभाष्ये[१९] स्वीचकार—

---

१४. ऋग्वेदादिभाष्यभूमिका (वेदनित्यत्वप्रकरणम्) ।

१५. सुप्तिङन्तं पदम् (पा० १. ४. १४) ।

१६. संस्कृत-व्याकरणशास्त्र का इतिहास (द्वितीय भाग)
—पं० युधिष्ठिर मीमांसक, पृ० ८, ९.

१७. वाग्विज्ञान (पं० सीताराम चतुर्वेदी) पृ० १९७.

१८. निरुक्तम्, अध्यायः १.

१९. महाभाष्यस्य प्रथमाह्निकम् ।

चत्वारिश्रृङ्गास्त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश ॥[20]

इति मन्त्रव्याख्यायामाह भगवत्पतञ्जलिः—चत्वारि श्रृङ्गाणि पदजातानि, नामाख्यातोपसर्गनिपाताश्च ।

द्वितीयश्च मन्त्रः—

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहात्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥[21]

अत्रापि भाष्यकारः—चत्वारि वाक्परिमितानि पदानिच त्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च ।

ऋक्-प्रातिशाख्य[22] - वाजसनेयिप्रातिशाख्य[23] - अथर्वप्रातिशाख्येष्वपि[24] चतुर्धापदविभागः स्व्यकारि । स्कन्दस्वामी महेश्वरश्चापि मतमिदं स्वीचक्रतुः ।

पञ्चधा विभागः—

पाणिनीय-व्याकरणे 'प्रति' - प्रभृतयोऽसत्त्ववाचकाः विशेषावस्थासु कर्मप्रवचनीयरूपेण प्रसिद्धाः । अतः पञ्चधाविभागोऽपि क्वचित् मान्यः—नाम-आख्यातोपसर्गनिपातकर्मप्रवचनीयाश्चेति । अयं कर्मप्रवचनीयो नैव क्रियायाः द्योतको न सम्बन्धस्य वाचको, न क्रियापदमपेक्षते, अपितु क्रियाजनितसम्बन्धस्यैव भेदकः ।[25]

---

२०. ऋग्वेदः (४. ४८. ३) ।

२१. ऋग्वेदः (१. १६४.४५) ।

२२. नामाख्यातम् उपसर्गो निपाताश्चत्वार्याहुः पदजातानि शाब्दाः ।
—डॉ० कपिलदेव सम्पादित निरुक्तस्य हिन्दी व्याख्या पृ० ९.

२३. तच्चतुर्धा नामाख्यातोपसर्गनिपाताः ।
(निरुक्तस्य हिन्दी व्याख्या पृ० ९)

२४. चतुर्णां पदजातानां नामाख्यातोपसर्गनिपातानाम् ।
(निरुक्तस्य हिन्दी व्याख्या, पृ० १०)

२५. क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः ।
नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः ॥
(वा० प० २. २०४)

**षोढा विभागः—**

पाणिनीय-व्याकरणे उपसर्ग-निपात-कर्मप्रवचनीया इव गतिसंज्ञका अपि शब्दाः प्रसिद्धाः। अतः पदानां षड् विधत्वमपि परिकल्प्यते। नामाख्यातोपसर्गनिपातकर्मप्रवचनीय-गति-संज्ञकाः अपि शब्दाः षड्विधत्वेन विभक्ता इति।

परन्तु चतुर्धाविभाग एव साधुर्मन्यते। सत्त्वप्रधानानि नामानीत्याह[२६] निरुक्तकारः। 'लिङ्गसंख्यान्वितं द्रव्यं सत्त्वमित्यभिधीयते'[२७] 'भावप्रधानमाख्यातम्'[२८] इत्याहुराचार्याः। यास्क उपसर्गं पृथक्त्वेन स्वीचकार— 'उच्चावचाः पदार्थाः भवन्ति गार्ग्यः।'[२९] निपाता अपि स्वातन्त्र्येण सत्तायां सन्ति, ते च विभिन्नेष्वर्थेषु निपतन्त्यतो निपाता[३०] इत्युच्यन्ते।

संक्षेपतः—

क्रियावाचकमाख्यातमुपसर्गो विशेषकृत्।
सत्त्वाभिधायकं नाम निपातः पादपूरणः॥

इत्थं चतुर्धा विभाग एव मान्यः वैयाकरणैः प्राधान्येनेति।



---

२६. निरुक्तम्, प्रथमाध्यायः प्रथमः पादः।

२७. तुल०—(क) सत्त्वं द्रव्यं लिङ्गसंख्यायुक्तं वस्तु,
तद्वचना शब्दाः सत्त्वनामानि।
(निरुक्तभाष्य टीका, पृ० ११)

(ख) क्रियानिवृत्तिवशोपजातः कृदन्तशब्दाभिहितो यदा स्यात्।
संख्याविभक्तिव्यय लिङ्गयुक्तो, भावस्तदा द्रव्यमिवोपलक्ष्यः॥
(बृहद्देवता, १. ४५)

२८. (क) निरुक्तम्, प्रथमाध्यायः प्रथमः पादः।
(ख) बृहद्देवता, २. १२१.

२९. निरुक्तम्, प्रथमाध्यायः, प्रथमः पादः।

३०. उच्चावचेष्वर्थेषु निपतन्ति।
—निरुक्तम् (प्रथमाध्यायः प्रथमः पादः)

# श्रीचारुदेवो महान् चारुः

डॉ० इन्द्रमोहन सिंहः
संस्कृतविभागः, पञ्जाबीविश्वविद्यालयः, पटियाला

चन्द्रिकाया विलासेन
न हि चारुर्विधुस्तथा ।
चारुदेवो यथा चारुर्
व्याकरणविधूदयात् ॥

दिवाकरविभा लोके
प्राणशक्तिप्रदा यथा ।
संस्कृतज्ञानलाभाय
स शास्त्री सम्मतस्तथा ॥

सुरूपं नितरां रम्यं
तन्न परं स्थिरं सदा ।
शास्त्रिणा विहितं कर्म
रम्यं चिरं स्थिरं सदा ॥

पूर्णतायै समुद्रं ता
गच्छन्ति सरितो यथा ।
छात्रा शब्दसुज्ञानाय
शास्त्रिविवेचनं प्रति ॥

विफलं जीवनं तस्य
संस्कृतज्ञेन संस्कृतम् ।
चारुदेवाभिधं पुष्पं
येनाघ्रातं यदीह न ॥



# स्वर्गीय - श्रीचारुदेवशास्त्रिणः

श्री दुर्गादत्त शास्त्री विद्यालङ्कारः
( राष्ट्रीय पुरस्कार प्राप्त )
गांव व डाकघर नलेटी, त० देहरा गोपीपुर (कांगड़ा), हि०प्र०

भारतभूललामभूताया दिल्ली - नगर्याः पश्चिमोत्तमे शक्तिनगरोपान्ते अस्ति पण्डितमण्डलमण्डितं रूपवद्रूपनगरम्। तस्य तृतीयवीथ्यां भाग्यवर्ती चतुःपंचाशत् संख्यामलङ्कुर्वत्, प्रांगणपुष्पसुभूषितं, विशुद्धसुरम्येष्टिकाविरचितं, धूम्रपानमद्यमासांद्यमेध्यद्रव्यविवर्जितं वर्तते एकं सरलभवनम्। तस्य भित्तयोऽपि मूकभाषायां देवगिरमुच्चरन्ति। संस्कृत-सरणि-समलङ्कृतं तत्सदनं प्रविश्याऽऽगन्तुका अनिर्वचनीय-शममाप्नुवन्त अनायासमेवामन्दानन्दकल्लोल-स्नाताः संजायन्ते। तस्मिन्नेव पुण्यभाजि निकेतने निखिलसंस्कृत वाङ्मयं करतले धारयन्तो न्यवसन् श्रीचारुदेवशास्त्रिणः।

सरलताया मूर्तिः—स्व० शास्त्री सरलताया मूर्तिरिवाभवत्। शिरसि उष्णीषं, गले कञ्चुकं, कट्यां शाटिकां, स्कन्धे यज्ञोपवीतं, मस्तके दिव्योजस्वितां च धारयन्नसौ महानुभावो देवलोकात्समागतः कश्चिद्देव एवान्वभूयत।

अहंकृतिविवर्जितः— तमस्तपनमिव, विषयेप्सा विजितेन्द्रियमिव कामो योगिनमिवाऽहंकारस्तं स्प्रष्टुं नापारयत्। पुरोभागिता तस्माद् व्याघ्राज्जंबुको यथा दूरादबिभेत् असौ सर्वथा परगुणानवालोकत नावगुणान्। परदोषानुसन्धानं नासीत्तस्य प्रकृतिः।

विग्रहवान् धर्मः— शास्त्रिमहाभागस्येश्वरे दृढा निष्ठाऽऽसीत्। प्रातः-सायं विस्मृतान्यव्यापारो रहसि संध्योपासनासीनो ध्यानपरायणो योगी-वालक्ष्यतसौ।

अश्रान्तसाधकः— स्वर्गीयशास्त्रिमहाभागाचरितपरिश्रमस्य नानुमीयते कश्चि-त्पारावारः। असौ महानुभावो बृहल्लघ्वाकाराणि शतं पुस्तकानि व्यरचयत्। यथा सरस्वत्याऽसौ पण्डितः संस्कृतग्रन्थागारं सुकृतिभिः पूरयितुमेव नियोजित आसीत्। नवतिवर्षावस्थायामपि तस्य लेखनी पिपासितैवातिष्ठत्।

१९७५ वत्सरे अहं मधुवर्षणकाव्यस्य पाण्डुलिपिमादाय स्वर्गीय-श्री-गुरुचरणानां दर्शनानि कर्तुमगच्छम् । रूपनगरे शास्त्रिमहाभागानां निलयं प्रविश्य पंचदशसोपानान्यारुह्योपरिकक्षे आसन्दिकोपविष्टान् पुरस्तात्काष्ठमञ्चके धृतपादान् कर्गलेऽक्षरमिषेण मौक्तिकमालां विरचयतः शास्त्रिमहाभागानपश्यम् । तद्दिनेषु ते वाग्व्यवहारादर्शलेखनपरायणा आसन् । अहमभिवाद्य लक्षद्वयं पुरस्तात् स्थितः ।

शास्त्रिणः—(मामवलोक्यापरासन्दिकामुद्दिश्य) आस्तां भवान् ? (अहं तत्समक्षं वेत्रासनग्रहणमनधिकारचेष्टां मन्यमानस्तत्पादाधिष्ठितमञ्चके एवोपाविशम् ।) कुतः समायातो भवान् ?

अहम्—हिमाचलप्रदेशात् ।

शास्त्रिणः—(मम कक्षधृतसञ्चिकामुद्दिश्य) एतत् किं वर्तते ?

अहम्—काव्यस्य हस्तलेखः ।

शास्त्रिणः—किं नाम भवतः काव्यस्य ?

अहम्—मधुवर्षणाम् ।

शास्त्रिणः—कोऽस्य विषयः ?

अहम्—चीनाक्रमणकाले एका नारी स्ववक्षोरुधिरेण, संगरे शत्रुभिर् युध्यमानाय भर्त्रे पत्रं लिखति ।

( ततोऽहं तत्करकमलयोर् हस्तलेखमधारयम् )

शास्त्रिणः—(अर्धहोरायां सप्तसर्गान् विहंगमदृष्टयाऽवलोक्य मन्दस्मितालङ्कृताननाः) इतः पूर्वमपि किञ्चिल्लिखितम् ?

अहम्—काव्यद्वयम् । राष्ट्रपथप्रदर्शनं तर्जनी च ।

शास्त्रिणः—सुदूरग्रामे निवसन् भवानेवं सरस्वत्याराधनापरः । धन्योऽसि ।

अहम्—एषा गुरुचरणानां कृपा ।

शास्त्रिणः—अहमामूलचूलं काव्यमिदं पिपठिषामि । भवान् श्व आयातु ।

( ततः पौत्रं शरच्चन्द्रमाहूय तन्मुखात्कतिचित् संस्कृतश्लोकान् श्रावयित्वा मां जलपानेन सत्कृत्य गन्तुमादिशन् । अहं विपुलप्रसादपूरितमानसोऽधोऽवातरम् । )

(अपरेद्युरहं यदा गुरुचरणेषूपस्थितस्तदा ते प्रशंसात्मकपत्रयुतं हस्तलेखं मां प्रत्यर्पयन्) ।

शास्त्रिण:—एतादृशसरलभाषायां भवान् काव्यरचनां कथं करोति ?

अहम्—गुरुवर्या: ! मम मते संस्कृतप्रचारप्रसाराभ्यां सरलभाषाप्रयोग: परमावश्यक: ।

शास्त्रिण:—(समन्दस्मितम्) वयं तु प्रयतमाना अपि नैवंविधसरलभाषामाश्रयितुं पारयाम: । शोभनं भवतो मतम् ।

१९७८ वर्षे अहं वत्सलानाटकमादाय गुरुचरणानां दर्शनार्थं पुनरुपस्थित: । तेषां प्रमोदस्य नासीत्कश्चित्पारावार: । ते मां वक्षसाऽऽलिङ्गन् । नाटकं दिवसद्वयेनाधीत्य तत्प्रशस्तिपत्रे ते एवमवदन्—

नूत्नभावभृतं नाट्यं नूतनं रसयिष्यति ।
इदं ससम्भ्रमं लोक: कविं धन्यं च वक्ष्यति ।।

१९८३ वर्षे तृणजातकं नामैकाङ्किनाटकेन सह गुरुपादानवलोकितुं पुनरपि दिल्लीं प्रयातोऽहम् । तद्दिनेषु विद्वद्धुरीण: पण्डितशिरोमणि: श्री सत्यव्रत: शास्त्री थाईलैण्डं प्रति गतोऽभवत् । शास्त्रिणां शरीरं क्षीणमेवालक्ष्यत । पादयो: शोथ: समदृश्यत । परं भालतेजसि नासीत्किञ्चिदन्तरम् । तानेवं वार्द्धक्यग्रस्तानवलोक्य मे मानसं कामप्यवर्णनीयव्यथामन्वभवत् । नाटकमधीत्य ते प्रशस्तिपत्रे एवमलिखन् :—

"अयि स्नेहभाज: शास्त्रिण:,

'तृणजातकं' इति नाम्नी नूत्ना भवतां कृतिरामूलचूलमालोचि । अद्यापि सुकृतिनो भवादृशा: कृतिनो नवनवं हृद्यमनवद्यं वस्तु प्रकल्प्य नाटकानि भव्यानि विरचयन्तीति जयतितमां सुरभारती । सर्वत्र सरला सरणि: समाश्रिता, औचिती समादृता, गद्यपद्ययो: सम: प्रकर्षश्च समासादित इति नन्दति नश्चेत: । कामो मे भवन्त एवं लोकसंग्रहपरा निरन्तरं नूत्नकृतिनिर्मितिपरा: संस्कृतवाङ्मयाभिवृद्धये कल्पेरन्निति ।

विदां विधेय:

चारुदेव: शास्त्री

२५-५-८३

३/५४ रूपनगर, दिल्ली ।"

एवंविधाः सरस्वतीसमर्पितसर्वस्वाः, सहस्रं शिष्यान् संस्कृतोवात्तसर्गाण प्रदर्शयन्तः, पणिनिमुनेरभावं प्रपूरयन्तः, विविधग्रन्थैर्देववाग्भाण्डारं प्रवर्धयन्तः, अनुपमपाण्डित्यालङ्कृताः, कोविदमानमण्डिताः, गुणग्राहिणः, षड्वर्गगन्धविवर्जिताः, भारतभुवि लब्धसम्मानाः, करतलावलोकितसंस्कृतवाङ्मयाः, परगुणैर्मोदमानाः, ईर्ष्यावाताऽलिप्ताः, कपटकूटाऽपरिचिताः, सरलहृदयाः, संस्कृतविश्वविहितविविधोपकाराः, विद्वन्मानसहंसाः, समीक्षादिव्यदृष्टयः, क्षीरनीरविवेकिनः, सत्यव्रतिनः, सुचरितशिक्षया सुसंस्कृतजनमानसाः, विबुधवागभिवृद्धये लब्धजन्मानः, समासन् मे प्रियगुरवः श्रीचारुदेवशास्त्रिणो येषां पावनस्मृतिस्तुदति चेतः क्षणं क्षणम् ।

आसीद्दिल्यामतुलमतिमान् पण्डितश्चारुदेवः
शास्त्रज्ञानं निखिलमपि यो मानसे संदधार ।
यस्य ख्यातिर्भवति विदिता मण्डले कोविदानां
कृत्वाऽनाथं जगदिदमहो नाकलोकं जगाम ॥ १ ॥

ज्ञानाम्बोधिर् जनपरिचितो बोधदाता नराणां
जिज्ञासूनामुपकृतिपरः सेवको देववाण्याः ।
लोकैर्ज्ञातो मधुरफलवान् पादपोऽसौ यथा स्यात्
कृत्वाऽनाथं जगदिदमहो स्वर्गलोकं प्रयातः ॥ २ ॥

अष्टाध्यायी करतलगता कण्ठगा वेदवाणी
षट्शास्त्राणां सकलमपि यन्मानसे सन्निविष्टम् ।
स्नेहोऽपारो निखिलविदितो यस्य सत्यव्रते स्वे
कृत्वाऽनाथं जगदिदमहो देवलोकं रुरोह ॥ ३ ॥

पादत्राणैरमलभवने नैव दृष्टः प्रवेशस्-
तस्यावासे नयनपथगा सभ्यता या मुनीनाम् ।
आसीद् धन्यो नरतनुधरो देवता चारुदेवः
कृत्वाऽनाथं जगदिदमहो देवसङ्घे विवेश ॥ ४ ॥

तस्यावासमथ मुदितमनसा ज्ञानमाप्तुं मनुष्या
आगच्छँश्च प्रतिदिनः प्राव्रजन् पूरितेप्साः ।
कूपः श्रेष्ठो जगति विदितो यात्रिणां नीरहर्ता
तृष्णर्तानां न भवति सखा संसृतौ तेन कोऽर्थः ॥ ५ ॥

पुंसां लोके त्रिनवतिसमा यापयित्वा महात्मा
बोधे दत्वा सरलमनसा देववाण्याः प्रियेभ्यः ।
चारुर्देवोविमलचरितोऽलङ्कृतश्चारुकृत्यैः
स्वर्गे लोके विबुधसदसि भ्राजते चन्द्रतुल्यः ॥ ६ ॥

आयान्त्येवं विमलमतयः कोविदा देवलोकात्
कर्तव्यं स्वं गहनमनसा पूरयित्वा प्रयान्ति ।
दृष्टान्तोऽयं भवति पुरतः शास्त्रिणोऽतुल्यकीर्तेः
शंसां तस्य ध्रुवमिह सदा कीर्तयिष्यन्ति लोकाः ॥ ७ ॥

गुणाः समस्ता निवसन्ति विज्ञे सत्यव्रते पण्डितमण्डलीड्ये ।
श्रीचारुदेवस्य पितुः सुपुत्रे तस्यैव छायाऽऽसुधरा यथोर्व्याम् ॥ ८ ॥

# वाग्योगविदो डॉ॰ चारुदेवशास्त्रिमहाभागाः

डॉ॰ कर्णसिंहः
मेरठ कालिज, मेरठ (उ॰ प्र॰)
(पत्रव्यवहारसंकेतः—'चन्द्रिका', शिवाजी मार्ग, मेरठ - २६० ००१)

ओं नमः परमात्मने ।

नमो भगवते पाणिनये ।

नमः पूर्वेभ्यः पथिकृद्भ्यः ।

नमः शिष्टेभ्यः ।

नमो डॉ॰ चारुदेवशास्त्रिणे ।

अथ वाग्योगविद्भिः श्रीचारुदेवशास्त्रिमहाभागैर्विरचितेभ्यो ग्रन्थरत्नाकरेभ्यः संस्कृतवाग्व्यवहारज्ञानशुक्तिमुक्ताफलानि कानिचिदुद्धृत्यात्र प्रस्तूयन्ते श्रद्धाञ्जलिरूपेण । तानि च यथा—

—शिष्टप्रयोगाः प्रधानमुपसर्जनं व्याकरणम् । शिष्टैः प्रयुक्तपूर्वा एव शब्दाः शास्त्रेण संस्क्रियन्तेऽनुशिष्यन्तेऽन्वाख्यायन्ते वा । ··· व्याकरणे च पदान्येव संस्क्रियन्ते न तदायत्तो वाक्यसाधुत्वप्रत्ययः । (अतः) शिष्टा एव सर्वत्र वाग्व्यवहारे प्रमाणम् ।

—यथात्र लोके समुदाचारो रक्षणीयः श्रौती स्मार्ती वा व्यवस्थितिरास्थेया तथा वाङ्मयेऽपि लोकप्रतिष्ठितः शिष्टजुष्टो व्यवहारः सततं शीलनीयः साभिनिवेशं चानुसरणीयः ।

—वाक्ये पदक्रमविषये वक्तॄणां कामचारः दृश्यते । परमिदं प्रायिकम् न वाक्ये निरवग्रहं प्रभवन्ति वक्तारो वक्तुम् । लोको हि वारयति इच्छति च क्रमं कञ्चित् । अत एवाक्रमताऽस्थानपदता संकीर्णता चेति दोषत्रितयं वाक्यगतं निर्दिशन्त्यालङ्कारिकाः ।

—वाक्य एकेन तिङन्तेन भवितव्यमिति नियम्यते । परं क्वचिदस्य परिहारो न केवलं वाक्यपुष्टये न भविष्यत्युपस्कृतये चापीति शिष्टशैलीत एव शक्यमध्यवसातुम् ।

—परिलघूनि वाक्यानि विशदार्थानि भवन्ति सुपठानि । तत्र तिङन्तपदानि वाक्यमर्मभूतानि तानि सुविचिन्त्य देयानि । ...तत्रापि सति सम्भवे सोपसर्गकाणि समादरणीयानि । सोपसर्गिका हि क्रिया रुचिरतरा भवन्ति नाम । ... ... अति हि वैचित्र्यं क्रियते धात्वर्थेषूपसर्गैः ।

—प्रायेण पृथक्पदत्वमेव बन्धस्याभिरोचनीयम् । समासवृत्तिस्त्वाश्चर्यमिवाश्रयणीया । सन्ति नामार्था ये समासैकगोचरास्ते समासेन निकाममभिधीयन्ताम् । (परम्) असन्देहमर्थाभिव्यक्तये व्यासेनार्थं ब्रूयान्न समासेन ।

—वाक्ये निपातानां यथास्थानं प्रयोगेणापि काव्यभिख्या समुल्लसति । 'जघान कंसं किल वासुदेव' इत्यत्र किल शब्देन यथा सम्पद्यते वाक्यं न तथेति श्रूयत इत्यादिना वाक्यखण्डेन । लाघवमपि निपातप्रयोगकृतं बह्वादरणीयं भवति । ... अल्पाः शब्दखण्डा अमी उच्चावचेष्वर्थेषु निपतन्तीति बहूपकुर्वन्ति सन्दर्भस्य ।

—शब्दालङ्कृतिप्रियता चोद्वेगकरी रसिकानामिति तां नाद्रियेत । अनुप्रासाद्यपहृतधियां न केवलं रसापकर्षोऽपि । बह्वी चानौचिती प्रयोगेषु । अनायासकृतो विरलोऽनुप्रासादिस्तु न वार्यते ।

—संयुक्ताक्षरबहुलं कर्कशाक्षरप्रचुरं च दुष्पठं भवति ।

—विवक्षातः कारकाणि भवन्ति । विवक्षा च लौकिकी प्रभवति न प्रायोक्त्रीति । लोकश्च शिष्टलोक एवाभिप्रेतो वाचि प्रमाणभूतः सर्वस्यावधेयवचनः । न हि प्रयोक्त्रा निरवग्रहं यथा तथा शक्यं विवक्षितुम् । नेह तस्य स्वच्छन्दः प्रवर्तते । विवक्षा हि कुलवधूरिव न लौकिकीं प्रयोगमर्यादामतिक्रामति ।



# व्याकरणोदाहरणानाम् अर्थ-प्रयोग-विमर्शः

डॉ० विजयपाल शास्त्री
श्रीदादू संस्कृत महाविद्यालय, मोती डूंगरी, जयपुर - ४

व्याकरणं नाम शब्दानामनुशासकं शास्त्रम् । इह शब्दानाम्= पदानां व्याक्रिया निर्दिश्यते प्राधान्येन । वाक्यमिहानुषङ्गभूतं तिष्ठति । अत एव "पदवाक्यप्रमाणज्ञः" "योगेन चित्तस्य पदेन वाचाम्" इत्यादिषु पदमिति व्याकरणस्य वाचकमस्ति । प्रकृतिप्रत्यय - विभागपरिकल्पनया सामान्यविशेषवता लक्षणेन च व्याकृतस्य पदस्य अर्थज्ञानं, ततश्च तस्य साधु प्रयोगइति व्याकरणस्य मुख्यं फलम् । यथोक्तं महाभाष्ये—यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले । सोऽनन्तमाप्नोति जयं परत्रा-वाग्योगविद् दुष्यति चापशब्दैः ।। एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति । अन्यत्र चाप्युच्यते—व्याकरणात् पदज्ञानं पद-ज्ञानादर्थनिर्णयो भवति । अर्थात्तत्त्वज्ञानं तत्त्वज्ञानात् परं श्रेयः ।। पाणिनीय-शिक्षायामप्ययमर्थोऽतिस्फुटतया निर्दिश्यते—तमक्षरं ब्रह्म परं पवित्रं गुहाशयं सम्यगुशन्ति विप्राः । स श्रेयसा चाभ्युदेन चैव सम्यक् प्रयुक्तः पुरुषं युनक्ति ।।

सम्प्रति वैय्याकरणासम्प्रदायः प्रायेण लक्षणैकचक्षुष्को लक्ष्यते । तेनाद्यत्वे प्रक्रियापुरस्सरं पदसिद्धिं कृत्वापि असौ उदाहृतपदानामर्थं प्रयोग-विधिञ्च विशदतया न मीमांसते । तेन उदाहृतपदानाम् अर्थज्ञानस्य प्रयोग-विधेश्च वैशद्यं न जायते ।

यद्यपि त्रिमुनिव्याकरणस्यास्य प्रणयनकाले प्रणेतॄणामाचार्याणां समक्षम् उदाहरणानामर्थः प्रयोगश्च सुस्पष्ट आसीत्, यतो हि भाषायां शब्दप्रयोगं दृष्ट्वैव तत्साधुत्वानुशासनं क्रियत इत्याचार्याणां शैली, तथापि मुनित्रयस्य कालादनन्तरं यथा यथा संस्कृत-भाषाया व्यवहारो विरलतां गतः, तथा तथा शब्दसिद्धिप्रक्रियायाम् अविच्छिन्नायां सत्यामपि बहुत्र उदाहरणानाम् अर्थः प्रयोगश्चास्पष्टतां सन्दिग्धतां वा गतः । एतेन काशिका-कौमुद्यादिग्रन्था-नामध्ययनाध्यापनप्रसङ्गे पदव्याक्रियायां कृतायामपि बहूनामुदाहरणानां सम्यगर्थज्ञानाभावात् तत्प्रयोगे चेतो मुह्यति । एवं सति व्याकरणस्याध्ययन-मध्यापनं चापूर्णमेव तिष्ठति । लक्ष्यलक्षणे व्याकरणम् इति पस्पशायाम् आचार्यकात्यायनवचनम् । लक्ष्यम्= उदाहरणम्, लक्षणम्= सूत्रम् । "लक्ष्यं लक्षणं चैतत् समुदितं व्याकरणं भवति ।" इति तत्र भगवत्पतञ्जलि-मुनिव्याकरण-ज्ञानस्य कात्स्र्न्यमापादयितुं लक्षणैः सह लक्ष्याणां वैशद्येना-ध्ययनम् अनिवार्यमतीव महत्त्वपूर्णं चास्ति ।

# अव्ययपदानां भाषावैज्ञानिकं व्याकरणिकञ्च परिशीलनम्

डॉ० वेदप्रकाशः 'वाचस्पतिः'

## १. अस्ति पञ्चमं पदजातम्

/स गच्छति/
/स न गच्छति/
/स एव गच्छति/
/सोऽपि गच्छति/

वाक्यान्येतानि संरचना-स्तरे, अथ च अर्थ-स्तरेऽपि, परस्परं भिद्यन्ते। अर्थ-स्तरे तावत्—प्रथमं वाक्यम् अवधारणात्मकम् *(affirmative)*, द्वितीयं हि निषेधात्मकम् *(negative)*, तृतीयं तु निर्धारणात्मकम् *(determinative)*, चतुर्थञ्च संग्रहार्थकम् *(inclusive)*। संरचना-स्तरे तु—यद्यपि प्रथम-वाक्यस्य कर्तृस्थानीयं /सः/ इति सर्वनामपदं सर्वत्र समानम्, एवञ्च विधेय-स्थानीयं /गच्छति/ इति क्रियापदम् अपि सर्वेष्वभिन्नम्, परम्, तत्राऽस्ति ताभ्याम् उभाभ्यां पदाभ्याम् अतिरिक्तं /न, एव, अपि/ इत्येतेषाम् एकम् एकम् अन्यत् पदम्, यद् उत्तरेषु वाक्येषु उपचितं भवति। तदेव च वाक्यार्थभेदे कारणम् इति स्पष्टम् एव।

अत्र जिज्ञासा—'किञ्जातीयकं स्याद् एतद् अतिरिक्तं पदम्' इति।

'अप्येतन्नामपदं स्यात् ?'

'न। असत्त्वाभिधायकं त्वेतत्।'

'किन्तर्हि सर्वनामपदम् एतत् ?'

'नहि। नैतन्नामपदस्य स्थानम् आपद्यते कर्हिचित्।'

'तर्त्किं विशेषणपदमेतत् ?'

'नैव। नैतत् कदाचिदपि नामपदं विशेषयितुं प्रयुज्यते।'

'तर्हि क्रियापदम् एतत् स्यात् ?'

'नैव, नैव । चेष्टार्थ-राहित्यान्नैतत् क्रियापदेषु गण्यते ।'

'तत्किमिदम् ?'

'पदजातेषु नाम-सर्वनाम-विशेषण-क्रिया-पदेभ्यो व्यतिरिक्तं किञ्चिद् अन्यद् एव एतत् पञ्चमं पदजातम् ।'

अन्यच्च । /कामं गच्छतु सः, कामं गच्छतु सा, कामं गच्छन्तु ते, कामं गच्छ त्वम्, कामं गम्यतां त्वया/; /स त्वरितं गच्छति, सा त्वरितं गच्छति, ते त्वरितं गच्छन्ति, त्वं त्वरितं गच्छसि, मया त्वरितं गम्यते/—एतेषु वाक्येषु /कामम्/ इत्येतत् पदं नामपद-प्रतिरूपकं सद् अपि नाऽत्र नामपद-संज्ञां लभते । तथैव /त्वरितम्/इति एतद् सद् अपि विशेषणपद-प्रतिरूपकं नाऽत्र विशेषणपद-संज्ञं भवति । नेतरत् पदं नामपद-नियोगं विशेषणपद-कार्यं वाऽत्राऽनुतिष्ठति । नामपदे विशेषणपदे च प्रसक्ता लिङ्ग-विभक्ति-वचनाऽनुकूला रूपभेदा अपि नाऽत्र दृश्यन्ते । तस्मान्नामपद-व्यतिरिक्तं विशेषणपद-व्यतिरिक्तं चैतत् पदम् अन्यजातीयकम् एव ।

## २. तत् पञ्चमं पदजातम् अव्ययम् एव

नाम-सर्वनाम-विशेषण-क्रिया-पदेभ्यो व्यतिरिक्तानाम् उपर्युक्तानां /न, एव, अपि, कामम्, त्वरितम्/ इत्यादीनां पद-रूप-रचना सर्वत्र समाना एव तिष्ठति, न क्वचिदपि वाक्ये स्थितानाम् अन्येषां पदानां लिङ्ग - विभक्ति - वचन - वाच्य - पुरुष - बलात् सा भिद्यते—इति दृष्टम् । यस्मात् सर्वास्वपि अवस्थासु एतत् पञ्चमं पदजातं न व्येति, तस्मात् तद् 'अव्ययम्' इत्यन्वर्थ-संज्ञां भजते ।[1]

अव्ययं हि स्थिररूपम् अविकारि च पदम् । लिङ्गं, विभक्तिं, वचनं, वाच्यं, पुरुषं वाऽनुरुध्य नेदं भिन्नरूपताम् एति । यथा नामपदं विशेषणपदं च लिङ्ग-विभक्ति-वचन-कृतां विविधां रूपचर्याम् अङ्गीकरोति, यथा वा क्रियापदं वाच्य-लकार-पुरुष-कृतां बहुविधां रूपचर्याम् आतनोति, न तथाऽव्ययपदं भिन्नास्वपि परिस्थितिषु भिन्नां रूपचर्यां स्वीकरोति । एतद् एव अव्ययस्य अव्ययत्वम् ।

---

१. काशिका-वृत्तिः, १. १. ३७ :
सदृशं त्रिषु लिङ्गेषु, सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु, यन्न व्येति तदव्ययम् ।।

## ३. अव्ययानां परिगणनम्

विपुलो हि परिवारोऽव्ययानाम्। अस्मिन् हि सत्त्ववाचीनि चाऽसत्त्ववाचीनि च, उभयविधान्यपि, पदानि समागच्छन्ति।

एकतस्तु, स्वर्-आदयः[2] शब्दाः, तद्धितप्रत्ययान्ताः[3] कतिपये शब्दाः, कृत्प्रत्ययान्ताः[4] केचिच्छब्दाः, अव्ययीभावसमास-निष्पन्नाश्च[5] शब्दा अस्मिन् समाविशन्ति। अन्यतश्च, सर्वं एव निपात-शब्दा[6] अत्राऽन्तर्गच्छन्ति।




अथ निपातेषु[7] च-आदयः[8], गति-संज्ञकाः[9], कर्मप्रवचनीयाश्च[10] शब्दाः अन्तर्भवन्ति।

उच्चाऽवचेषु विविधेषु अर्थेषु निपतन्ति इति निपाताः[11]। अथवा निपातनाद् एव निपाताः, अर्थाद् धातुमूलाद् व्युत्पत्तिं विनैव रूढिं गताः शब्दाः च-आदयो निपाताः।

---

२. अष्टा०, १.१.३७ : स्वरादि-निपातमव्ययम्।
३. अष्टा०, १.१.३८ : तद्धितश्चाऽसर्व-विभक्तिः।
४. अष्टा०, १.१.३९-४० : कृन्मेजन्तः; क्त्वा-तोसुन्-कसुनः।
५. अष्टा०, १.१.४१ : अव्ययीभावश्च।
६. अष्टा०, १.१.३७ : स्वरादि-निपातमव्ययम्।
७. अष्टा०, १.४.५६ : प्राग्रीश्वरान्निपाताः।
८. अष्टा०, १.४.५७ : चाऽऽदयोऽसत्त्वे।
९. अष्टा०, १.४.६० : गतिश्च।
१०. अष्टा०, १.४.८३ : कर्मप्रवचनीयाः।
११. निरुक्तम्, १.४.१-२ : अथ निपाताः। उच्चाऽवचेष्वर्थेषु निपतन्ति।

निपात-वर्गीयेषु च ये शब्दाः क्रिया-योगे प्रयुज्यन्ते, तेषां 'गतिः' इत्यपि संज्ञा भवति। क्रिया वा, चेष्टा वा, गतिर्वा, इत्यनर्थान्तरम्। क्रियायोगे प्रयुज्यमानत्वाद् एषां 'गतिः' इति संज्ञा साभिप्राया स्यात्।

निपातेषु ये शब्दाः केवलं नामपदानां विभक्ति - विशेष - लक्षितानाम् एव योगे प्रयुज्यन्ते, ते 'कर्मप्रवचनीयाः' इति संज्ञायन्ते। कर्मादि-कारक-विशेष-लक्षितानाम् एव योगे प्रोच्यन्ते इति कारणाद् एते 'कर्मप्रवचनीयाः' इत्यभिहिताः स्युः। यतो हि नाऽस्ति तेषां क्रिया-योगः, अतो न तेषां 'गति'-संज्ञा, न चाऽपि तेषाम् उपसर्ग-संज्ञा, यद्यपि तेषु एकादश शब्दा उपसर्ग-प्रतिरूपका एव।




'अव्यया'ऽन्तर्गते 'निपात'-वर्गे 'गति'-संज्ञकाः शब्दा एते भवन्ति—प्र-आदयः उपसर्गाः[12], ऊरी-आदयः[13], च्वि-प्रत्ययान्ताः[13], डाच्—प्रत्ययान्ताः[13], ध्वन्यनुकरणाः[14], साक्षात्—प्रभृतयः[15], अर्थ-विशेषे च केचित् प्रकीर्णाः[16] शब्दाः। यस्माद् एते क्रिया-योगे एव प्रयुज्यन्ते, तस्माद्धि तेषां 'गतिः' इति संज्ञान्तरं सम्मतम्।

उपसर्गाश्च प्र-आदयो द्वाविंशतिः शब्दाः। उपसृष्टा इति उपसर्गाः, अर्थात् क्रियापदेन अव्यवहितपूर्वं संयुक्ता[17] इति। अन्येभ्यो 'गति'-संज्ञकेभ्यः शब्देभ्यः उपसर्गाणां पृथग्वर्गीकरणं सन्धि-समास-स्वरयोजनादिषु व्याकरण-शास्त्रीय-कार्य-विशेष-विधानाय।

---

१२. अष्टा०, १.४.५८-५९ : प्रादयः; उपसर्गाः क्रिया-योगे।
१३. अष्टा०, १.४.६१ : ऊर्यादि-च्वि-डाचश्च।
१४. अष्टा०, १.४.६२ : अनुकरणं चाऽनिति-परम्।
१५. अष्टा०, १.४.७४ : साक्षात्-प्रभृतीनि च।
१६. अष्टा०, १.४.६३-७३, ७५-७९ : आदराऽनादरयोः सदसती; इत्यादि।
१७. अष्टा०, १.४.८० : ते प्राग् धातोः।




उपरिष्ठात् परिगणिता सर्वा अव्यय-सम्पद् अधोऽङ्कितेन मञ्जूषाऽन्तर्मञ्जूषा-रेखाचित्रेण दृश्य-सुख-बोधाय प्रदर्श्यते—

**१. अव्ययानि** (स्वर्-आदयः, तद्धितान्ताः, कृदन्ताः, अव्ययीभावः)

**२. निपाताः** (च-आदयः)

**३. गति-संज्ञकाः**

(ऊरी-आदयः, च्वि-डाच्-अन्ताः, ध्वन्यनुकरणाः, साक्षात्-प्रभृतयः, केचिदन्येऽर्थ-विशेषे शब्दाः)

**४. उपसर्गाः**

(प्र-आदयः)

**५. कर्मप्रवचनीयाः**

(आ - अनु - अति - अव - आदयः)

(अव्ययाऽन्तर्गतानां वर्ग-उपवर्ग-उपोपवर्गाणां पारस्परिकी स्थितिः)

## ४. अव्ययानां व्युत्पत्तिः

इत ऊर्ध्वम् अव्ययपदानाम् उद्भावक-तत्त्वानि विविच्यन्ते । तानि च बहूनि सन्ति । तेष्वपि अनेकानि मनोरञ्जनकराणि । अथाऽतो निखिलानि तान्यनुक्रमिष्यामः ।

### (i) यादृच्छिकाः शब्दाः

सन्ति केचिद् यादृच्छिकाः शब्दाः, धातु-मूल-रहिताः, निर्वचन-विहीनाः, अज्ञात-व्युत्पत्ति-तत्त्वाः, विभक्ति-रूप-रचनां चाऽनपेक्षमाणाः । व्याकरण-प्रक्रियया व्युत्पत्तिम् अलब्ध्वा, निपातनाद् एव केवलात् सिद्धाः, प्रयोगेण च रूढिं गताः, ते शुद्ध-निपाताः अव्यय-पक्षेऽधिक्रियन्ते । अर्थेऽर्थे प्रयुक्तास्ते वाक्यरचनायाम् उपयुज्यन्ते । अव्ययपद-संज्ञितेषु असत्त्व-वचनेषु तेषु शब्देषु केचिद् अत्र उदाह्रियन्ते—/च *(and)*, न *(no)*, मा *(do not)*, वा *(or)*, तु *(but)*, नु *(whether)*, अथ *(now)*, अपि *(also)*, बत *(alas !)*, इव *(as)*, इति *(this much)*, किल *(indeed)*, खलु *(certainly)*, एव *(only)*, एवम् *(thus)*, नूनम् *(surely)*, ननु *(indeed)*, पुनः *(again)*, पृथक् *(apart)*/, इत्यादि ।

### (ii) नामपद-प्रतिरूपकाः शब्दाः

कतिपयानि नामपदानि जडीभूतं विभक्तिरूपम् आस्थाय अव्यय-पदवीम् आरोहन्ति । तदा तेषां विभक्ति-रूप-भेदो न प्रवर्तते, न च तेषां विभक्त्यर्थेन कश्चिदर्थः । यथा— / नक्तन्दिवम् *(at night and day)*, दिवा *(by day)*, दिष्ट्या *(luckily)*, सहसा *(suddenly)*, ऋते *(except)*, रहसि *(secretly)*, आरात् *(near)*, सपदि *(instantly)*/, इत्यादि ।

### (iii) सर्वनामपद-प्रतिरूपकाः शब्दाः

स्थिररूपतां गतानि सर्वनामपदान्यपि कानिचिद् अव्ययानि इति गृह्यन्ते । यथा— / किम् *(what)*, यद् *(since)*, तद् *(in that case)*, कस्मात् *(why)*, अकस्मात् *(accidentally, without cause)* / , इत्यादि ।

### (iv) विशेषणपद-प्रतिरूपकाः शब्दाः

दृष्टानि कानिचिद् विशेषणपदान्यपि अव्ययतां गतानि । तेषां विभक्तिरूपाणि स्थिरतां गतिहीनतां च यान्ति । यथा— / कष्टम्

*(bad indeed !)*, चिरम् *(for long)*, सत्यम् *(truly)*, सुखम् *(well)*, पूर्वम् *(before)*, नित्यम् *(perpetually)*, विश्रब्धम् *(confidently)*, उच्चैः *(upwards)*, नीचैः *(downwards)*, पश्चात् *(afterwards)*, साक्षात् *(evidently, directly)*, समन्तात् *(from every side)*, अन्तिकम् *(near)*, दूरम् *(far away)*/, इत्यादि ।

(v) क्रियापद-प्रतिरूपकाः शब्दाः

क्रियापदानामपि केषाञ्चित् तिङन्त-रूपाणि कानिचित् स्थिराणि, गतिहीनानि, जडप्रायाणि च भूत्वा अव्ययानि इव व्यवहरन्ति । यथा— 'अस्तिक्षीरा' *(a cow having milk)*, 'अस्तिकायः' *( an ontological category concerned with the nature of existence )*, 'अस्तिनास्ति' *(partly true and partly not)*, 'आस्तिक' *(believing in the existence)*, 'नास्तिक' *(unbeliever)*, 'स्वस्ति' *(well-being, prosperity)*, 'अस्ति सिंहः प्रतिवसति स्म'[१८] *(There lived a lion)*, 'त्वामस्मि वच्मि' *(I tell thee)*, 'आ संसृतेरस्मि जगत्सु जातः',[१९] 'अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः',[२०] 'स्वाहा' *(hail !)*— इत्यत्र तिङन्त - प्रतिरूपकाणि / अस्ति, अस्मि, आह / क्रमशो अस्तित्वार्थे, अहमर्थे वचनार्थे च रूढानि अव्ययतां गतानि ।

(vi) तद्धित-प्रत्ययान्ताः केचिच्छब्दाः

तसिल्[२१] - त्रल्[२२] - दा[२३] - थाल्[२४] - धा[२५] - प्रभृतिभिः तद्धित - प्रत्ययैः निष्पन्नाः शब्दाः नाऽपेक्षन्ते विभिन्न - विभक्तिषु[२६] रूप-रचनाम् । एतादृशाः शब्दा अव्ययवद् व्यवहरन्ति, यथा— / अतः, इतः *(hence)*, ततः, *(thence)*, यतः *(from which place)*, कुतः *(whence)*, अन्यतः

---

१८. पञ्चतं०, ४.
१९. किराता०, ३. ६.                    २०. काव्यप्र०, ३.
२१. अष्टा०, ५. ३. ७ : पञ्चम्यास्तसिल् ।
२२. अष्टा०, ५. ३. १० : सप्तम्यास्त्रल् ।
२३. अष्टा०, ५. ३. १५ : सर्वैकाऽन्य-किं-यत्-तदः काले दा ।
२४. अष्टा०, ५. ३. २३ : प्रकार-वचने थाल् ।
२५. अष्टा०, ५. ३. ४२ : संख्याया विधार्थे धा ।
२६. अष्टा०, १. १. ३८ : तद्धितश्चाऽसर्व-विभक्तिः ।

*(from another)*, सर्वतः *( from all sides )*, अत्र *(here)*, तत्र *(there)*, यत्र *(where)*, कुत्र *(where)*, अन्यत्र *(elsewhere)*, सर्वत्र *(everywhere)* इदानीम्, अधुना *(now)*, तदानीम्, तदा *(then)*, यदा *(when)*, कदा *(when)*, एकदा *(once)*, सर्वदा *(always)*, अन्यदा *(at another time)*, इत्थम् *(in this manner)*, तथा *(in that manner)*, यथा *(in which mannar)*, कथम् *(how)*, सर्वथा *(in every way)*, अन्यथा *(otherwise)*, एकधा *(in one way)*, द्विधा *(in two ways)*, त्रिधा *(in three ways)*, चतुर्धा *(in four ways)*, पञ्चधा *(in five ways)*, शतधा *(in a hundred ways)* /, इत्यादि ।

(vii) कृत्-प्रत्ययान्ता: केचिच्छब्दा:

अपि च केचित् कृत्-प्रत्ययाः क्त्वा - ल्यप् - णमुल् - तुमुन् - प्रभृतयो अव्यय-रूपान् कृदन्त-शब्दान् निष्पादयन्ति, यथा— / कृत्वा *(after doing)*, गत्वा *( after going )*, दृष्ट्वा *( after seeing )*, अनुकृत्य *(after imitating)*, आगत्य *(after coming)*, परिदृश्य *(after looking around)*, कारं कारम् *(after doing again & again)*, गामं गामम् *(after going again & again)*, दर्शं दर्शम् *(after seeing again & again)*, कर्तुम् *(to do)*, गन्तुम् *(to go)*, द्रष्टुम् *(to see)*, लवणङ्कारम् *(after having made it saltish)*, स्वादुङ्कारम् *(after having made it relishing)* /, इत्यादि ।

(viii) अव्ययीभावेन समस्ता: शब्दा:

अव्ययीभाव - समासेन साधिताः शब्दास्तु अव्यय-क्षेत्रं निर्बाधमेव प्रविशन्ति, यथा—/ प्रत्येकम् *(each one)*, प्रतिदिनम् *(daily)*, आसमुद्रम् *(up to the ocean)*, यथाशक्ति *(according to one's capacity)*, अनुरूपम् *(in a corresponding manner)* /, इत्यादि ।

(ix) ध्वन्यनुकरणा: शब्दा:

स्वभाव-सुलभयाऽनुकरण-प्रवृत्त्या प्रेरितो मानवो जगति उत्पद्यमानान् ध्वनीन् अनुकुर्वन् यान् ध्वनि - समूहान् उच्चारयति, तेऽपि विभक्ति-रूप-रचनयाऽनुपकृताः सन्तोऽव्यय-परिवारम् एव प्रविशन्ति । तद्यथा— / खाट्, पटपटा, सिमसिम् /, इत्यादि ।

(x) मनोवेग-व्यञ्जकाः शब्दाः

मनोवेगानाम् उद्रेकात् सहसा विनिःसृताः कण्ठ-ध्वनयोऽपि अव्ययपदेषु अन्तर्भवन्ति । तद्यथा— / अः ! आः ! अहः ! अहह ! अहो ! उ ! हा ! हे ! /, इत्यादि ।

(xi) उपसंहृताः शब्दाः

व्यापारान्तरेष्विव शब्दोच्चारण-व्यापारेऽपि मानवः प्रयत्न-लाघवम् आश्रयितुम् ईहते । तेन कतिपये शब्दाः, शब्दचयाश्च, संक्षेपण-द्वारा लघु-रूपतां प्राप्य अव्ययतां गताः सन्ति । तद्यथा—

(क) संक्षिप्ताः शब्दाः — भवान्<भवत् - प्रातिपदिकाद् 'भोः' इति संक्षिप्तं रूपम्, भगवान्<भगवत् - प्रातिपदिकाच्च 'भगोः' इति संक्षिप्तं रूपम् अवशिष्टम् । एवं संक्षिप्ते / भोः ! भगोः ! / इति पदे सम्बोधन - परके अव्यये सञ्जाते ।

(ख) संक्षिप्ताः शब्दचयाः — प्रयत्न-लाघवाद् एव कारणात् कदाचिद् एकाधिक-शब्दानां प्रथमाक्षराणि (=प्राक्षराणि) समाहृतानि भूत्वा नूतनमेव शब्दं विरचयन्ति । विभक्ति-रूप-रचनाभावात् स शब्दो अव्ययपदेषु निविशति । यथा—यास्को निरुक्ते 'अद्य' इति अव्ययपदस्य 'अस्मिन् द्यवि'[२७] इति निर्वचनं चकार । तेनाऽसौ पदयोरेतयोः प्रथमाक्षराभ्याम् एव नूतनं शब्दं व्युत्पन्नं दर्शयति । तथैव 'ह्यः' इति अव्ययं 'हीने द्यवि' इत्यर्थे 'हीनः कालः'[२७] इति निर्ब्रूते । शब्द-चयानाम् उपसंहारेण, तेषां प्राक्षराभ्याम् उद्भूतानि अव्यय-पदानि अधस्ताद् उदाह्रियन्ते —

| | | | | |
|---|---|---|---|---|
| अस्मिन् द्यवि | > | अ द्य | > | / अद्य / |
| हीने द्यवि | > | ह् य | > | / ह्यः / |
| समाने द्यवि | > | स द्य | > | / सद्यः / |
| शुक्ला दिवसाः | > | शु दि | > | / शुदि / |
| बहुला दिवसाः | > | ब दि | > | / बदि / |

२७. निरुक्त, १. ६१ : अद्याऽस्मिन् द्यवि ··· ह्यो हीनः कालः ।

**अव्ययपदानि**



←— यादृच्छिकाः शब्दाः —→

←— नामपद - प्रतिरूपकाः शब्दाः —→

←— सर्वनामपद - प्रतिरूपकाः शब्दाः —→

←— विशेषणपद - प्रतिरूपकाः शब्दाः —→

←— क्रियापद - प्रतिरूपकाः शब्दाः —→

←— तद्धित - शब्दाः —→

←— कृदन्त - शब्दाः —→

←— अव्ययीभाव - समस्ताः शब्दाः —→

←— ध्वन्यनुकरणाः शब्दाः —→

←— मनोवेग - व्यञ्जकाः शब्दाः —→

←— उपसंहृताः शब्दाः —→

( अव्ययपदानाम् उद्भावक-तत्त्वानि )

## ५. अव्ययानां प्रयोगाः

अव्ययपदानि वाक्यरचना - विधौ विविधं व्यवहरन्ति । तेषां विविधां व्यापार-क्षमताम् अनुरुध्य, तानि पञ्चधा विभज्येरन्, तद्यथा — 'पूर्वसर्गाः' (*Prefixes*) इति प्रथमो वर्गः, 'आभिनामिकानि' (*Adnominals*) इति द्वितीयो वर्गः, 'क्रियाविशेषणानि' (*Adverbs*) इति तृतीयो वर्गः, 'कार्दन्तिकानि' (*Participles*) इति चतुर्थो वर्गः, 'निपाताः' (*Particles*) इति च पञ्चमो वर्गः । एवं वर्गीकृतानि अव्ययपदानि सोदाहरणम् अधस्ताद् व्याख्यास्यन्ते—

**(i) पूर्वसर्गाः (Prefixes)**

क्रियापदैः सह अव्यवहित-पूर्वं[२८] योजितानि अव्ययपदानि पूर्वसर्गाणां नियोगम् अनुतिष्ठन्ति । प्र-आदय उपसर्गाः, ऊरी-आदयः, च्वि-प्रत्ययान्ताः,

---

२८. अष्टा०, १.४.८० : ते प्राग् धातोः ।

डाच्-प्रत्ययान्ताः, ध्वन्यनुकरणाः, साक्षात्-प्रभृतयः, केचिदन्ये च अर्थविशेषे परिगणिताः शब्दा 'अव्यय'-वर्गे 'गति'-संज्ञकाः सन्तः क्रियापदैः सह अव्यवहितपूर्वं समस्ता भवन्ति ।

**(क) एकैक उपसर्गः श्लिष्टः** — *'करोति' (he does)* इति क्रियापदेन सह —— / अति-/करोति *(exceeds)*, /अधि-/करोति *(is authorised)*, /अनु-/करोति *(imitates)*, /अप-/करोति *(harms)*, /उप-/करोति *(favours)*, /उपस्-/करोति*(elaborates)*, /दुष्-/करोति *(acts wrongly)*, /नि-/करोति *(wrongs)*, /निष्-/करोति *(drives away)*, /परा-/करोति *(disregards)*, /परि-/करोति *(surrounds)*, /परिष्-/करोति *(polishes)*, /प्र-/करोति *(commences)*, /प्रति-/करोति *(remedies)*, /वि-/करोति *(alters)*, /सं-/कुरुते *(manufactures)*, /संस्-/कुरुते *(refines)* इत्यादि ।

**(ख) एकाधिका उपसर्गाः श्लिष्टाः** — /अप-आ-/करोति *(dispels)*, /उप-आ-/करोति/ *(delivers)*, /निर्-आ-/ करोति *(repudiates)*, / प्रति-उप-/करोति *(returns an obligation)*,/वि-नि-/करोति *(hurts)*, /वि-प्र-/करोति *(troubles)*, /वि-आ-/करोति *(makes distinct)*, /उद्-आ-/हरति *(examplifies)*, /प्रति-उद्-आ-/हरति *(cites as a counter-example)*, इत्यादि ।

**(ग) ऊरी-आदयः श्लिष्टाः** — / ऊरी-/करोति *(accepts)*, /उरी-/ /उररी-/करोति *(accepts)*, /आविर्-/भवति *(appears)*, /आविष्-/ करोति *(manifests)*, /प्रादुर्-/भवति *(comes into existence)*, /प्रादुष्-/ करोति *(displays)*, इत्यादि ।

**(घ) च्वि-प्रत्ययान्ताः श्लिष्टाः** — / शुक्ली-/भवति *(becomes white)*, / शुक्ली- /करोति *(whitens)*, / दूरी-/भवति *(becomes distant)*, / दूरी- /करोति *(drives away)*, / प्रमाणी-/करोति *(regards as authority)*, इत्यादि ।

**(ङ) डाच्-प्रत्ययान्ताः श्लिष्टाः** — / पटपटा- /करोति *(makes the sound pat - pat)*, / सिमसिमा- / करोति *(make the sound sim - sim)* ।

(च) ध्वन्यनुकरणाः शब्दाः श्लिष्टाः — /खात्-/करोति (*imitates the sound of clearing throat*), /फूत्-/करोति (*imitates the sound of blowing*), इत्यादि ।

(छ) साक्षात् - प्रभृतयः श्लिष्टाः — / साक्षात्-/करोति (*sees with one's own eyes*), / मिथ्या- / करोति (*falsifies*), / नमस्- / करोति (*salutes*), इत्यादि ।

(ज) केचिद् अन्ये शब्दाः श्लिष्टाः — /सत्-/करोति ( *treats with respect* ), /अलं-/करोति ( *decorates* ), / अन्तर्-/भवति (*is included*), / पुरस्-/करोति (*places in front*), / अस्तं- / गच्छति (*sets, disappears*), / तिरस्-/करोति (*despises*) /, इत्यादि ।

(ii) आभिनामिकानि (Adnominals)

विभक्ति - विशेषेण अधिकृतस्य नामपदस्य योगे प्रयुक्तम् अव्ययम् 'आभिनामिकम्' इति । नेदं पूर्वसर्गवत् श्लिष्यते नामपदेन सह, प्रत्युत पृथगेव तिष्ठति एतत् पूर्वत्र वाऽधिकृताद् नामपदात् परत्र वा । / अति, अधि, अनु, अप, अपि, अभि, आ, उप, परि, प्रति, सु / — इत्येकादश उपसर्ग-प्रतिरूपकाः कर्मप्रवचनीयाः, अन्यानि च कानिचिद् अव्ययानि आभिनामिक-नियोगं वहन्ति । तेषु कानिचिद् अत्र उपलक्षणेन उदाह्रियन्ते—

/ अति / (*beyond, surpassing*) — 'इयं रूपेण अप्सरसोऽति' । 'इदं नः प्रथितं कुलम् । अति अन्यान् पृथिवीपालान् पृथिव्याम् अधिराज्यभाक्[२९] ।

/ अधः / (*under*) — 'वृक्षाद् अधः ।'[३०] 'नीवारा भ्रष्टास्तरूणाम् अधः ।'[३१]

/ अधि / (*ruling, over, under*) — 'अधि पञ्चालेषु ब्रह्मदत्तः ।' 'अद्यैव प्रहारवर्मणि अधि विदेहा जाताः ।'[३२]

---

२९. महाभारत, १.११०.१. ३०. पञ्चतं० ।

३१. शाकुं० । ३२. दशकु० ।

| अनु । *(after)* — 'अनु पाणिनिम् अन्ये वैयाकरणाः' । 'अनु अर्जुनं योद्धारः ।'[33] 'जगामाऽनु पुरोहितम् ।'[34] 'अहमपि तावनु प्रस्थितः'[35] । 'यस्त्वां द्वेष्टि स मां द्वेष्टि, यस्त्वाम् अनु स माम् अनु'[36] ।

| अन्तः | *( within )* — 'गृहेऽन्तः ।' 'श्रृणु यादन्तर्वेश्मनि ।'[37] 'निवसन्नन्तर्दारुणि वह्निः ।'[38]

| अन्तरा | *(between)* — 'अन्तरा त्वां च मां च कमण्डलुः' । 'त्वां मां च अन्तरा महदन्तरम् ।'

| अन्तरेण | *(with regard to)* — 'किन्नु खलु माम् अन्तरेण चिन्तयति गुरुः ?' 'देवीं वसुमतीम् अन्तरेण महद् उपालम्भनम् अस्या गतोऽस्मि ।'[39]

| अप | *(away)* — 'अप त्रिगर्तेभ्यो वृष्टो देवः ।'

| अभि | *(towards)* — 'अग्निम् अभि शलभाः पतन्ति ।'[40] 'वीतमन्युर्गौतमो माम् अभि ।'[41]

| अभितः | *(towards, hard by)* — 'सीता पुरस्ताद् व्रजतु, त्वम् एनाम् अभितो व्रज ।'[42] 'राजानम् अभितः स्थितः परिजनः ।'

| आ | *(from)* — 'आ मूलात् श्रोतुमिच्छामि ।'[43]

| उभयतः | *(on both sides)* — 'उभयतो राजमार्गं फलिनो वृक्षाः ।'

| परि | *(around)* — 'वृक्षं परि विद्योतते विद्युत् ।'

| परितः | *(around)* — 'दुर्गं परितः परिखा ।' 'तं सामन्ताः परितो भ्रेमुः ध्रुवं ग्रहगणा इव ।'[44]

---

३३. काशिका, १.४.८६.
३४. रामा०, २.९०.३.
३५. पञ्चतं० ।
३६. महाभारत, ३.१२.४५.
३७. मनु०, ७. २२३.
३८. पञ्चतं०, १.३२.
३९. शाकुं०, ५.
४०. काशिका०, २.१.१४.
४१. कथास०, १.१०.
४२. रामा०, २.१०३.२१.
४३. शाकुं०, १.
४४. कथास०, १८. ५.

| प्रति | (*towards*) — 'स्वां प्रति राजधानीं प्रस्थापयामास वशी वसिष्ठः ।'[४५] (*regarding*) 'चन्द्रोपरागं प्रति तु केनापि विप्रलब्धाऽसि ।'[४६] (*in place, in exchange*) — 'प्रद्युम्नः कृष्णात् प्रति ।'[४७] 'तिलेभ्यः प्रति यच्छति माषान् ।'[४७]

(iii) क्रियाविशेषणानि (Adverbs)

क्रियाविशेषणं नाम अव्ययं क्रियां विशिनष्टि । क्रियाया निष्पत्तौ स्थिति-विशेषं व्याचक्षाणम् इदं पदं वाक्ये क्रियापदात् पृथग् एव तिष्ठति, न तेन सह श्लिष्यते, न चाऽपि क्रियाया अर्थं विकरोति, अत एवाऽस्य कार्यं पूर्वसर्ग - कार्याद् भिन्नम् । आभिनामिकाद् अपि क्रियाविशेषणं भिद्यते, यतो हि नैतद् विभक्ति-विशेष-लक्षितस्य नामपदस्य योगे प्रयुज्यते, न चाऽपि विभक्त्यर्थं विशेषयति । क्रियाविशेषणेन अव्ययेन तु क्रिया-निष्पत्तेः स्थानं (*place*), कालः (*time*), प्रकारो (*manner*), विधा (*fold, ways*), अभ्यावृत्तिः (*repetitive manner*), वीप्सा (*distributively successive manner*), हेतुः (*cause*), सादृश्यं (*likeness*), परिणतिः (*transformation*), प्रकर्षो (*intensity*) वा निर्दिश्यते । क्रमशः तान्यत्र उदाहरिष्यामः —

(क) **स्थान-परकम्** — अपादानार्थक - तसिल् - प्रत्ययान्ताः, अधिकरणार्थक - त्रल् - प्रत्ययान्ताश्च शब्दाः, अथापि दिग्देशवाचकानि अव्ययानि स्थान-परकेषु अव्ययेषु गण्यन्ते, यथा—/अतः, इतः (*hence*), कुतः, ततः, यतः, सर्वतः, पृष्ठतः ; अत्र (*here*), अमुत्र, कुत्र, तत्र, यत्र, सर्वत्र / , इत्यादि ।

(ख) **काल-परकम्** — दा - तद्धित - प्रत्ययान्तानि, काल - वाचकानि च अव्ययानि काल - परकं क्रियाविशेषणम् उपस्थापयन्ति, तद्यथा — /अधुना (*now*), अद्य, अन्येद्युः, इदानीम्, उभयेद्युः, परेद्युः, पूर्वेद्युः, श्वः, ह्यः /, इत्यादि ।

(ग) **प्रकार-परकम्** — थाल् - तद्धित - प्रत्ययान्तानि अव्ययानि प्रकार-परकं क्रियाविशेषणं प्रस्तुवन्ति / — यथा (*in which manner*), तथा, कथम्, इत्थम् /, इत्यादि ।

---

४५. रघुवं०, २.७०. ४६. मुद्रा० १. ४७. सि०-कौ० ।

(घ) **विधा-परकम्** — धा - तद्धित-प्रत्ययान्तानि संख्यापदानि विधा-परकं क्रियाविशेषणं रचयन्ति, तद्यथा — / एकधा (*in one way*), द्विधा, त्रिधा, चतुर्धा, पञ्चधा, शतधा, सहस्रधा, अनेकधा, बहुधा /, इत्यादि ।

(ङ) **अभ्यावृत्ति-परकम्** — क्रियाया आभ्यावृत्तिम्, अर्थाद् वारं-वारताम्, सूचयद्भिः सुच् - कृत्वसुच् - प्रभृतिभिः तद्धित - प्रत्ययैः निष्पन्नानि संख्यापदानि अभ्यावृत्ति - परकाणि क्रियाविशेषणानि भवन्ति, तद्यथा — /द्विः, द्विकृत्वः (*twice*), शतकृत्वः, सहस्रकृत्वः, बहुकृत्वः, सकृद् (*once*), असकृद् /, इत्यादि ।

(च) **वीप्सा-परकम्** — संख्यावाचकानि परिमाणवाचकानि च पदानि वीप्सार्थे शस् - तद्धित - प्रत्ययान्तानि भूत्वा वीप्सापरकाणि क्रिया-विशेषणानि जायन्ते, तद्यथा — / एकशः (*one by one*), द्विशः (*in twos*), त्रिशः (*in threes*), शतशः (*in hundreds*), सहस्रशः (*in thousands*), अल्पशः (*in small quantity*), स्तोकशः (*sparingly*), बहुशः (*abundantly*), भूरिशः (*plentifully*)/, इत्यादि ।

(छ) **हेतु-परकम्** — कारण - कार्य - सम्बन्धं दर्शयन्ति अव्ययानि हेतुपरकाणि क्रियाविशेषणानि सन्ति, यथा — / यदि (*if*), तर्हि, कर्हि, यर्हि, यस्मात्, तस्मात्, कस्मात्, यतः, ततः, कुतः/, इत्यादि ।

(ज) **सादृश्य-परकम्** — सादृश्यार्थकं वत् - प्रत्ययं धारयत् पदं सादृश्य-परकं क्रियाविशेषणम् इति आचरति, तद्यथा — / तद्वत् (*like that*). मनुष्यवत्/, इत्यादि ।

(झ) **परिणति-परकम्** — अभूत-तद्भावे अर्थे, तदधीन-वचने च साति-प्रत्ययान्तानि अव्ययानि परिणति-परकं क्रियाविशेषणम् उद्भावयन्ति, तद्यथा— / आत्मसात् (*in one's own possession*), अग्निसात् (*consigned to fire*), भस्मसात् (*reduced to ashes*), राजसात् (*in the possession of a king*), अर्थिसात् (*at the disposal of beggars*), पात्रसात् (*at the disposal of a deserving person*), उदकसात् (*changed into water*)/, इत्यादि ।

(ञ) **प्रकर्ष-परकम्**— क्रिया, क्रियाविशेषणमेव वा प्रकर्षयितुं विहितौ, तुलनार्थे तरप्+आम् > /तराम्/, अतिशयार्थे तमप्+आम् > /तमाम्/ इति च प्रत्ययौ प्रकर्ष-परकौ एव ।

**साधारणार्थे** — पचति *(he cooks)*, पठति *(he reads)*, सीदति *(he feels distressed)*, व्यथयति *(it disturbs)*, हसिष्यति *(he will laugh)*, अलभत *(he obtained)*, प्रातः *(in the morning)*, उच्चैः *(high)*, अति *(much)*, 'सीदति मे हृदयम्'[४८] *(my spirits are low)*।

**तुलनार्थे प्रकर्षे** — पचतितराम् *(he cooks better)*, पठतितराम् *(he reads much)*, सीदतितराम् *(he feels more distressed)*, व्यथयतितराम् *(it disturbs more)*, हसिष्यतितराम् *(he will laugh more)*, अलभततराम् *(he obtained in a higher degree)*, प्रातस्तराम् *(early in the morning)*, उच्चैस्तराम् *(higher)*, अतितराम् *(more)*, 'हृदयं सीदतेतराम्'[४९] *(my spirits are lower)*, 'प्रभवतितरां भुजङ्ग-शिशोर् विषम्'[५०] *(even of an infant-snake the poison is rather strong)*, 'विनाशो लब्धस्य व्यथयतितरां, न त्वनुदयः'[५१] *(to loose something gained before grieves more than having gained nothing at all)*, 'अतितरां कान्तम्'[५२] *(exceedingly charming)*।

**अतिशयार्थे प्रकर्षे** — पचतितमाम् *(he cooks the best)*, पठतितमाम् *(he reads much more)*, प्रातस्तमाम् *(very early in the morning)*, उच्चैस्तमाम् *(highest)*, अतितमाम् *(much more, the most)*।

### (iv) कार्दन्तिकानि (Participles)

क्त्वा - ल्यप् - णमुल् - तुमुन् - प्रभृतीनां कृत्-प्रत्ययानां योगेन धातुभ्यो निष्पन्नानि पदानि नूनम् अव्ययानि एव भवन्ति, यतो हि नैतानि रूपभेदं वहन्ति सुप्-कृतं वा तिङ्-कृतं वा। पूर्वकालिकं वा परकालिकं वा अवान्तर-क्रिया-व्यापारम् एव सूचयन्ति एतानि पदानि, न तु मुख्यक्रिया-व्यापारम्। अत एव कृतेऽपि धातु-निष्पन्नानां कार्दन्तिकानाम् अव्ययानां प्रयोगे वाक्यं मुख्य - क्रिया - व्यापार-विषये साकांक्षम् एव, ततश्च अपूर्णम् एव तिष्ठति। अनुयोगि-क्रियाणि एतानि अव्ययपदानि अनुयोगि-वाक्यांशं विरचय्य वाक्यं वाक्यार्थञ्च भृशम् उपकुर्वन्ति। कतिचिद् एव उदाहरणानि अत्र पर्याप्तानि स्युः —

---

४८. कादं०।
४९. रामा०, २.६४.७२.
५०. विक्रमो०, ५.
५१. प्रबोध०, ४.
५२. मालवि०, २.

'असौ गृहं गत्वा व्यश्राम्यत् ।'

'मित्रम् आहूय उवाच ।'

'पत्रं श्रावं श्रावं समतुष्यत् ।'

'स्नातुं नदीम् अवातरत् ।'

'स्वादुङ्कारम् ओदनं भुङ्क्ते ।'

'लवणङ्कारं दधि भुङ्क्ते ।' इत्यादि ।

(v) निपाताः (Particles)

निपाता अल्पाल्पाक्षराः प्रायोऽसत्त्ववाचिनो अव्ययाऽन्तर्गता उच्चावचार्थाः शब्दाः। वाक्ये एषां विनियोगः सुतराम् अन्येभ्यो भिद्यते । यतो हि नैते क्रियापदैः सह श्लिष्यन्ते, अतो भिन्ना एते पूर्वसर्गेभ्यः । यस्माद् एते विभक्ति - विशेष - लक्षितानि नामपदानि नाऽधिकुर्वन्ति, अत एव भिन्ना आभिनामिकेभ्योऽपि । क्रियाया निष्पत्तौ स्थिति - विशेषम् अपि एते न वर्णयन्ति, तस्मान्नैते क्रियाविशेषण-कोटौ गच्छन्ति । धातु-जनितं कृत्प्रत्यय-निष्पन्नं च कार्दन्तिकं लक्षणमपि एतेषु न लभ्यते । निपातास्तु संग्रहे, विग्रहे, निश्चये, अनुमतौ, निषेधे, प्रश्न, हेतौ, सादृश्ये, सम्बोधने, भावोद्रेके, वाक्यपूरणे च प्रयुज्यन्ते । स्तोकेनैव एतेऽधस्ताद् उदाह्रियन्ते—

(क) संग्रहार्थकाः (Conjunctives)

/ च / 'रामो लक्ष्मणश्च ।' 'मनो निष्ठाशून्यं भ्रमति च, किमप्यालिखति च ।'

/ अथ / 'भीमोऽथाऽर्जुनः ।'

/ अपि / 'प्रमदानां त्वमपि दुःखं न जानासि ।'

(ख) विग्रहार्थकाः (Disjunctives)

/ वा / 'वायुर्वा दहनो वा ।' 'निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु '।

/ अह / 'अयमह इदं करोतु, अयमिदम् ।'

/ अथ / 'शब्दो नित्योऽथाऽनित्यः ?'

/ उत / 'स्थाणुरयम्, उत पुरुषः ?'

/ पुनः / 'तदेव पंचवटीवनम्, स एवाऽऽर्यपुत्रः, मम पुनर्मन्दभाग्याया दृश्यमानमपि सर्वमेतन्नाऽस्ति ।'

/ तु / 'मृष्टं पयो, मृष्टतरं तु दुग्धम् ।'

/ नु / 'स्वप्नो नु, माया नु, मतिभ्रमो नु ।'

(ग) निश्चयार्थकाः (Emphatic)

/ खलु / 'अनुत्सेकः खलु विक्रमालंकारः ।' 'त्वदधीनं खलु देहिनां सुखम् ।'

/ किल / 'इदं किलाऽव्याज-मनोहरं वपुः ।' 'द्वावपि किलाऽऽगमिनो प्रयोग-निपुणौ च ।'

/ नूनम् / 'स नूनं तव पाशांश्छेत्स्यति ।'

/ हि / 'प्रयोग-प्रधानं हि नाट्यशास्त्रम्, किमत्र वाग्व्यवहारेण ?' 'कामार्ता हि प्रकृति-कृपणाश्चेतनाऽचेतनेषु ।'

/ एव / 'अर्थोष्मणा विरहितः पुरुषः स एव ।'

(घ) अनुमत्यर्थकाः (Permissives)

/ आम् / 'आम्, कुर्मः ।' 'आम्, देव्याः पार्श्व - गतोऽसौ जनः चित्रे दृष्टः ।'

/ ओम् / 'द्वितीयश्चेद् ओमिति ब्रूमः ।'

/ एवम् / 'एवमेतत् ।' 'एवमस्तु ।'

/ वाढम् / 'वाढम्, एष मे स्थिरो निश्चयः ।'

(ङ) निषेधार्थकौ (Negatives)

/ न / 'योगिनां न किमप्यगम्यम् ।'

/ मा / 'पापे रतिं मा कृथाः ।'

(च) प्रश्नार्थकौ (Interrogatives)

/ किम् / 'तत्रैव किं न चपले प्रलयं गताऽसि ?'

/ अपि / 'अपि कुशली भवान् ?'

(छ) हेत्वर्थका: (Argumentatives)

/ हि / 'पर्वते वह्निः, धूमो हि दृश्यते।'

/ ननु / 'ननु चेतनमपि कार्य-कारणं स्वामि - भृत्य - न्यायेन भोक्तु-रुपकरिष्यति।'

/ यद् / 'प्रियमाचरितं लते त्वया मे, यद् इयं पुनरप्यपांगनेत्रा परिवृत्तार्धमुखी मयाऽद्य दृष्टा।'

/ तद् / 'राजपुत्रा वयम्, तद् विग्रहं श्रोतुं नः कुतूहलम्।'

(ज) सादृश्यार्थकौ (Comparatives)

/ इव / 'संसारोऽर्णव इव।'

/ एवम् / 'यद्येवम्।'

(झ) सम्बोधनार्थका: (Vocatives)

/ अंग / 'अंग, कच्चित् कुशली तातः ?'

/ हे / 'हे कृष्ण, हे यादव, हे सखे।'

/ अयि / 'अयि जीवितनाथ, जीवसि।'

/ अरे / 'आत्मा वा अरे द्रष्टव्यः, श्रोतव्यः।'

/ रे / 'शृणु रे पान्थ।'

(ञ) भावोद्रेक-बोधका: (Interjections)

/ आ / 'आ ! एवं किलासीत्।'

/ आम् / 'आम् ! ज्ञातम्।'

| आः | 'आः ! कष्टम् ।' 'आः ! कथमद्यापि राक्षस-त्रासः ?'

| अये | 'अये ! देवपादपद्मोपजीविनोऽवस्थेयम् ।'

| अहो | 'अहो ! विचित्रता कुसुमानाम् ।'

| अहह | 'अहह ! दारुणो वज्र-निर्घातः ।'

| हा | 'हा ! हा ! देवि, स्फुटति हृदयम् ।'

| हन्त | 'हन्त ! अर्धमवसितं भारस्य ।'

| वत | 'क्व वत ! हरिणकानां जीवितं चाऽतिलोलम् ।'

| धिक् | 'धिग् ! अर्थाः कष्ट-संश्रयाः ।'

(ट) वाक्य-पूरणाः (Expletives)

| उ | 'किमु यत्र चतुष्टयम् ?'

| वै | 'आपो वै नरसूनवः ।'

| ह | 'तस्य ह पर्वत-नारदौ गृह ऊषतुः ।'




( प्रयोग-दृशा अव्ययपदानां वर्गीकरणम् )

○ :

पत्रिका	विश्व-संस्कृतम्
प्राकालिकता	त्रैमासिकम्
प्रकाशन-मासाः	चैत्र (मार्च), आषाढ़ (जून), आश्विन (सितम्बर), पौष (दिसम्बर)

संस्थापक-सञ्चालक-सम्पादकः	स्व आचार्यः डा. विश्वबन्धुः
शास्त्री, एम.ए., एम. ओ. एल., डी. लिट्., ओ. डि. ए. (फ्रांस), के-टि, सि. टि. (इटली)

●

सञ्चालकः	प्रो. एस्. भास्करन् नायरः,
बी. ए. (आनर्स), एम. ए.

सम्पादकः	डॉ. वेदप्रकाशः 'वाचस्पतिः'
विद्यावाचस्पतिः, शास्त्री, एम. ए., एम. ओ. एल, पी-एच.डी., पी. ई. एस. (से.-नि.)

सहायकसम्पादकः	श्री पृथुरामः शास्त्री

परामर्शकौ	डॉ० बहादुरचन्द्रः छाबड़ा
प्रा० इन्द्रदत्त उनियालः

प्रकाशकः	डॉ. वेदप्रकाशः

●

प्रकाशन-स्थानम्	विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्,
साधु-आश्रमः, होश्यारपुरम्-१४६ ०२१ (पंजाब, भारत)

●

मुद्रण-स्थानम्	वी. वी. आर. आई. प्रेस, साधुआश्रम, होश्यारपुर

●

शुल्कम्	वार्षिकम् : भारते १२); विदेशे $ 8
आजीवनम् : भारते व्यक्तिभ्यः १००) मात्रम्
संस्थाभ्यः १५०) मात्रम्

VISHVA-SAMSKRITAM
Printed & Published by DR VEDA PRAKASHA.
at V. V. R. I. Press, Hoshiarpur
for
Vishveshvaranand Vedic Research Institute,
P. O. Sadhu Ashram, Hoshiarpur—146 021 (Pb., India)
Editor: Dr. VEDA PRAKASHA